डिसेम्बर. Stava Mala Complete १९०२.

॥ श्रीः ॥

# काव्यमाला

नाम

## नानाविधप्राचीनकाव्यनाटकचम्पू-भाणप्रहसनच्छन्दोलंकारादि-साहित्यग्रन्थानां संग्रहः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-केदारनाथकृपाङ्गीकृतशोधनकर्मणा लवपुरओरिएण्टल-कॉलेजमुख्याध्यापकमहामहोपाध्यायपण्डितशिवदत्त-शर्मणा, मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मज-काशीनाथशर्मणा च संशोधितः ।

## १९२

साधुर्जनः पश्यतु काव्यमालामित्यर्थयामो जगदीश तुभ्यम् ।
कदापि मास्यां पततु प्रचण्डा शनैश्चरस्येव खलस्य दृष्टिः ॥

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरै-रङ्कयित्वा प्राकाश्यं नीतः ।

मूल्यं १० आणकाः ।

अस्य वार्षिकं मूल्यं रूपकषट्कम् । बहिर्ग्रामवासिभ्यो नेयव्ययार्थं रूपकपादत्रयसहितम् ।

# विषयानुक्रमः ।

# KÂVYAMÂLÂ. 84.



THE

# STAVA-MÂLÂ

OF

# S'RÎ-RÛPADEVA.

**With the Commentary of S'rî-jîvadeva.**



Rupa Gosvamin

EDITED BY

PANḌIT BHAVADATTA S'ÂSTRÎ,

**2nd Panḍit, Government College, Ajmer,**

**Son of**

MAHÂMAHOPÂDHYÂYA PANḌIT S'IVADATTA,

**Head Panḍit and Superintendent, Sanskṛit Department,**

**Oriental College, Lahore,**

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRṆAYA-SÂGARA' PRESS.

BOMBAY.

1903.

*Price 2 Rupees.*

काव्यमाला. ८४.

श्रीरूपदेवविरचिता

# स्तवमाला।

श्रीजीवदेवविरचितभाष्यसमेता।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनय-
साहित्योपाध्यायकेदारनाथकृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधिता।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता।

१९०३



मूल्यं रूप्यकद्वयम्।

# काव्यमाला ।

## श्रीरूपदेवविरचिता

## स्तवमाला ।

[1] श्रीजीवदेवविरचितभाष्यसमेता ।

### प्रथममष्टकम् ।

श्रीकृष्णचैतन्यो जयति ।

श्रीमदीश्वररूपेण रसामृतकृता कृता ।
स्तवमालानुजीवेन जीवेन[2] समगृह्यत ॥ १ ॥

श्रीरूपकृतान् श्रीचैतन्यादिस्तवान्मालात्मना ग्रथितुं श्रीजीवः प्रतिजानीते—श्रीति। जीवेन स्तवमाला समगृह्यत संगृहीता। पृथक्पृथक्स्थिताः स्तवाः क्रमात्पङ्क्तीकृता इत्यर्थः। 'माला तु पङ्क्तौ पुष्पादिदामनि' इति मेदिनी। श्लेषेण कुसुमभूतानां तेषां माला स्रग्विरचिता इत्यर्थः। तेन भक्तजनैरतिप्रीत्या कण्ठेषु(षु) धार्येति व्यज्यते। सा कीदृगित्याह—श्रीमदिति। श्रीमांश्चासौ..................मदीश्वरश्च...............यो रूपस्तेन कृता वर्णिता। तस्यासाधारणं धर्ममाह—रसेति। हरि[3]भक्तिरसामृतसिन्धोः कर्त्रा इत्यर्थः। जीवेन कीदृशेनेत्याह—अन्विति। अनुगत्य जीवतीत्यनुजीवस्तेन तदनुगामिना। तच्छिष्येणेत्यर्थः। आदिमेन पदेनात्र मङ्गलं कृतं तस्य मङ्गलस्वरूपत्वादिति बोध्यम् ॥

सनातनं रूपमिहोपदर्शयन्नानन्दसिन्धुं परितः प्रवर्धयन् ।
अन्तस्तमःस्तोमहरः स राजतां चैतन्यरूपो विभुरद्भुतोदयः ॥ २ ॥
देवाचार्यं यं विदुः सत्कवित्वे पाराशर्यं तत्त्ववादे महान्तः ।
शृङ्गारार्थव्यञ्जने व्याससूनुं स श्रीरूपः पातु नो भृत्यवर्गान् ॥ ३ ॥

---

१. 'विद्याभूषणरचिते स्तवमालाभूषणे भाष्ये। परितुष्यतु वनमाली वररुचिशाली बतैतस्मिन् ॥' इति टीकासमाप्तिपद्यतः 'विद्याभूषण' इत्यप्यस्य नामान्तरं भवेत्. २. टीकाया आरम्भपद्यतः 'श्रीरूपदेवः करुणैकसिन्धुः स्तवालिमेतां यदि नाकरिष्यत्' इति समाप्तिश्लोकतश्च श्रीरूपदेवकृता स्तवावल्येवानेन मालारूपेण योग्यक्रमशो निबद्धा भवेदिति. ३. एतन्नामको ग्रन्थस्तत्कर्त्रा.

लब्धसनातनरूपं जीवं यो भजति भक्तिमाञ्जीवः
तस्य सनातनरूपः स नन्दपुत्रो हरिः सुलभः ॥ ४ ॥
श्रीरूपदेववचसां ध्वनिभेदा ये विभान्ति भूयांसः।
कस्ताञ्शक्तो वक्तुं तस्मात्संक्षेपतः प्रकाश्यास्ते ॥ ५ ॥
भाष्येऽस्मिन्साधवः प्रीताः स्तवमालाविभूषणे।
कृष्णानन्दकृपासिद्धे भवेयुः श्रमवेदिनः ॥ ६ ॥

अथ स्तवग्रथनक्रममाह—पूर्वमित्यादिभिः।

पूर्वं चैतन्यदेवस्य कृष्णदेवस्य तत्परम्।
श्रीराधायास्ततः कृष्णराधयोर्लिख्यते स्तवः ॥ ७ ॥

कृष्णश्च राधा च तयोर्युग्मीभूतयोः स्तवो लिख्यत इति संबन्धः ॥

बिरुदावली ततो नानाच्छन्दोभिः केलिसंहतिः।
ततश्चित्रकवित्वानि ततो गीतावली ततः ॥ ८ ॥

बिरुदेति। नवाक्षरोऽयं पादः। विषमाक्षरपादत्वात्पद्येऽस्मिन् गाथाछन्दः। तस्य विशेषस्तु गीतावलीभाष्ये लेख्यस्तत्रैव द्रष्टव्यः। नानाच्छन्दोभिर्विभिन्नलक्षणैरष्टादशभिः। केलिसंहतिर्नन्दोत्सवाद्या कंसवधान्ता लीलावितति। चित्रकवित्वानि द्य(द्व्य)क्षरादीनि चक्रबन्धादीनि च। गीतावली नन्दोत्सवादिचरितसंबद्धा गानश्रेणिः ॥

ललितायमुनावृष्णिपुरीश्रीहरिभूभृताम्।
वृन्दाटवीकृष्णनाम्नोः क्रमेण स्तवपद्धतिः ॥ ९ ॥

ललितेति। ललिता च यमुना च वृष्णिपुरी श्रीमथुरा च श्रीहरिभूभृच्च गोवर्धनाख्यो गिरिराजस्तेषाम्। वृन्दाटवी च कृष्णनाम च तयोः स्तवपद्धतिः स्तोत्रश्रेणिः। 'पद्धतिः पदपङ्क्तौ च' इति विश्वलोचनकारः। 'पर्याया लिखिता येऽत्र नानार्थाश्च न ते पुनः। बाहुल्यभयतो लेख्या विचिन्त्यास्ते ततस्ततः' ॥

तत्र चैतन्यदेवस्य। तत्रादौ श्रीचैतन्याष्टकत्रयं व्याख्यास्यामः—श्रीवृन्दारण्यस्थितः श्रीरूपः पुरुषोत्तमक्षेत्रस्थं चैतन्यं 'कृष्णवर्णम्–' इत्यादिशास्त्रात्तदनुग्रहाच्च साक्षादीश्वरमनुभूय तत्त्वेन वर्णयंस्तद्दर्शनमाशास्ते—

सदोपास्यः श्रीमान्धृतमनुजकायैः प्रणयितां
वहद्भिर्गीर्वाणैर्गिरिशपरमेष्ठिप्रभृतिभिः।
स्वभक्तेभ्यः शुद्धां निजभजनमुद्रामुपदिश-
न्स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ १ ॥

**सदेति**। स चैतन्यो मे दृशोर्नेत्रयोः पदं पुनरपि किं यास्यति। 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति नानार्थवर्गः। मन्नेत्रव्यवसायं तद्विषयतां स कदागमिष्यतीति तादृग्भाग्यं कदा मे स्यादिति भावः। स कीदृगित्याह—श्रीमान् लक्ष्मीवान्।

पुनः गिरिशपरमेष्ठिप्रभृतिभिः शिवविरिञ्च्यादिभिर्गीर्वाणैर्देवैः सदा नित्यमुपास्यः सेव्यः । ननु तत्संनिधौ ते न प्रतीयन्ते तत्राह—धृतेति । कृष्णावतारे साक्षादेव तमुपासितवन्तः । इह त्वाचार्यहरिदासादिवपुषोपासत इत्यर्थः । प्रणयितां तस्मिन्प्रीतिं वहद्भिः प्राप्नुवद्भिः । किं कुर्वन्नित्याह—स्वभक्तेभ्यः स्वरूपदामोदरादिभ्यो निजभजनमुद्रां स्वभक्तिपरिपाटीमुपदिशन् शुद्धां कर्मयोगाद्यनावृताम् । अयमर्थः—'कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्ग(?)स्त्रपार्षदम् । यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥' इत्येकादशे चतुर्थयुगावतारो वर्णितः, स एव कृष्णचैतन्यः हरिकीर्तनप्रधानस्य यज्ञस्य तदसाधारणधर्मस्य तत्रैव दर्शनात्, असाधारणधर्मेण लक्षणेन हि लक्ष्यं परिचीयते—'जन्माद्यस्य यतः–' इति सूत्रे यथा जगज्जन्मादिहेतुत्वेन तेन तल्लक्ष्यं ब्रह्मपरिचितं स चावतारो गीर्वाणैः सेव्य इति । 'ध्येयं सदा परिभवघ्नमभीष्टदोऽहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्' इति तदनन्तरोक्तेः, असकृदाविर्भाविनमेतं श्रुतिरपि द्योतयति । 'महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति । एवं साक्षादीश्वरतया निश्चितेऽपि तस्मिन् यदि कस्यचिन्मन्दमतेरनास्था स्यात् सा तु तदप्रसादादेवेति ज्ञायते । 'तमक्रतुः पश्यति वीतशोकं धातुः प्रसादान्महिमानमीशम्' इत्यादिश्रुतेः, 'अथापि ते(?) देवपदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि । जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥' इत्यादिस्मृतेश्च तत्प्रसाद एव तद्वीक्षणहेतुरित्यन्वयव्यतिरेकदृष्टं वासुदेवसार्वभौमादौ व्यक्तमेतत् । चतुर्थपादः सप्तस्वनुवर्त्यः । अष्टकेष्वेवमेव कविरीतेः ॥

एष चैतन्यदेवो न चतुर्थयुगावतारः कृष्णस्यांशः 'कृते शुक्लो धर्ममूर्ती रक्तस्त्रेतायुगे मतः । द्वापरे च कलौ चापि श्यामलाङ्गः प्रकीर्तितः ॥' इति तस्य श्यामवर्णत्वस्मरणात्, किंतु प्रेयसीभावकान्तिभ्यां पिहितस्वभावकान्तिः स्वयं कृष्ण एवाविरभूदिति भावेनाह—

सुरेशानां दुर्गं गतिरतिशयेनोपनिषदां
मुनीनां सर्वस्वं प्रणतपटलीनां मधुरिमा ।
विनिर्यासः प्रेम्णो निखिलपशुपालाम्बुजदृशां
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ २ ॥

**सुरेशानामिति** । दुर्गं निर्भयस्थानम् । गतिः परतत्त्वसंचारः । सर्वस्वं तपोविज्ञानलक्षणैहिकं पारत्रिकं च धनम् । प्रणतपटलीनां दासभक्तवृन्दानाम् । मधुरिमा दास्यभक्तिमाधुर्यम् । 'संघाते प्रकरौघवारनिकरव्यूहाः समूहश्चयः संदोहः समुदायराशिविसरव्राताः कलापो व्रजः । कूटं मण्डलचक्रवालपटलस्तोमा गणः पेटकं वृन्दं चक्रकदम्बके समुदयः पुञ्जोत्करौ संहतिः ॥' इति हैमः । निखिलपशुपालाम्बुजदृशां समस्तव्रजवनितानां प्रेम्णः कृष्णविषयकस्य विनिर्यासः सारः स चैतन्यः किमित्यादि प्राग्वत् । इह हेत्वलंकारो दर्शितः । दुर्गादिहेतोरपि चैतन्यस्य दुर्गादिरूपत्वेनाभिधानात् । यदुक्तं

१. एतन्नामकोऽपि कश्चन ग्रन्थो भवेत्. २. सप्तसु श्लोकेषु इत्यर्थः.

काव्यकौस्तुभे—'हेतोः कार्यात्मनाख्यानं हेतुरित्यभिधीयते' इति, 'अद्रीणां विद्रुतिः साक्षादाकृष्टिर्व्रजसुभ्रुवाम् । स्थैर्यं स्रोतस्वतीनां च जीयाद्वंशीध्वनिर्विभोः ॥' इतिवत् । इहाद्रिविद्रवादिहेतुभूतोऽपि वंशीनादस्तद्रूपतया वर्णितः । अस्य साक्षात्कृष्णत्वं त्वग्रे व्यक्तीभविष्यति ॥

अथ श्लेषेण साक्षात्कृष्णत्वं वर्णयन्विशिनष्टि—

स्वरूपं बिभ्राणो जगदतुलमद्वैतदयितः
प्रपन्नश्रीवासो जनितपरमानन्दगरिमा ।
हरिर्दीनोद्धारी गजपतिकृपोत्सेकतरलः
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ३ ॥

**स्वरूपमिति** । जगत्यतुलं निरुपमं स्वरूपं तन्नामानं पार्षदं बिभ्राणो धारयन् कृपासुधया पुष्णंश्च । अद्वैतस्य तदाख्यस्याचार्यस्य दयितः प्रियः स दयितो यस्येति वा । प्रपन्नः शरणमागतः श्रीवा[स]स्तन्नामा पण्डितोऽयं स तथा । जनितः परमानन्दे स्वगुरुसतीर्थे परिव्राजि गरिमा गुरुभावो येन सः । जगदविद्याहरणाद्धरिः । एतदेवाह—दीनेति । दीनानाध्यात्मिकादितापतप्तानुद्धर्तुं शीलमस्येति स तथा । गजपतावुत्कलाधीशे नृपेन्द्रे यः कृपोत्सेकः कारुण्यधारयाभिषेचनं तत्र तरलः सत्वरः । श्लेषेण हरिः सिंहोऽपि गजराजे सकृप इति विरुद्धाभासोऽलंकारः । तेनाद्भुतसिंहत्वं व्यज्यते । कृष्णपक्षे जगत्यतुलं स्वरूपं श्रीविग्रहं बिभ्राणो धारयन् । प्रकटयन्निति यावत् । 'न तस्य प्रतिमास्ति' इति श्रुतेः । अद्वैतं नानारूपत्वेऽपि भेदाभावस्तद्दयितं यस्य सः । 'एकोऽपि सन्बहुधा योऽवभाति एकं सन्तं बहुधा दृश्यमानम्' इति श्रुतेः। एकतामजहदेव नानारूप इत्यर्थः । प्रपन्नायाः पादसेविन्याः श्रियो लक्ष्म्या निवासः समाश्रयः । जनितः स्वजन्मना प्रादुर्भावितः परमानन्दगरिमा निःसीमातिशयः सुखराशिर्येन सः । गजपतिर्ग्राहग्रस्तो गजेन्द्रः । स्फुटार्थमन्यत् । शब्दार्थश्लेषयोः संकरोऽयम् ॥

रसोद्दामा कामार्बुदमधुरधामोज्ज्वलतनु-
र्यतीनामुत्तंसस्तरणिकरविद्योतिवसनः ।
हिरण्यानां लक्ष्मीभरमभिभवन्नाङ्गिकरुचा
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ४ ॥

**रसेति** । रसैर्भक्तिसुखास्व(स्वा)दैरुद्दामातिमत्तः । 'रसो गन्धरसे स्वादे' इति विश्वः । कामार्बुदस्येव मधुरं स्वादु यद्धाम मोहनप्रभावस्तेनोज्ज्वला तनुर्यस्य सः । 'मधुरस्तु रसः पुंसि मधुरं तु विषान्तरे । मधुरो रसवत्स्वादु प्रियेषु त्रिषु वाच्यवत् ॥' इति विश्वलोचनकारः । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति विश्वः । अतिमोहनमूर्तिरित्यर्थः । यतीनां संन्यासिनामुत्तंसः शिरोभूषणः । तरणिकराः प्राभा-

तिकसूर्यकिरणास्तद्वद्विद्योतीनि दीप्तिमन्ति वसनानि यस्य सः । गैरिकाक्तवस्त्र इत्यर्थः । आङ्गिकरुचा अवयवकान्त्या हिरण्यानां सुवर्णानां लक्ष्मीभरं शोभातिशयं अभिभवन् तिरस्कुर्वन् । 'स्युः प्रभा रुग्रुचित्विड्भाभाच्छ(श्छ)विद्युतिदीप्तयः' इत्यमरः ॥

हरे कृष्णेत्युच्चैः स्फुरितरसनो नामगणना-
　कृतग्रन्थिश्रेणीसुभगकटिसूत्रोज्ज्वलकरः ।
विशालाक्षो दीर्घार्गलयुगलखेलाञ्चितभुजः
　स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ५ ॥

**हरे कृष्णेति** । मन्त्रप्रतीकग्रहणं षोडशनामात्मना द्वात्रिंशदक्षरेण मन्त्रेणोच्चारितेन स्फुरिता कृतनृत्या रसना जिह्वा यस्य सः । नाम्नामुच्चारितानां गणनायै कृता या ग्रन्थिश्रेणी तया सुभगं सुन्दरं यत्कटिसूत्रं तेन तदञ्चनोज्ज्वलः करो वामहस्तो यस्य सः । विशालाक्षः कर्णान्तनेत्रः । दीर्घे यदर्गलयुगलं तस्य खेलया विलासेनाञ्चितौ भुजौ यस्य सः । आजानुबाहुरित्यर्थः । 'अर्गला परिघः स्मृतः' इति हलायुधः । निदर्शनालंकारः ॥

पयोराशेस्तीरे स्फुरदुपवनालीकलनया
　मुहुर्वृन्दारण्यस्मरणजनितप्रेमविवशः ।
क्वचित्कृष्णावृत्तिप्रचलरसनो भक्तिरसिकः
　स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ६ ॥

**पयोराशेरिति** । पयोराशेः समुद्रस्य तीरे तटे स्फुरन्तीनामुपवनालीनामारामपङ्क्तीनां कलनया वीक्षया यन्मुहुर्वृन्दारण्यस्मरणं तज्जनितेन प्रेम्णा विवशोऽधैर्यं गतः । क्वचित्स्थाने कृष्णावृत्त्या कृष्णेति नाम्नोऽसकृदुत्कीर्ति(र्त)नेन प्रचला रसना यस्य सः । यतो भक्तिरसिकः ॥

रथारूढस्यारादधिपदवि नीलाचलपते-
　रदभ्रप्रेमोर्मिस्फुरितनटनोल्लासविवशः ।
सहर्षं गायद्भिः परिवृततनुर्वैष्णवजनैः
　स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ७ ॥

**रथारूढेति** । रथारूढस्य नीलाचलपतेः श्रीजगन्नाथस्य आरान्निकटे । 'आराद्दूरसमीपयोः' इत्यमरः । अधिपदवि पथि । विभक्त्यर्थेऽव्ययीभावः । अदभ्रेण महता प्रेमोर्मिणा स्फुरितो यो नटनोल्लासो नृत्यातिशयस्तेन विवशः । 'पुरुजं पुष्कलं पुष्टमदभ्रमभिधीयते' इति हलायुधः । स्फुटमन्यत् ॥

भुवं सिञ्चन्नश्रुश्रुतिभिरभितः सान्द्रपुलकैः
परीताङ्गो नीपस्तबकनवकिञ्जल्कजयिभिः ।
घनस्वेदस्तोमस्तिमिततनुरुत्कीर्तनसुखी
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ८ ॥

**भुवं सिञ्चन्निति** । अश्रुश्रुतिभिर्नयनाम्बुधाराभिर्भुवं सिञ्चन् । सान्द्रपुलकैर्निबिडरोमाञ्चैरभितः परीताङ्गो व्याप्तावयवः । पुलकान् विशिनष्टि—नीपेति । कदम्बगुच्छकेसरपराभविभिरित्यर्थः । 'नीपप्रियकदम्बास्तु हलिप्रिये' इति, 'स्याद्गुच्छकस्तु स्तबके' इति, 'किञ्जल्कः केसरोऽस्त्रियाम्' इति चामरः । घनेन निबिडेन स्वेदस्तोमेन स्तिमितार्द्रा तनुर्यस्य सः ॥

अष्टकपाठफलमाह—

अधीते गौराङ्गस्मरणपदवी मङ्गलतरं
कृती यो विश्रम्भस्फुरदमलधीरष्टकमिदम् ।
परानन्दे सद्यस्तदमलपदाम्भोजयुगले
परिस्फारा तस्य स्फुरतु नितरां प्रेमलहरी ॥ ९ ॥

**अधीते इति** । यः कृती विद्वान् जनश्चैतन्यदेवस्येदमष्टकमधीते पठति तस्य तदमलपदाम्भोजयुगले प्रेमलहरी स्फुरतु भवतात् । इति तं प्रत्याशीःप्रदानम् । अष्टकं विशिनष्टि—गौराङ्गेति । चैतन्यध्यानसाचिव्यकृदित्यर्थः । कृतिनं विशिनष्टि—विश्रम्भेति । विश्वासभ्राजमानविशुद्धबुद्धिरित्यर्थः । 'विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति मेदिनी । परिस्फारा विस्तीर्णा । अस्मिन्परस्मिंश्चाष्टके शिखरिणीछन्दः । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति तल्लक्षणम् । छन्दसि गणाश्च बोध्याः—'सर्वगुरुर्मः कथितो भजसा गुर्वादिमध्यान्ताः । छन्दसि नः सर्वलघुर्यरता लघ्वादिमध्यान्ताः ॥' इति । वर्णछन्दसि गणाः—'ज्ञेयाः सर्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः । गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥' इति । मात्राछन्दसि च ते बोध्याः ॥

इति प्रथमं चैतन्याष्टकं व्याख्यातम् ।

---

द्वितीयमष्टकम् ।

श्रीचैतन्याय नमः ।

जगन्नाथक्षेत्रान्मातृदर्शनाय गौडमागतस्य श्रीचैतन्यस्यास्मिन्द्वितीयेऽष्टके वर्णनम् ।

कलौ यं विद्वांसः स्फुटमभियजन्ते द्युतिभरा-
दकृष्णं कृष्णाङ्गं मखविधिभिरुत्कीर्तनमयैः ।

उपास्यं च प्राहुर्यमखिलचतुर्थाश्रमजुषां
　　स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ १ ॥

**कलाविति** । स चैतन्याकृतिर्देवः नोऽस्मान् कृपयतु कृपाविषयान्करोतु । चैतन्याकृतिश्चिन्मूर्तिः । 'आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि' इति मेदिनीकारः । पक्षे चैतन्यनाम्नी आकृतिर्यस्य सः । शचीपुत्र इत्यर्थः । देवः सर्वाराध्यः पाषण्डिविजिगीषुश्च । स क इत्यपेक्ष्याह—विद्वांसः 'कृष्णवर्णम्–' इत्यादिवाक्यार्थतात्पर्यज्ञाः यं कलौ चतुर्थयुगे उत्कीर्तनमयैः संकीर्तनप्रधानैः मखविधिभिर्भक्तियज्ञैः स्फुटं साक्षाद्यजन्तेऽर्चन्ति । यं कीदृशमित्याह—कृष्णाङ्गमिन्द्रनीलमणिश्यामलावयवम् । एवं द्युतिभरादकृष्णं पीतम् । 'कृष्णवर्णं त्विषा कृष्णम्' इत्युक्तेः । यद्यपि 'त्विषा कृष्णम्' इत्युक्तेः शुक्लकपिलादित्वमप्यायाति, तथापि 'आसन्वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥' इति श्रीदशमे गर्गोक्तौ पारिशेष्येण पीतकान्तेर्लाभादुक्तं सुष्ठु । यं भीष्मादयो विद्वांसोऽखिलचतुर्थाश्रमजुषां सर्वपरिव्राजामुपास्यं पूज्यं च प्राहुः । 'संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्' इति यतिराजं वदन्तीत्यर्थः ॥

चरित्रं तन्वानः प्रियमघवदाह्लादनपदं
　　जयोद्घोषैः सम्यग्विरचितशचीशोकहरणः ।
उदञ्चन्मार्तण्डद्युतिहरदुकूलाञ्चितकटिः
　　स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ २ ॥

**चरित्रमिति** । प्रियं चरित्रं तन्वानः । शान्तिपुरधाम्नि प्रतिरथ्यं प्रतिभक्तगृहं च हरिकीर्तनं विस्तारयन्नित्यर्थः । चरित्रं विशिनष्टि—अघवतां पापिनामतिदुःखयोग्यानामाह्लादनमानन्दकरं पदं स्थानमिति पतितपावनत्वमुक्तम् । देवं विशिनष्टि—जयोद्घोषैः जयोऽस्तु पतितोद्धारिणः कृष्णस्येत्येवमुच्चशब्दैः । विरचितं कृतं स्वविरहविदूनायाः शच्याः स्वमातुः शोकहरणं येन सः । उदञ्चत उदयतः मार्तण्डस्य रवेर्द्युतिं हरति तिरस्करोतीति तादृशं यद्दुकूलं गैरिकरक्तमम्बरं तेनाञ्चिता शोभिता कटिर्यस्य सः । पक्षेऽयमेवेन्द्रकार्यार्थी वामनोऽभूदिति व्यज्यते । स्वज्येष्ठत्वात्स्वभक्तत्वाच्च प्रियो मघवा शक्रस्तस्याह्लादनं पदं व्यवसायो यत्र तच्चरित्रं बलिच्छलनतद्बन्धनादिलक्षणं तन्वानः । बलौ निबद्धे सति देवकृतैर्जयोद्घोषैर्विरचितं शच्या इन्द्राण्याः शोकहरणं येन सः । उदञ्चदिति प्राग्वत् ॥

ननु चतुर्थयुगावतारः श्यामलाङ्गः 'कृते शुक्लो धर्ममूर्तिः' इत्यादिस्मरणात् । अस्य तु चैतन्यस्य तद्युगावतारस्य गौरत्वं कुतस्तत्राह—

अपारं कस्यापि प्रणयिजनवृन्दस्य कुतुकी
　　रसस्तोमं हृत्वा मधुरमुपभोक्तुं कमपि यः ।

रुचं स्वामावव्रे द्युतिमिह तदीयां प्रकटय-
न्स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ३ ॥

**अपारमिति** । यः कस्यापि प्रणयिजनवृन्दस्य व्रजाङ्गनालक्षणस्य स्निग्धभक्तनिचयस्य कमप्यनिर्वाच्यं मधुरं शृङ्गारापरपर्यायं रसस्तोमं हृत्वा उपभोक्तुं स्वयं तद्भावेनास्वादयितुं स्वां रुचं द्युतिमावव्रे पिदधे । किं कुर्वन्नित्याह—तदीयां तद्वृन्दसंबन्धिनीं द्युतिं प्रकटयन्नुपरि प्रकाशयन् । अन्योऽपि चौरः स्वरूपमावृत्य चौरयतीति प्रसिद्धमेतत् । श्रुतिरप्येतं सूचयति—'यदापश्यः(?) पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादिना । एवं कुतश्चकार तत्राह—कुतुकीति । तासां भावास्वादे विनोदवान् । 'कौतूहलं विनोदः स्यात्कुतुकं च कुतूहलम्' इति हलायुधः । यद्यप्युक्तस्मृतेः प्रतिकलियुगावतारः श्यामलः, तथापि वैवस्वतमन्वन्तरगताष्टाविंशतितमचतुर्युगीयकलिसंध्यायां स्वयं भगवान् कृष्ण एव स्वप्रेयस्याः श्रीराधायाः कान्तिभावाभ्यां स्वकान्तिभावौ । समावृण्वन्नवततारेति स्वीकर्तव्यम् । 'कृष्णवर्णम्—' इत्यादेः, 'आसन्वर्णास्त्रयः—' इत्यादेश्च एवमभिप्रेत्यैव 'छन्नः कलौ यदभवत्त्रियुगोऽथ सत्त्वम्' इति सप्तमे प्रह्लादोक्तिश्चोपपद्येत ॥

नन्वेवं श्रीचैतन्यस्य साक्षादीश्वरत्वे निर्णीतेऽपि केचित्तत्तद्देश्यवासिनो विप्रास्तस्मिन् यतिभावकृतप्रीतिमन्तोऽपि कुतस्तथात्वं न जगृहुस्तत्राह—

अनाराध्यः प्रीत्या चिरमसुरभावप्रणयिनां
प्रपन्नानां दैवीं प्रकृतिमधिदैवं त्रिजगति ।
अजस्रं यः श्रीमाञ्जयति सहजानन्दमधुरः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ४ ॥

**अनाराध्य इति** । असुरभावप्रणयिनामासुरप्रकृतीनां तामसदेवताभक्तिभाजां चिरं तादृक्प्रीत्याप्यनाराध्यः साक्षादीश्वरत्वेनाग्राह्यः । दैवीं प्रकृतिं प्रपन्नानां त्वधिदैवमाराध्य देवः सन् योऽजस्रं जयति । तद्वासिनामेव सात्त्विकप्रकृतीनां बहूनां तथात्वे न स ग्राह्य इत्यर्थः । त्रिजगति त्रिलोक्यां न त्वेकस्मिन्नेव भूमण्डल इत्यर्थः । श्रीमान् लक्ष्मीपतिः । 'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः ॥' इति विष्णुधर्मात् । तथा च कैश्चित्तथात्वेऽगृहीतेऽपि न काचित्क्षतिरिति ॥

गतिर्यः पौण्ड्राणां प्रकटितनवद्वीपमहिमा
भवेनालंकुर्वन्भुवनमहितं श्रोत्रियकुलम् ।
पुनात्यङ्गीकाराद्भुवि परमहंसाश्रमपदं
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ५ ॥

**गतिरिति** । नवद्वीपस्य दक्षिणतः कुलीनग्रामोपान्तः पुण्ड्रो नाम देशस्तद्भवानां पौण्ड्राणां यो देवो गतिः साध्यसाधनभूतः। निस्तारक इत्यर्थः । तत्रत्याः सर्वे तं साक्षादीश्वरत्वेन भेजुरिति भावः । यः कीदृगित्याह—प्रकटितेति । गङ्गादेव्या विद्वद्गोष्ठ्या चालंकृतस्यापि प्राकृतत्वेनोच्यमानस्य नवद्वीपस्य तत्र प्रादुर्भूतेन येन महिमा प्रकटितः। वृन्दावनस्य प्रकाशविशेषोऽयमिति पूज्यता तत्त्वज्ञेषु प्रकाशितेत्यर्थः । यः श्रोत्रियकुलं वैदिकविप्रवंशं भवेन स्वजन्मनालंकुर्वन् भूषयन् परमहंसाश्रमपदं संन्यासचिह्नमङ्गीकारात्स्वीकृत्य पुनाति । न हि तस्य संन्यासग्रहणे किंचित्फलम्, किं तु भक्तिसात्करणेन तत्परिशुद्धिरेव तदिति ॥

भावमग्नतां वर्णयन्विशिनष्टि—

मुखेनाग्रे पीत्वा मधुरमिह नामामृतरसं
दृशोर्द्वारा यस्तं वमति घनबाष्पाम्बुमिषतः ।
भुवि प्रेम्णस्तत्त्वं प्रकटयितुमुल्लासिततनुः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ६ ॥

**मुखेनेति** । अग्रे प्रथमं मधुरं नामामृतरसं मुखेनास्येन यः पीत्वा घनबाष्पाम्बुमिषतो निबिडनयनजलच्छलेन दृशोर्द्वारा तं नामामृतरसं वमत्युद्गिरति । किमर्थमित्यपेक्ष्याह—भुवि पृथिव्यां प्रेम्णस्तत्त्वं स्वरूपं प्रकटयितुं बोधयितुम् । 'तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनि' इति विश्वः । भगवन्नामकीर्तनमेव तत्प्रेमा भवेदिति बोधनायेत्यर्थः । न च जुगुप्साश्लीलमिदं वमतिपदम् । गौणवृत्तितायामश्लीलानङ्गीकारात् । अपह्नुतिरलंकारः । प्रकृतं नामामृतरसपानानुभावमश्रु प्रतिषिध्य तस्य तद्रसत्वेन स्थापनात् । 'प्रकृतं यन्निषिध्यान्यत्स्थापनं सा त्वपह्नुतिः' इति तल्लक्षणात् ॥

तीर्थाय व्रजन्तं वर्णयन्विशिनष्टि—

तनूमाविष्कुर्वन्नवपुरटभासं कटिलस-
त्करङ्कालंकारस्तरुणगजराजाञ्चितगतिः ।
प्रियेभ्यो यः शिक्षां दिशति निजनिर्माल्यरुचिभिः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ७ ॥

**तनूमिति** । नवस्य दाहोत्तीर्णस्य पुरटस्य सुवर्णस्येव भा यस्यास्तां तनुं मूर्तिमाविष्कुर्वन् प्रदर्शयन् । पथिकत्वेऽपि सर्वेषां तद्दर्शनं स्यादिति कारुणिकत्वं व्यज्यते । कटौ निबद्धतया लसत् करङ्कालंकारो नारिकेलफलास्थि(?)······रचितमम्बुपात्रं यस्य सः । 'नारिकेलजः करङ्कः' इति हैमः । निजा स्वकीया निर्माल्येषु भगवत्प्रसादेषु माल्यादिषु या रुचयोऽभिप्रीतयस्ताभिः प्रियेभ्यः स्वभक्तेभ्यः शिक्षां यो दिशति । भवद्भिरेव तेष्वादरो विधेय इति शिक्षयतीत्यर्थः ॥

२

निखिलकल्याणकरत्वं वर्णयन्विशिनष्टि—

स्मितालोकः शोकं हरति जगतां यस्य परितो
गिरां तु प्रारम्भः कुशलपटलीं पल्लवयति ।
पदालम्बः कं वा प्रणयति न हि प्रेमनिवहं
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ८ ॥

**स्मितेति** । यस्य स्मितालोकः स्मितपूर्वकः कृपाकटाक्षो जगतां तद्वर्तिप्राणिनां शोकं हरति । यस्य गिरां तु प्रारम्भः संभाषणोपक्रमः जगतां कुशलपटलीं कल्याणसंहतिं पल्लवयति विस्तारयति । यस्य पदालम्बश्चरणाश्रयणं कं वा जनं प्रेमनिवहं कृष्णप्रेमसंततिं न प्रणयति । अपि तु सर्वं जनं तं प्रापयतीत्यर्थः ॥

अष्टकपाठफलमाह—

शचीसूनोः कीर्तिः स्तबकनवसौरभ्यनिबिडं
पुमान्यः प्रीतात्मा पठति किल पद्याष्टकमिदम् ।
स लक्ष्मीवानेतं निजपदसरोजे प्रणयितां
ददानः कल्याणीमनुपदमबाधं सुखयतु ॥ ९ ॥

**शचीति** । यः पुमानिदं शचीसूनोः पद्याष्टकं पठति, एतं जनं स लक्ष्मीवान् शचीसूनुरनुपदं सदा सुखयतु । किं कुर्वाणः सन्नित्याह—निजपदसरोजे प्रणयितां प्रीतिं ददानः सन् । स्फुटार्थमन्यत् ॥

इति द्वितीयं चैतन्याष्टकं व्याख्यातम् ।

---

## तृतीयमष्टकम् ।

श्रीचैतन्यचन्द्राय नमः ।

अथ पुरुषोत्तमक्षेत्रे विराजमानं श्रीचैतन्यदेवं पश्यन्स्तौति—

उपासितपदाम्बुजस्त्वमनुरक्तरुद्रादिभिः
प्रपद्य पुरुषोत्तमं पदमदभ्रमुद्भ्राजितः ।
समस्तनतमण्डलीस्फुरदभीष्टकल्पद्रुमः
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ १ ॥

**उपासितेत्यादि** । हे शचीसुत, हे प्रभो, हे मुकुन्द, त्वं मन्दे मयि कृपां कुरु । कीदृशस्त्वमित्यपेक्ष्य आह—अनुरक्तैराचार्यादिरूपतया स्थितैः रुद्रादिभिरुपासिते पदाम्भोजे यस्य सः । पुरुषोत्तमं पदं स्थानं क्षेत्रं प्रपद्य प्राप्य उद्भ्राजितो विद्योतमानोऽदभ्रं श्रेष्ठं यद्वा पुरुषोत्तमं जगन्नाथं पदं वस्तु प्रपद्य तत्प्रतिपत्तिं कृत्वा उद्भ्राजितः । लब्धच्छविरित्यर्थः । नतमण्डली स्वभक्तगणः । 'मण्डलं परिधौ कुष्ठे देशे द्वादशराजके । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥' इति मेदिनीकारः ॥

प्रभोः स्तवे स्वस्यासामर्थ्यं दर्शयन्नाह—

नु वर्णयितुमीशते गुरुतरावतारायिता
भवन्तमुरुबुद्धयो न खलु सार्वभौमादयः ।
परो भवतु तत्र कः पटुरतो नमस्ते परं
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ २ ॥

**न्विति** । हे शचीसुत, सार्वभौमादयोऽपि भवन्तं वर्णयितुं नेशते समर्था न भवन्ति । कीदृशास्ते इत्याह—गुरुतराः सर्वमुनिगुरवश्च तेऽवताराश्च दत्तात्रेयबादरायणादयस्त इव आचरन्तीति गुरुतरावतारायिताः । कर्तरि क्यङन्तात्कर्तरि क्तः । उरुबुद्धयोऽतिसूक्ष्मबुद्धयः । तादृशोऽपि यद्वर्णनाक्षमास्तत्र परोऽन्यः पटुर्निपुणः को भवेत् । न कोऽपीति भावः । सर्वावरस्य बुद्धिहीनस्य मे ते तुभ्यं परं केवलं नमोऽस्तु । न तु वर्णनोद्यम इति भावः ॥

ननु तादृशास्ते तद्वर्णने कुतोऽक्षमास्तत्राह—

न यत्कथमपि श्रुतावुपनिषद्भिरप्याहितं
स्वयं च विवृतं न यद्गुरुतरावतारान्तरे ।
क्षिपन्नसि रसाम्बुधे तदिह भक्तिरत्नं क्षितौ
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ३ ॥

**न यदिति** । श्रुतौ वेदे तच्छिरोभूताभिरुपनिषद्भिर्यद्भक्तिरत्नं कथमपि केनापि भक्तिस्वरूपप्रकाशकेन प्रकारेण नाहितं नार्पितम् । न वर्णितमित्यर्थः । 'ता हि श्रद्धाभक्तिध्यानयोगादवैति यस्य देवे परा भक्तिर्भक्तिरस्य भजनम्' इत्यादिभिर्मुद्रितवत्तदवस्थापयन्तीति भावः । स्वयं भगवता श्रीकृष्णेन च यद्भक्तिरत्नं गुरुतरावतारान्तरे दत्तात्रेयव्यासादिप्रादुर्भावमध्ये न विवृतम्, कर्मयोगयोरद्वैतच्छायायाश्चान्तरान्तरोक्त्या तद्वाक्येषु शुद्धभक्तेर्विवृत्या लाभात्, तत्त्वमिह क्षितौ धान्यराशिमिव क्षिपन्नसि । वेदेन भगवता च गोपितानि भक्तिरत्नान्येवं विकिरतस्ते महोदारस्य वर्णनं सर्वदुःशकमिति भावः । एवमुक्तम्—'क्व सा निरङ्कुशकृपा क्व तद्वैभवमद्भुतम् । क्व सा वत्सलता शौरे यादृग्गौरे तवात्मनि ॥' इति प्रबोधानन्दैः ॥

निजेति त्रीण्यत्र संबुद्ध्यन्तानि—

निजप्रणयविस्फुरन्नटनरङ्गविस्मापित-
त्रिनेत्र नतमण्डलप्रकटितानुरागामृत ।
अहंकृतिकलङ्कितोद्धतजनादिदुर्बोध हे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ४ ॥

**निजेति** । निजे स्वस्मिन् कृष्णात्मनि यः प्रणयो भावविशेषस्तेन विस्फुरदुदयमानं यन्नटनं तत्र यो रङ्ग आश्चर्यताज्ञानं तेन विस्मापितस्त्रिनेत्रः शिवस्तदवतारोऽद्वैताचार्यो येन हे तथाभूत । 'रङ्गः स्यादद्भुतज्ञाने जङ्गमेङ्गितयोरपि' इति विश्वः । अहंकृतिराभिजात्यपाण्डित्यादिहेतुकोऽभिमानस्तेन कलङ्किता लाञ्छिता य उद्धतजनास्तैर्दुर्बोध हे शचीसुत । 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । 'अहंकारवियुक्तानां केशवो न हि दूरगः । अहंकारयुतानां तु मध्ये पर्वतकोटयः ॥' इति स्मृतेः । स्फुटमन्यत् ॥

ननु मन्दे त्वयि मत्कृपा कथं स्यात्तत्राह—

भवन्ति भुवि ये नराः कलितदुष्कुलोत्पत्तय-
स्त्वमुद्धरसि तानपि प्रचुरचारुकारुण्यतः ।
इति प्रमुदितान्तरः शरणमाश्रितस्त्वामहं
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ५ ॥

**भवन्तीति** । ये नरा भुवि कलितदुष्कुलोत्पत्तयो भवन्ति दुष्टकुलोत्पत्तिभाजो वर्तन्ते तानपि दुष्कुलीनत्वात् पापचारान् त्वं समुद्धरसि । कुतो हेतोरित्याह—प्रचुरेति । कमनीयकृपानिर्भरादित्यर्थः । यत एवमतस्त्वामहं प्रमुदितान्तरः प्रहृष्टचित्तः सन् शरणं आश्रितः प्राप्तोऽस्मि तादृशस्यापि मे निस्तारो भावीति ॥

मुखाम्बुजपरिस्खलन्मृदुलवाङ्मधूलीरस-
प्रसङ्गजनिताखिलप्रणतभृङ्गरङ्गोत्कर ।
समस्तजनमङ्गलप्रभवनामरत्नाम्बुधे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ६ ॥

**मुखेति** । मुखेत्यत्र संबोधनद्वयम् । मुखाम्बुजातपरिस्खलन् क्षरन् यो मृदुलवाङ्मधूलीरसः कोमलवाणीमकरन्दद्रवस्तस्मिन् यः प्रसङ्गो गाढासक्तिस्तेन जनितोऽखिलानां प्रणतभृङ्गाणां रङ्गोत्करो विस्मयज्ञाननिर्भरो येन हे तथाभूत । समस्तानां नानाविधानां जनमङ्गलानां प्रभवो येभ्यस्तथाभूतानां नामरत्नानामम्बुधे हे शचीसुत ॥

रूपं निरूपयन्संबोधयति—

मृगाङ्कमधुरानन स्फुरदनिद्रपद्मेक्षण
स्मितस्तबकसुन्दराधर विशङ्कटोरस्तट ।
भुजोद्धतभुजङ्गमप्रभमनोजकोटिद्युते
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ७ ॥

**मृगाङ्केति** । मृगाङ्कश्चन्द्रस्तद्वन्मधुरं आह्लादप्रकाशाभ्यां रुचिरमाननं मुखं यस्य

हे तादृश। स्फुरन्ती विराजन्ती अनिद्रे प्रफुल्ले पद्मे ते इव ईक्षणे नेत्रे यस्य हे तादृश। स्मितस्तबकेन मन्दहासगुच्छेन सुन्दरोऽधरो यस्य हे तादृश । विशङ्कटं विशालं उरस्तटं वक्षो यस्य हे तादृश । 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इत्यमरः ॥

पापात्माप्यहं तव स्वभावं वीक्ष्य कृतार्थः स्यामिति हृष्टचित्तोऽस्मीति भावेनाह—

अहं कनककेतकीकुसुमगौर दुष्टः क्षितौ
न दोषलवदर्शिता विविधदोषपूर्णेऽपि ते ।
अतः प्रवणया धिया कृपणवत्सल त्वां भजे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे क्षणम् ॥ ८ ॥

**अहमिति** । हे कनककेतकीकुसुमगौर, क्षितौ पृथिव्यामहं दुष्टः कामक्रोधादिदूषितोऽस्मि। विविधदोषपूर्णेऽपि जने ते तव दोषलवदर्शिता नास्ति अत उद्धारकस्य तवौदार्येण मया सह संबन्धप्रत्ययाद्धेतोस्त्वामहं प्रवणया नम्रया धिया भजे। हे कृपणवत्सल, मयि मन्दे कृपां कुरु ॥

अष्टकपाठफलमाह—

इदं धरणिमण्डलोत्सव भवत्पदाङ्केषु ये
निविष्टमनसो नराः परिपठन्ति पद्याष्टकम् ।
शचीहृदयनन्दन प्रकटकीर्तिचन्द्र प्रभो
निजप्रणयनिर्भरं वितर देव तेभ्यः शुभम् ॥ ९ ॥

**इदमिति** । हे धरणीमण्डलोत्सव, हे शचीहृदयनन्दन, हे प्रकटकीर्तिचन्द्र, हे प्रभो, ये नराः त्वत्पदाङ्केषु त्वच्चरणचिह्नेषु निविष्टमनसः सन्त इदं पद्याष्टकं परिपठन्ति तेभ्यस्त्वं निजप्रणयनिर्भरं स्वप्रेमसंपत्तिं वितर देहि । हे देव, शुभं मङ्गलात्मकम् । अस्मिन्नष्टके पृथ्वी छन्दः । 'जसौ जसयला वसुग्रहयतिस्तु पृथ्वी गुरुः' इति तल्लक्षणम् ॥

इति तृतीयं चैतन्याष्टकं व्याख्यातम् ।

इति चैतन्यदेवस्तोत्राणि ॥

---

आनन्दाख्यं स्तोत्रम् ।

अथ श्रीकृष्णदेवस्य स्तवमाह—एवं स्वदेशिकं श्रीचैतन्यं स्तुत्वा 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे' 'एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन्बहुधा योऽवभाति' 'तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्' 'कृष्णस्तु भगवान् स्वयमतः परतरं नान्यत्' इत्यादिश्रुतिस्मृतिभिस्तेनोपदिष्टं परतमं तत्त्वं कृष्णं स्तोतुमारभते—

श्रीकृष्णः परमानन्दो गोविन्दो नन्दनन्दनः ।
तमालश्यामलरुचिः शिखण्डकृतशेखरः ॥ १ ॥

श्रीति । श्रीकृष्णेति निखिलनाममुख्येन नाम्ना वाच्यत्वाच्छ्रीकृष्णः । 'नाम्नां मुख्यतरं नाम कृष्णाख्यं मे परंतप' इति भगवदुक्तेः । तत्प्रवृत्तिनिमित्तं च सदानन्दत्वम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥' इति स्मृतेः । क्वचित् श्यामत्वं च । 'कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन' इति भगवदुक्तेः । परमश्चासावानन्दश्चेति परमानन्दः । 'विज्ञानमानन्दं ब्रह्म' इत्यादि श्रुतेः । आनन्दस्य पारम्यं विज्ञानात्मकत्वाद्विभुत्वात् सश्रीकत्वाद्वा मूर्तत्वाद्वेत्यन्ये । मूर्तत्वं च तस्य रागमूर्तत्ववदचिन्त्यत्वाच्छ्रुतत्वाच्च स्वीकार्यम् । गवामिन्द्रत्वाद्गोविन्दः । 'पायाश्च इन्द्रो गवाम्' इति शुकोक्तेः । नन्दाद्यशोदायां जातत्वान्नन्दनन्दनः । 'दारको नन्दनोऽर्भकः' इति धनंजयः । 'यशोदाखनिमाणिक्यम्' इत्युपरि वक्ष्यति । ननु कृष्णस्य यशोदासुतत्वं न संभवति श्रीदशमोक्तस्फुटार्थविरोधादिति चेत्, मैवमेतत् । 'निशीथे तम उद्भूते जायमाने जनार्दने । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥' इति तत्रैव श्रीमुनीन्द्रेण यशोदायां च तस्य जन्माभिधानात् । यशोदापि देवकीत्युच्यते । 'द्विनाम्नी नन्दभार्या या यशोदा देवकीति च । अतः सख्यमभूत्तस्या देवक्या शौरिजायया ॥' इत्यादिपुराणात् । ततश्चायमर्थः देहलीप्रदीपन्यायेन देवक्यामित्येतदुभयान्वयि । तमसा ध्वान्तेन उद्भूते व्याप्ते निशीथे रात्र्यर्धे देवक्यां यशोदायां जनार्दने कृष्णे जायमाने सति देवक्यां वसुदेवपत्न्यां विष्णुः कृष्ण एवाविरासीदित्युभयत्र युगपत्प्रभोराविर्भावः । 'गर्भकाले त्वसंपूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा ॥' इति हरिवंशाच्च । तदुत्तरं दुर्गायाश्च यशोदायामाविर्भावः । 'ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् । यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाजनि नन्दजायया ॥' इति श्रीमुनीन्द्रोक्तेः। अतः किंचित्पूर्वोत्तरभावेन यशोदायाः पुत्रकन्यारूपमपत्यद्वयम् । तच्च वसुदेवयशोदाभ्यां क्रमाददृष्टं बोध्यम्। देवरूपिण्यामिति कुक्षिसंबन्धदोषो निरस्तः। 'यशोदा नन्दपत्नी च जातं परमबुध्यत । न तद्वेद परिश्रान्ता निद्रयापगतस्मृतिः ॥' इति तत्रैवोपरि तेन तस्यां तज्जन्मनः स्फुटीकरणाच्च। 'शौरिपत्नी च नन्दपत्नी परं परेशमेव स्वगर्भाज्जातमबुध्यत, तद्वसुदेवागमनादिकं न वेद तल्लिङ्गम्'इति पाठेऽपि तस्य वसुदेवागमादेश्चिह्नं नाबुध्यतेत्यर्थः । 'नन्दगोपगृहे जातो यशोदागर्भसंभवः' इत्यादि पुराणे कण्ठोक्तेश्च । एवं च नन्दस्त्वात्मज उत्पन्ने अदृश्यतानुजा विष्णोरित्यादिकं सूपपन्नम् । उपगुह्यात्मजामित्यादिवद्द्रौणात्मजत्वशङ्का च निरस्ता । वासुदेवस्य तस्मिन्नैक्यात्तदैक्यवतस्तस्य मथुरादौ गमनादन्तरा व्रजे चागमनात्तदुक्ते स्फुटार्थेऽपि न संदेहः । तस्माद्यशोदासुतः कृष्णः । तमालेत्यर्धकं स्फुटार्थम् ॥

पीतकौशेयवसनो मधुरस्मितशोभितः ।
कन्दर्पकोटिलावण्यो वृन्दारण्यमहोत्सवः ॥ २ ॥

**पीतेति** । पीते विद्युद्वर्णे कौशेये पट्टोद्भवे वसने यस्य सः । मधुरेति प्रकटार्थम् । कन्दर्पकोटेरप्यधिकं लावण्यं (तरला) कान्तिर्यस्य सः ।वृन्दारण्ये महानुत्सवो यस्य सः ॥

वैजयन्तीस्फुरद्वक्षाः कक्षात्तलगुडोत्तमः ।

कुञ्जार्पितरतिर्गुञ्जापुञ्जमञ्जुलकण्ठकः ॥ ३ ॥

**वैजयन्तीति** । पञ्चवर्णपुष्परचिता स्रग्वैजयन्ती तया स्फुरद्विद्योतमानं वक्षो यस्य सः । कक्षेणात्तो लगुडोत्तमो येन । 'बाहुमूल उभे कक्षः' इत्यमरः । 'दण्डो यष्टिश्च लगुडः' इति हैमः । कुञ्जेषु लतादिमन्दिरेषु अर्पिता रतिरभिरुचिर्येन सः । गुञ्जापुञ्जेन तत्कृतेन हारेण मञ्जुलः कण्ठो यस्य सः । 'कुञ्जनिकुञ्जकुडुङ्गाः स्थाने वृक्षैर्वृतान्तरे' इति हैमः । 'कथ्यते कृष्णला गुञ्जा' इति हलायुधः ॥

कर्णिकाराढ्यकर्णश्रीर्धृतस्वर्णाभवर्णकः ।

मुरलीवादनपटुर्बल्लवीकुलवल्लभः ॥ ४ ॥

**कर्णिकारेति** । कर्णिकारैस्तदाख्यैः पुष्पैराढ्या कर्णयोः श्रीः शोभा यस्य सः । 'वृक्षोत्पलः कर्णिकारः' इति हलायुधः । धृतं स्वर्णाभं गौरं वर्णकमनुलेपनं येन सः । 'वर्णकं स्याद्विलेपनम्' इत्यमरः । मुरलीत्यर्धकं स्फुटार्थम् ॥

गान्धर्वाप्तिमहापर्वा राधाराधनपेशलः ।

इति श्रीकृष्णचन्द्रस्य नाम विंशतिसंज्ञकम् ॥ ५ ॥

**गान्धर्वेति** । गान्धर्वायाः श्रीराधाया आप्तिर्लाभस्तदर्थं वा तदेव वा महत्पर्व उत्सवो यस्य सः । 'पर्वः स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि ॥' इति विश्वः । राधायाः स्वाधीनभर्तृकाया आराधने तद्वेशनिर्माणे पेशलो निपुणः । 'पेशलः कुशले रम्ये' इति हैमः ॥

आनन्दाख्यं महास्तोत्रं यः पठेच्छृणुयाच्च यः ।

स परं सौख्यमासाद्य कृष्णप्रेमसमन्वितः ॥ ६ ॥

**आनन्दाख्यमिति** । सौख्यं पाठादिजम् ॥

सर्वलोकप्रियो भूत्वा सद्गुणावलिभूषितः ।

व्रजराजकुमारस्य संनिकर्षमवाप्नुयात् ॥ ७ ॥

**सर्वेति** । संनिकर्षं संनिधिम् । तत्पार्षदभावमित्यर्थः ॥

इत्यानन्दाख्यं स्तोत्रं व्याख्यातम् ।

---

लीलामृताख्यं नामदशकम्।

श्रीकृष्णाय नमः।

अथ नामदशकेन स्तौति—

राधिकाहृदयोन्मादिवंशीक्काणमधुच्छटः।
राधापरिमलोद्गारगरिमाक्षिप्तमानसः॥ १॥

**राधिकेत्यादि**। राधिकाया हृदयं चित्तमुन्मादयितुं शीलं यस्यास्तादृशी वंशीक्काणमधुच्छटा एव वेणुनादमाध्वीकपरम्परा यस्य सः। राधायाः परिमलो विमर्दोत्थं-(त्थं) सौरभ्यं तस्य उद्गारगरिम्णा गुरुप्रसारेण क्षिप्तं आकृष्टं मानसं मनो यस्य सः। 'विमर्दोत्स्ये(त्थे) परिमलो गन्धे जनमनोहरे' इत्यमरः॥

कम्रराधामनोमीनबडिशीकृतविभ्रमः।
प्रेमगर्वान्धगान्धर्वाकिलकिञ्चितरञ्जितः॥ २॥

**कम्रेत्यादि**। कम्रे कमनीये राधामनोमीने बडिशीकृतो विभ्रमो विलासो येन सः। 'बडिशं मत्स्यवेधनम्' इत्यमरः। परमानन्दहेतुर्यो विलास एव विरहे चित्तवेधको भवतीति तत्र तृष्णातिशयो व्यङ्ग्यः। प्रेमगर्वाभ्यामन्धायाः प्रमत्ताया गान्धर्वायाः श्रीराधाया यत् किलकिञ्चितं तेन रञ्जितो रक्ततां नीतः। उपलक्षणमेतत्। 'गर्वस्मिताभिलाषादेर्भीकोपादेश्च मिश्रणम्। प्रमोदात् प्रेयसः सङ्गे कथ्यते किलकिञ्चितम्॥' तल्लक्षणं काव्यकौस्तुभे॥

ललितावश्यधीराधामानाभासवशीकृतः।
राधावक्रोक्तिपीयूषमाधुर्यभरलम्पटः॥ ३॥

**ललितेत्यादि**। ललिता अवश्या धीर्यस्यास्तस्या राधाया मानाभासेनापि वशीकृतः कातरतां गतः। राधाया यद्वक्रोक्तिपीयूषं चन्द्रावलीक्रीडाकुरङ्गस्य ते किमस्माभिः सरलाभिस्त्वद्वश्याभिरित्यनृजुवागमृतं तस्य माधुर्यभरे लम्पटो लुब्धः। तच्छ्रवणेऽतृप्त इत्यर्थः॥

मुखेन्दुचन्द्रिकोद्घूर्णराधिकारागसागरः।
वृषभानुसुताकण्ठहारिहारहरिन्मणिः॥ ४॥

**मुख इति**। मुखेन्दुचन्द्रिकया वदनचन्द्रज्योत्स्नया उद्घूर्ण उच्छलितो राधिकारागसागरो यस्मात् सः। वृषभानुसुतायाः कण्ठे हारी मनोहरो यो हारस्तस्य हरिन्मणिर्मारकतस्तस्य हारस्य नायकः। 'मरकतं त्वश्मगर्भं गारुत्मतं हरिन्मणिः' इति हैमः। हारनायकवत् तया कण्ठे धृत इत्यर्थः॥

फुल्लराधाकमलिनीमुखाम्बुजमधुव्रतः।
राधिकाकुचकस्तूरीपत्रस्फुरदुरस्थलः॥ ५॥

**फुल्लेति** । ततः कृतराधिकाधरचुम्बन इत्यर्थः । राधिकाकुचयोर्यत्कस्तूरीपत्रं तेन गाढाश्लेषाल्लग्नेन स्फुरद्विद्योतमानं उरस्थलं यस्येति । लब्धसंभोग इत्यर्थः । एषु राधिकाशब्दस्य पुनः पुनरुपादानं न दोषः । नाम्नां तादृप्येण सिद्धत्वात् ॥

स्तोत्रपाठफलमाह—

इति गोकुलभूपालसूनुलीलामनोहरम् ।
यः पठेन्नामदशकं सोऽस्य वल्लभतां व्रजेत् ॥ ६ ॥

**इतीति** । इत्येतन्नामदशकं यः पठेत्सोऽस्य गोकुलभूपालसूनोर्वल्लभतां व्रजेत् प्राप्नुयात् । कीदृशं नामदशकमित्यपेक्षायामाह—गोकुलेति । गोकुलभूपालो नन्दस्तस्य सूनुः श्रीकृष्णस्तस्य श्रीराधयैव सह या लीलाः श्लोकपञ्चकेनोक्तास्ताभिर्मनोहरं मञ्जुलम् । अस्येत्यस्य तत्सूनुना संबन्धः। 'समस्तस्यासमस्तेन नित्याकाङ्क्षेण संगतिः' इत्यभियुक्तोक्तेः समञ्जसः ॥

इति लीलामृताख्यं नामदशकं व्याख्यातम् ।

---

प्रेमेन्दुसागराख्यं श्रीकृष्णनामाष्टोत्तरशतम् ।

अथाष्टोत्तरशतनामभिः स्तौति । स्तोत्रप्रादुर्भावविधिमाह—

कलहान्तरितावृत्ता काचिद्वल्लवसुन्दरी ।
विरहोत्तापखिन्नाङ्गी सखीं सोत्कण्ठमब्रवीत् ॥ १ ॥

**कलहान्तरितेति** । काचिद्वल्लवसुन्दरी गोपाङ्गना कलहान्तरितावृत्ता सती सोत्कण्ठं यथा स्यात्तथा सखीमब्रवीत् । सा कीदृशीत्याह—विरहेति । कृष्णविच्छेदजातज्वरक्लेशेत्यर्थः ॥

किमब्रवीत्तदाह—

हन्त गौरि स किं गन्ता पन्थानं मम नेत्रयोः ।
श्रीकृष्णः करुणासिन्धुः कृष्णो गोकुलवल्लभः ॥ २ ॥

**हन्तेति** । हन्तेति खेदे । हे सखि, स श्रीकृष्णः । 'कृषिर्भूवाचकः शब्दः' इत्यादिस्मरणाज्ज्ञानानन्दविग्रहः सर्वेशः प्रियः किं मम नेत्रयोः पन्थानं गन्ता श्वस्तद्दर्शनं किं मे भावीति । किमिति प्रश्ने । 'किं प्रश्ने कुत्सितेऽपि च' इति हैमः । न च गोप्यः प्रियं तं तथात्वेन न जानन्तीति वाच्यम् । तथा तासां वाक्यादेव नहि सितामश्नन् कश्चिच्चेतनस्तन्माधुर्यं नानुभवेदिति शक्यं वक्तुम् । न च तथा ज्ञाने स्वभावसंकोचः प्रत्युत पुष्टिरेवेति भाष्यपीठके विस्तरः । स कीदृगित्याह—करुणेति । दयार्द्रत्वान्मद्दौर्जन्यमगणयन्मामङ्गीकर्तेत्यर्थः । कृष्णोऽतसीपुष्पप्रभ इति तत्रासक्तिनिर्भरः । गोकुलेति निखिलव्रजहितकृतत्वात्तदन्तर्गताया मे पिहितं कर्तेत्यर्थः ॥

उक्तं व्यञ्जयति—

गोविन्दः परमानन्दो नन्दमन्दिरमङ्गलम्।
यशोदाखनिमाणिक्यं गोपेन्द्राम्भोधिचन्द्रमाः ॥ ३ ॥

**गोविन्द इति।** गोवर्धनोद्धरणलीलया यो व्रजविप्लवोद्यतमिन्द्रं पराभूय व्रजं ररक्ष। गवामिन्द्रत्वेन यमिन्द्रोऽभिषिषेचेत्यर्थः। परमश्चासावानन्दश्चेति। नित्यानन्दवपुरित्यर्थः। न च श्रीकृष्ण इत्यनेनागतत्वात् पुनरुक्तोऽयमर्थ इति वाच्यम्, सर्वेषां नाम्नामेकवस्तुविषयत्वेनार्थपुनरुक्तेरदोषात्। एवमेव वैशम्पायनसहस्रनाम्नि भाष्यकृद्भिर्व्याख्यातम्। नन्देति। मूर्तिमन्नन्दगृहकल्याणरूप इत्यर्थः। यशोदैव खनिराकरस्तस्या माणिक्यम्। 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः। तद्गर्भरत्नत्वेनोत्प्रेक्ष्यमाण इत्यर्थः। भीष्मश्च रत्नगर्भ इति तन्नाम पपाठ। गोपेन्द्रो व्रजेश्वरः स एवाम्भोधिस्तस्य चन्द्रमा अम्भोधेश्चन्द्र इव नन्दाज्जातस्तद्वत्तदुल्लासकश्चेत्यर्थः॥

नवाम्भोधरसंरम्भविडम्बिरुचिडम्बरः।
क्षिप्तहाटकशौटीर्यपट्टपीताम्बरावृतः ॥ ४ ॥

**नवेति।** नवाम्भोधरस्य संरम्भं स्वतुल्यान्यपराजयार्थकं क्रोधं विडम्बयति अवहेलयतीति तादृशो रुचिडम्बरः कान्तिविस्तारो यस्य सः। क्षिप्तं तिरस्कृतं हाटकस्य सुवर्णस्य शौटीर्यं रूपगर्वो येन तथाभूतेन पट्टोद्भवेन पीताम्बरेण आवृतः॥

कन्दर्परूपसंदर्पहारिपादनखद्युतिः।
ध्वजाम्भोरुहदम्भोलियवाङ्कुशलसत्पदः ॥ ५ ॥

**कन्दर्पेति।** कन्दर्पस्य रूपसंदर्पं सौन्दर्यगर्वं हरति तादृशी पादनखद्युतिर्यस्य सः। 'रूपं प्रभावे सौन्दर्ये' इति विश्वः। ध्वजेति विस्पष्टार्थम्। छत्रादेरुपलक्षणमेतत्॥

पदपञ्जरसिञ्जानमञ्जुमञ्जीरखञ्जनः।
मसारसंपुटाकारधारिजानुयुगोज्ज्वलः ॥ ६ ॥

**पदेति।** पदपञ्जरयोः सिञ्जानौ शब्दायमानौ मञ्जुमञ्जीरावेव खञ्जनौ यस्य सः। 'मञ्जीरो नूपुरोऽस्त्रियाम्' इति, 'खञ्जरीटस्तु खञ्जनः' इति चामरः। रूपकेणोपमात्र व्यज्यते। मसारसंपुटस्य इन्द्रनीलमणिसमुद्गस्य आकारं संस्थानं धारयति तथाभूतं यज्जानुयुगं तेनोज्ज्वलो दीप्यमानः। 'आकार इङ्गितेऽपि स्यात्संस्थानाह्वानयोरपि' इति विश्वलोचनकारः॥

शौण्डस्तम्बेरमोद्दण्डशुण्डारम्योरुसौष्ठवः।
मणिकिङ्किणिसंकीर्णविशङ्कटकटिस्थलः ॥ ७ ॥

**शौण्डेति।** शौण्डो मत्तश्चासौ स्तम्बेरमश्च हस्ती तस्य योद्दण्डा प्रबला शुण्डा कर-

स्ततोऽपि रम्यमूरुसौष्ठवं यस्य सः । 'मत्ते शौण्डोत्कटक्षीबाः' इति, 'स्तम्बेरमद्विरदसिन्धुरनागदन्तिनो दन्तावलः करटिकुञ्जरकुम्भिपीलवः' इति, 'हस्तिनासा करः शुण्डा हस्तोऽस्याग्रं तु पुष्करम्' इति च हैमः । 'सक्थि क्लीबे पुमानूरुः' इति, 'सुष्ठु प्रशंसने' इति चामरः । मणिकिङ्किण्या संकीर्णे व्याप्तं विशङ्कटं च विशालं कटिस्थलं यस्य सः ॥

मध्यमाधुर्यविध्वस्तदिव्यसिंहमदोद्धतिः ।
गारुत्मतगिरिग्रावगरिष्ठोरस्तटान्तरः ॥ ८ ॥

**मध्येति** । मध्यमाधुर्येणावलग्नशोभया विध्वस्ता न्यक्कृता दिव्यस्य स्वर्गीयस्य सिंहस्य मदोद्धतिर्येन सः । गारुत्मतगिरेर्मरकताचलस्य यो ग्रावा शिलापट्टिका तद्वद्गरिष्ठं उरस्तटान्तरं वक्षोमध्यं यस्य सः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः॥

कम्बुकण्ठस्थलालम्बिमणिसम्राडलंकृतिः ।
आखण्डलमणिस्तम्भस्पर्धिदोर्दण्डचण्डिमा ॥ ९ ॥

**कम्बुकण्ठेति** । रेखात्रयेणाङ्कितः कण्ठः कम्बुकण्ठस्तद्रूपं स्थलं स्थानं तदालम्बिनी मणिसम्राडलंकृतिः कौस्तुभविभूषणं यस्य सः । 'कम्बुग्रीवा त्रिरेखासौ' इत्यमरः । आखण्डलमणिरिन्द्रनीलस्तन्निर्मितं स्तम्भं स्पर्धितुमसूयितुं शीलं यस्य तादृशोर्दोर्दण्डयोश्चण्डिमा प्रकोपोऽथ वा शोभातीव्रता यस्य सः । 'चण्डस्तीव्रे दैत्यभेदे यमदासेऽतिकोपने' इति विश्वलोचनकारः ॥

खण्डिताखण्डकोटीन्दुसौन्दर्यमुखमण्डलः ।
लावण्यलहरीसिन्धुः सिन्दूरतुलिताधरः ॥ १० ॥

**खण्डितेति** । खण्डितमखण्डितानां पूर्णानामिन्दुकोटेः सौन्दर्यं येन तादृशं मुखमण्डलं यस्य सः । लावण्यलहरीसिन्धुः सर्वाङ्गोच्छलत्कान्तिकः । सिन्दूरेण तुलितोऽधरो यस्य सः । अत्यरुणाधर इत्यर्थः । 'सिन्दूरं रक्तचूर्णके' इति विश्वः ॥

फुल्लारविन्दसौन्दर्यकन्दलीतुन्दिलेक्षणः ।
गण्डान्तताण्डवक्रीडाहिण्डन्मकरकुण्डलः ॥ ११ ॥

**फुल्लेति** । फुल्लयोर्विकसितयोररविन्दयोर्या सौन्दर्यकन्दली नवोद्भूता शोभा तया तुन्दिले पुष्टे ईक्षणे नेत्रे यस्य सः । 'कन्दलस्तु नवोद्भवः' इत्यमरः । गण्डान्तयोः कपोलप्रान्तयोर्या ताण्डवक्रीडा नृत्यचर्या तया हिण्डती चञ्चले मकरकुण्डले यस्य सः ॥

नवीनयौवनारम्भजृम्भितोज्ज्वलविग्रहः ।
अपाङ्गतुङ्गितानङ्गकोटिकोदण्डविक्रमः ॥ १२ ॥

**नवीनेति** । नवीनयौवनारम्भेण प्रथमकैशोरोद्गमेन जृम्भितो द्योतमान उज्ज्वलवि-

ग्रहः श्रृङ्गारमयी मूर्तिर्यस्य सः। 'श्रृङ्गारः शुचिरुज्ज्वलः' इत्यमरः। अपाङ्गाभ्यां नेत्रप्रान्ताभ्यां तुङ्गिता उच्चीकृता अनङ्गकोदण्डानां कोटिः कोटिसंख्याकस्मरधनुषां हृद्विवेधकतीक्ष्णशरवर्षित्वरूपा विक्रमा येन सः। 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः। अत्र तरुणीचित्तहरिणविक्षोभकत्वं दृशं तयोर्व्यङ्ग्यम्॥

सुधानिर्यासमाधुर्यधुरीणोदारभाषितः।
सान्द्रवृन्दाटवीकुञ्जकन्दरागन्धसिन्धुरः॥ १३॥

**सुधेति**। सुधानिर्यासस्य पीयूषसारस्य यन्माधुर्यं स्वादुत्वं तस्य धुरीणं भारवाहकमुदारभाषितमानन्ददातृवचनं यस्य सः। सान्द्रा लतादिभिर्निबिडा ये वृन्दाटवीकुञ्जा ये च तद्वर्तिगिरिकन्दरास्तत्र गन्धसिन्धुरो मत्तहस्ती तेषु तेषु च तद्वत्स्वच्छन्दविहारीत्यर्थः॥

धन्यगोवर्धनोत्तुङ्गश्रृङ्गोत्सङ्गनवाम्बुदः।
कलिन्दनन्दिनीकेलिकल्याणकलहंसकः॥ १४॥

**धन्येति**। धन्यः कृष्णधनवान् यो गोवर्धनो गिरिर्हरिदासवर्यस्तस्य यान्युत्तुङ्गान्युच्चानि श्रृङ्गाणि शिखराणि तेषामुत्सङ्गे मध्ये नवाम्बुदः। 'श्रृङ्गं प्रभुत्वे शिखरे' इति विश्वः। तत्राम्बुदवत्प्रतीयमानः कान्तिपानीयवर्षी चेत्यर्थः। कलिन्दनन्दिन्या यमुनाया जलकेलौ कल्याणकलहंसस्तद्वत्तत्र निःशङ्क इत्यर्थः॥

नन्दीश्वरधृतानन्दो भाण्डीरतटताण्डवी।
शङ्खचूडहरः क्रीडागेन्दूकृतगिरीश्वरः॥ १५॥

**नन्दीति**। नन्दीश्वरो नाम विचित्ररत्नसानुर्बहुनिर्झरो विविधतरुवल्लीभिः फलपुष्पोपेताभिर्विभूषितो व्रजेश्वरस्य राजधानी तस्मिन्धृतानन्दः सहर्षः भाण्डीरस्य कालिन्दीपरपारे वर्तिनो वटस्य तटे ताण्डवी नटनशीलः। शङ्खचूडो नाम कंसभृत्यो यक्षस्तस्य हरो विनाशकारी। क्रीडायै गेन्दूकृतः कन्दुकवदुत्तोलितो गिरीश्वरो गोवर्धनो येन सः। 'समौ कन्दुकगेन्दुकौ' इति हैमः॥

वारीन्द्रार्बुदगम्भीरः पारीन्द्रार्बुदविक्रमी।
रोहिणीनन्दनानन्दी श्रीदामोद्दामसौहृदः॥ १६॥

**वारीन्द्रेति**। वारीन्द्राणां समुद्राणामर्बुदादपि गम्भीरः। ब्रह्मरुद्राद्यलक्ष्याभिप्राय इत्यर्थः। पारीन्द्राणां सिंहानामर्बुदादपि विक्रमी। अपरिमितबल इत्यर्थः। 'सिंहः कण्ठीरवो हरिः। हर्यक्षः केसरीभारिः पञ्चास्यो नखरायुधः॥ महानादः पञ्चशिखः पारीन्द्रः पत्परी मृगात्' इति हैमः। रोहिणीनन्दनं बलदेवं सेवया नन्दयितुं शीलमस्येति तथा। श्रीदामनि श्रीराधिकाभ्रातरि स्वमित्र उद्दामं बलवत् सौहृदं यस्य सः॥

सुबलप्रेमदयितः सुहृदां हृदयंगमः ।
नन्दव्रजजनानन्दसंदीपनमहाव्रती ॥ १७ ॥

**सुबलेति** । सुबलस्तन्नामा गोपवर्यकुमारः प्रेमदयितः प्रियनर्मसखो यस्य सः । सुहृदां सुभद्रमण्डलीभद्रदेवप्रस्थादीनां गोपवर्यकुमाराणां हृदयंगमो मनोहरः । तेषां च यथाभावं सखेत्यर्थः । नन्दस्य व्रजेशस्य व्रजे ये जनाः प्राणिनस्तेषामानन्दसंदीपने सुखवर्धने महाव्रती नैष्ठिकः मालाकृदिव तरूणाम् ॥

शृङ्गिणीसंघसंग्राहिवेणुसंगीतमण्डलः ।
उत्तुङ्गपुङ्गवारब्धसंगरासङ्गकौतुकी ॥ १८ ॥

**शृङ्गिणीति** । शृङ्गिणीसंघं गोसमूहं संग्रहीतुमेकत्र कर्तुं शीलं यस्य तादृशं वेणुसंगीतमण्डलं यस्य सः । 'माहेयी सौरभेयी गौरुस्रामाहा च शृङ्गिणी' इत्यमरः । उत्तुङ्गैर्महाकायैः पुङ्गवैर्वृषैरारब्धे संगरे युद्धे आसङ्गकौतुकी रुचिविनोदयुक्तः ॥

विस्फुरद्वन्यशृङ्गारः शृङ्गाराभीष्टदैवतम् ।
उदञ्चत्पिच्छविञ्छोलीलाञ्छितोज्ज्वलविग्रहः ॥ १९ ॥

**विस्फुरदिति** । विस्फुरन्ति वन्यशृङ्गाराणि वनोद्भवलवङ्गकुसुमानि यस्य सः । तद्रचितवेषवानित्यर्थः । शृङ्गारस्योज्ज्वलरसस्याभीष्टदैवतम् । स हि नन्दनन्दनदैवतः सन् कृतार्थः । 'शृङ्गारः सुरते नाट्यरसे च गजमण्डने । शृङ्गारं चूर्णसिन्दूरलवङ्गकुसुमेषु च ॥' इति मेदिनीकारः । उदञ्चन्ती विचित्रकान्तिकतया विभान्ती या पिच्छविञ्छोली चन्द्रकश्रेणी तया उज्ज्वलविग्रहो यस्य सः । 'पङ्क्तिरालिस्तथा श्रेणी लेखा विञ्छोलिकापि च' इति त्रिकाण्डशेषः । पिञ्छमुकुटशोभितमौलिरित्यर्थः ॥

संचरच्चञ्चरीकालिपञ्चवर्णस्रगञ्चितः ।
सुरङ्गरङ्गणस्वर्णयूथीग्रथितमेखलः ॥ २० ॥

**संचरदिति** । संचरन्ती भ्राम्यन्ती चञ्चरीकाली यत्र तादृशी या पञ्चवर्णा स्रग्वैजयन्ती तया अञ्चितोऽभ्यर्चितः । 'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः' इति हलायुधः । सुरङ्गं यद्रङ्गणं तदाख्यं पुष्पं या च सुवर्णयूथी ताभ्यां ग्रथिता मेखला यस्य सः । 'रागे रङ्गं त्रपुणि च' इति हैमः । विचित्रकुसुमकाञ्चिक इत्यर्थः ॥

धातुचित्रविचित्राङ्गलावण्यलहरीभरः ।
गुञ्जापुञ्जकृताकल्पः केलितल्पितपल्लवः ॥ २१ ॥

**धात्वित्यादि** । रक्तपीतादिभिर्गिरिधातुभिर्यानि चित्राणि वक्षोभुजकपोलेष्वालेख्यानि तैर्विचित्रोऽङ्गलावण्यलहरीभरो यस्य सः । कर्बुरः । श्यामकान्तिमय इत्यर्थः ।

गुञ्जापुञ्जैर्हारकेयूरभावेन स्थितैः कृत आकल्पो वेशो यस्य सः । 'आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः । केलये तल्पिताः शय्यात्वेन रचिताः पल्लवा येन सः ॥

वपुरामोदमाध्वीकवर्धितप्रमदामदः ।
वृन्दावनारविन्दाक्षीवृन्दकन्दर्पदीपनः ॥ २२ ॥

**वपुरिति** । वपुरामोदमाध्वीकेन गात्रातिसुगन्धमधुना वर्धितः प्रमदानां युवतीनां मदो येन सः । वृन्दावनेत्यर्धकं स्फुटार्थम् ॥

मीनाङ्कसंकुलाभीरीकुचकुङ्कुमपङ्किलः ।
मुखेन्दुमाधुरीधारारुद्धसाध्वीविलोचनः ॥ २३ ॥

**मीनेत्यादि** । मीनाङ्केनोज्ज्वलाख्येन स्मरेण संकुलानां व्याप्तानामाभीरीणां गोपीनां कुचकुङ्कुमैः पङ्किलः । विलिप्तवक्षा इत्यर्थः । मुखेन्द्विति स्फुटार्थम् । धारा संततिः । 'धारा सैन्याग्रिमस्कन्धसंतत्योः पत्तनान्तरे । द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके ॥ खङ्गादीनां तु निशिते मुखे धारा प्रकीर्तिता । धारा क्वचिद्घनासारवर्षणे स्याद्व्रणेऽपि च ॥' इति विश्वः । तन्नेत्राणामत्र चकोरत्वं व्यङ्ग्यम् ॥

कुमारीपटलुण्ठाकः प्रौढनर्मौक्तिकर्मठः ।
अमन्दमुग्धवैदग्ध्यदिग्धराधासुधाम्बुधिः ॥ २४ ॥

**कुमारीति** । कुमारीणां कात्यायनीव्रतपराणां स्नान्तीनां पटान् वासांसि तटे स्थितानि लुण्ठाकः लुण्ठति हरतीति सः । तया प्रौढासु सयुक्तिकासु नर्मोक्तिषु विवस्त्रतया स्नान्तीनां जलदेवतावज्ञात्रीणां यो मूर्धाञ्जलितया नमस्कृते तदवज्ञाप्रायश्चित्तं भावीत्येवंविधासु कर्मठः प्रवीणः । 'कर्मशूरस्तु कर्मठः' इत्यमरः । अमन्दयोत्तमया मुग्धया मनोहरया वैदग्ध्यदिग्धापुष्टाया राधायास्तस्याः संबन्धी सुधाम्बुधिः पीयूषसिन्धुमज्जनवन्नर्मवाक्याद्राधायास्ताभिर्निमन्त्र्यानीतायाः सुखं भवानेवास्मिन् प्रायश्चित्तविधावाचार्य इति वैदग्ध्यदिग्धत्वं च व्यज्यते ॥

चारुचन्द्रावलीबुद्धिकौमुदीशरदागमः ।
धीरलालित्यलक्ष्मीवान्कन्दर्पानन्दबन्धुरः ॥ २५ ॥

**चार्वित्यादि** । चारुर्मनोज्ञा या चन्द्रावली तस्या बुद्धिः सैव कौमुदी तस्याः शरदागमः शरत्प्रवेशः तत्र यथा चन्द्रज्योत्स्नाविकासस्तथा । कृष्णागमे तद्बुद्धिविकाश इत्यर्थः । धीरेति धीरललिताभिधनायकगुणसंपन्न इत्यर्थः । तल्लक्षणं चोक्तम्—'परिहासपटुर्मृदुलः कलाकलापाश्रितस्तरुणः । कान्तावशगश्चिन्तारहितः कथितोऽत्र धीरललितोऽयम् ॥' इति काव्यकौस्तुभे । कन्दर्पानन्देन स्मरोत्सवेन बन्धुरो मनोज्ञः ॥

चन्द्रावलीचकोरेन्द्रो राधिकामाधवीमधुः ।
ललिताकेलिललितो विशाखोडुनिशाकरः ॥ २६ ॥

**चन्द्रेति** । चन्द्रावल्येव चन्द्रावली इन्दुश्रेणिस्तस्याश्चकोरेन्द्रः । 'ज्योत्स्नापेये चलचञ्चुचकोरविषसूचकाः' इति हैमः । तद्वत्तदासक्त इत्यर्थः । राधिका माधव्येव माधवी वासन्ती तस्या मधुः । माधवीलक्षणमुक्तं ग्रन्थकृद्भिः—'चेदियं प्रेयसा हातुं क्षणमप्यतिदुःशका । परमप्रेमवश्यत्वान्माधवीति तदोच्यते ॥' इति । वसन्त इव तस्याः प्रमोदक इत्यर्थः । उभयत्र श्लेषपरम्परितं रूपकम् । ललितया सह केलौ ललितः । तया सार्धं वाग्युद्धस्मरयुद्धादिक्रीडायां मनोहर इत्यर्थः । विशाखैवोडुस्तारा तस्यां निशाकरः । 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इत्यमरः । नक्षत्रं चन्द्र इव विशाखां शोभयन्नित्यर्थः ॥

पद्मावदनपद्मालिः शैब्यासेव्यपदाम्बुजः ।
भद्राहृदयनिद्रालुः श्यामलाकामलालसः ॥ २७ ॥

**पद्मेति** । पद्मेति विस्फुटार्थम् । पद्माशैब्ये चन्द्रावल्याः सख्यौ बोध्ये । भद्राश्यामले तु यूथेश्वर्यौ । श्यामलाया यः कामः कृष्णकर्मिकेच्छा तत्र लालसोऽतिसतृष्ण इत्यर्थः । स्वस्मिंस्तस्या वाञ्छायां विदितायां कृतार्थं मन्यमान इति यावत् ॥

लोकोत्तरचमत्कारलीलामञ्जरिनिष्कुटः ।
प्रेमसंपदयस्कान्तकृतकृष्णायसव्रतः ॥ २८ ॥

**लोक इति** । लोकोत्तरोऽलौकिकश्चमत्कारो विस्मयो याभिस्तथाभूतानां लीलामञ्जरीणां निष्कुटः । 'मञ्जरिर्वल्लरिः स्त्रियाम्' इति, 'गृहारामास्तु निष्कुटाः' इति चामरः । विचित्रलौकिकक्रीडाश्रय इत्यर्थः । प्रेमसंपदेवायस्कान्तश्चुम्बकमणिस्तेन कृतं कृष्णायसव्रतं यस्य सः । चुम्बकेन लौहमिव प्रेम्णा कृष्यमाण इत्यर्थः ॥

मुरलीचौरगौराङ्गीकुचकञ्चुकलुञ्चनः ।
राधाभिसारसर्वस्वः स्फारनागरतागुरुः ॥ २९ ॥

**मुरलीति** । मुरलीचौराणां विमुष्टवंशीनां गौराङ्गीणां गोपसुभ्रुवां कुचकञ्चुकानि लुञ्चत्याच्छिनत्तीति सः । राधाकर्तृको योऽभिसारः कृष्णान्तिकागमनं तत्सर्वस्वं यस्य सः । स्फारनागरता विस्तीर्णवैदग्धी तस्यां गुरुस्तदुपदेष्टा । 'विदग्धे नागरोऽन्यवत्' इति विश्वः ॥

राधानर्मोक्तिशुश्रूषावीरुन्नीरुद्धविग्रहः ।
कदम्बमञ्जरीहारिराधिकारोधनोद्धुरः ॥ ३० ॥

**राधेति** । राधाया या नर्मोक्तयः परिहासवचनास्तासां शुश्रूषैव वीरुल्लता तया नि-

रुद्धो व्याप्तो विग्रहो यस्य सः । तच्छ्रवणातिसतृष्ण इत्यर्थः । 'लता प्रतानिनी वीरुत्' इत्यमरः । यद्वा राधायाः सुहृत्पक्षेण सार्धं या नर्मोक्तयस्तासां शुश्रूषया श्रवणेच्छया सेवायै वा वीरुन्नीरुद्धविग्रहो लतामन्दिरगूढ इत्यर्थः । 'शुश्रूषा श्रोतुमिच्छायां परिचर्याकथानयोः' इति विश्वलोचनकारः । कदम्बमञ्जरीर्हरतीति तथाभूताया राधाया रोधने उद्धुरो दृप्तः । 'शौण्डीरो गर्वितः स्तब्धो मानी चाहंकृदुद्धतः । उद्ग्रीव उद्धुरो दृप्तः' इति धनंजयः ॥

कुडुङ्गक्रोडसंगूढराधासंगमरङ्गवान् ।
क्रीडोड्डामरधीराधाताटङ्कोत्पलताडितः ॥ ३१ ॥

**कुडुङ्गेति** । कुडुङ्गस्य निकुञ्जस्य क्रोडे मध्ये संगूढायाः राधायाः संगमे यो रङ्गस्तत्सखीनामिङ्गितं तज्जनितमाश्चर्यताज्ञानं वा तद्वान् । तदा क्रीडायामुड्डामरा प्रगल्भा धीर्यस्यास्तस्या राधायास्ताटङ्कोत्पलेन कर्णभूषणाम्बुजकोरकेण ताडितः । त्वद्धियेह निगूढामपि मां कदर्थयन्नसीति तेम प्रहृत इत्यर्थः ॥

अनङ्गसंगरोद्गारिक्षुण्णकुङ्कुमकङ्कटः ।
त्रिभङ्गीलङ्गिमाकारो वेणुसंगमिताधरः ॥ ३२ ॥

**अनङ्गेति** । अनङ्गसंगरं स्मरयुद्धं उद्गिरति व्यञ्जयति तथाभूतः क्षुण्णस्तत्संगरे त्रुटितः कुङ्कुमकङ्कटः काश्मीरानुलेपनरूपः कवचो यस्य सः । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । त्रिभङ्ग्या ग्रीवाकटिपादगतेन वक्रिमत्रयेण लङ्गिमो मनोहरश्चाकारो मूर्तिर्यस्य सः । वेणौ संगमितो वादनायार्पितोऽधरो येन सः ॥

वेणुविस्तृतगान्धर्वसारसंदर्भसौष्ठवः ।
गोपीयूथसहस्रेन्द्रः सान्द्ररासरसोन्मदः ॥ ३३ ॥

**वेण्विति** । वेणुना विस्तृतं गान्धर्वसारसंदर्भस्य सर्वोत्तमसंगीतग्रन्थस्य सौष्ठवं शोभा तद्विनिर्णेतृत्वलक्षणा येन सः । गोपीत्यर्धकमगूढार्थम् । यद्यपि यूथशब्दस्तिरश्चां वृन्दे पठ्यते तथापि सामान्यतो वृन्दे नेयस्तथैव हलायुधादिभिः पठितत्वात् ॥

स्मरपञ्चशरीकोटिक्षोभकारिदृगञ्चलः ।
चण्डांशुनन्दिनीतीरमण्डलारब्धताण्डवः ॥ ३४ ॥

**स्मरेति** । स्मरस्य याः पञ्चशर्यः शरपञ्चकश्रेणयस्तासां कोटिवत् क्षोभकारिणौ दृगञ्चलौ नेत्रप्रान्तौ यस्य सः । चण्डांशुनन्दिन्या यमुनायास्तीरमण्डलेष्वारब्धं ताण्डवं नृत्यं येन सः ॥

वृषभानुसुताभृङ्गीकामधुक्कमलाकरः ।
गूढाकूतपरीहासराधिकाजनितस्मितः ॥ ३५ ॥

**वृषभेति** । वृषभानुसुतैव भृङ्गी तस्याः कामधुक् वाञ्छितपूरकः कमलाकरस्तडागः । 'पद्माकरस्तडागोऽस्त्री' इत्यमरः । गूढाकूतो मानसमोदकाञ्जिघत्सुस्तेषु कां कां सामग्रीं न निक्षिपेदित्येवं गुप्ताभिप्रायः परिहासो यस्यास्तया राधिकया जनितं स्मितं यस्य सः । 'आकूतं स्यादभिप्राये' इति हलायुधः ॥

नारीवेशनिगूढात्मा व्यूढचित्तचमत्कृतिः ।
कर्पूरालम्बिताम्बूलकरम्बितमुखाम्बुजः ॥ ३६ ॥

**नारीति** । स्फुटार्थम् । व्यूढा प्राप्ता चित्ते चमत्कृतिर्येन सः । पुरुषेण मया धृतयुवतिवेशेनान्यालक्षितमस्मिन् परवेश्मनि चतुरचयसंकुलेऽपि भद्रमागतमिति चित्ते विस्मयः । कर्पूरेति प्रकटार्थम् । करम्बितं युक्तम् ॥

मानिचन्द्रावलीदूतिक्लृप्तसंधानकौशलः ।
छद्मघट्टतटीरुद्धराधाभ्रुकुटिघट्टितः ॥ ३७ ॥

**मानीति** । मानिन्याश्चन्द्रावल्या दूत्या क्लृप्तं संधानकौशलं चातुर्येण तत्संयोजनं यस्मिन् सः । दानच्छद्मना दानघट्टतट्यां रुद्धाया राधाया भ्रुकुट्या घट्टितो भ्रुवा क्षिप्तः॥

तद्भ्रुकुटिघट्टनाभिप्रायं व्यञ्जयितुं विशिनष्टि—

दक्षराधासखीहासव्याजोपालम्भलज्जितः ।
मूर्तिमद्बल्लवीप्रेमा क्षेमानन्दरसाकृतिः ॥ ३८ ॥

**दक्षेति** । दक्षायाश्चतुराया राधासख्या यो हासव्याजेनोपालम्भः पर्यनुयोगः कियदारभ्य भवानिह घटापालः सर्वसाधारणेऽस्मिन् वने भवत एव कथमधिष्ठातृत्वं विनयेन प्रावण्येन च विना धौर्त्येनैव नैव मधुसूदनः पद्मिनीसौरभ्यमुपलभेतेत्येवंविधस्तेन लज्जितः । मूर्तीति । बल्लवीनां प्रेमैव मूर्ततां गत इत्युत्प्रेक्षाविषय इत्यर्थः । क्षेमो मङ्गलात्मको य आनन्दरसः शृङ्गारादिस्तदाकृतिस्तदभिन्नविग्रहः । 'रसो वै सः' इति श्रुतेः ॥

अभिसारोल्लसद्भद्राकिङ्किणीनिनदोन्मुखः ।
वाससज्जीभवत्पद्माप्रेक्ष्यमाणाग्रपद्धतिः ॥ ३९ ॥

**अभिसारेति** । अभिसारे उल्लसन्त्या भद्रायाः किङ्किणीनिनदे उन्मुखो निहितकर्णः । अभिसारिकालक्षणं वक्ष्यति—'या पर्युत्सुकचित्तातिमदेन मदनेन वा । आत्मनाभिसरेत्कान्तं सा भवेदभिसारिका ॥' वाससज्जीभवन्त्या पद्मया प्रेक्ष्यमाणाग्रपद्धतिर्वर्त्मान्तो यस्य सः । तल्लक्षणं वक्ष्यति—'भवेद्वासकसज्जासौ सज्जिताङ्गरतालया । निश्चित्यागमनं भर्तुर्द्वारेक्षणपरायणा ॥' इति ॥

उत्कण्ठितार्तललितावितर्कपदवीं गतः ।
विप्रलब्धविशाखोरुविलापभरवर्धनः ॥ ४० ॥

**उत्कण्ठितेति**। उत्कण्ठिताया आर्ताया ललिताया यो वितर्कोऽनिष्टप्रभञ्जनात्मा तत्पदवीं गतः। तल्लक्षणं च वक्ष्यति—'सा स्यादुत्कण्ठिता यस्या वासं नैति द्रुतं पतिः। तस्यानागमने हेतुं चिन्तयन्त्याः शुचा भृशम्॥' इति। विप्रलब्धाया वञ्चिताया विशाखाया य उरुर्महान् विलापभरस्तस्य वर्धनः। तल्लक्षणं वक्ष्यति—'यस्या दूतीं स्वयं प्रेष्य समये नागतः प्रियः। शोचन्ती तं विना दुःस्था विप्रलब्धा तु सा स्मृता॥' इति॥

कलहान्तरिताश्यामामृग्यमाणमुखेक्षणः।
खण्डितोच्चण्डधीशैब्यारोषोक्तिरसिकान्तरः॥ ४१॥

**कलहेति**। कलहान्तरितया श्यामया मृग्यमाणं काम्यं मुखेक्षणं वदनदर्शनं यस्य सः। तल्लक्षणं च वक्ष्यति—'निरस्तो मन्युना कान्तो नमन्नपि यया पुरः। सानुतापयुता दीना कलहान्तरिता भवेत्॥' इति। खण्डितेन कान्तलाभमङ्गेन उच्चण्डा अतिकोपना धीर्यस्यास्तथाभूतायाः शैब्याया रोषोक्तिषु रसिकं तच्छ्रवणसतृष्णमन्तरं चित्तमध्यं यस्य सः। 'वस्तुमध्ये तथा छिद्रे व्यवसायेऽन्तरात्मनि। अवकाशे बहिर्योगे विशेषेऽवसरेऽन्तरम्॥' इति हलायुधः। तल्लक्षणं च वक्ष्यति—'अन्यया सह कान्तस्य दृष्टे संभोगलक्षणे। ईर्ष्याकषायितात्मासौ खण्डिता खलु कथ्यते॥' इति॥

विश्लेषविक्लवच्चन्द्रावलीसंदेशनन्दितः।
स्वाधीनभर्तृकोत्फुल्लराधामण्डनपण्डितः॥ ४२॥

**विश्लेषेति**। विश्लेषेण विरहेण विक्लवन्ती विह्वलीभवन्ती या चन्द्रावली तस्याः संदेशेन नन्दितः सहर्षः। 'विक्लवो विह्वलः स्मृतः' इति हलायुधः। स्वाधीनो विलाससुखभरेण स्वायत्तो भर्ता कान्तो यस्यास्तथाभूतायाः, अत एवोत्फुल्लाया राधाया मण्डने वेषरचने पण्डितोऽतिनिपुणः। तल्लक्षणं च वक्ष्यति—'यस्याः प्रेमगुणाकृष्टः प्रियः पार्श्वे न मुञ्चति। विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका॥' इति॥

चुम्बवेणुग्लहद्यूतजयिराधाधृताञ्चलः।
राधाप्रेमरसावर्तविभ्रमभ्रमितान्तरः॥ ४३॥

**चुम्बेति**। चुम्बश्च वेणुश्च तौ ग्लहौ पणौ यत्र तस्मिन् द्यूते पाशकक्रीडायां जयिन्या राधाया धृतोऽञ्चलो वस्त्रान्तो यस्य सः। 'पणोऽक्षेषु ग्लहः स्मृतः' इति, 'वस्त्रस्यान्तोऽञ्चलो मतः' इति च हलायुधः। त्वया मयि विजितायां मत्सख्या ललितायाश्चुम्बनं ग्राह्यम्, मया त्वयि विजिते तु त्वत्तो वेणुर्ग्राह्यः, इति निरूपितपणे द्यूते विजयिन्या राधया वंश्याकर्षणाय गृहीतवस्त्रान्त इत्यर्थः। राधायाः संबन्धी यः प्रेमरसस्तीव्रप्रवाहभावमापन्नस्तत्र ये आवर्तविभ्रमा भ्रमणविलासास्तैर्भ्रमितमन्तरमन्तरात्मा यस्य सः। 'आवर्तस्त्वम्भसां भ्रमः' इत्यमरः। तत्प्रेमप्रवाहपरतन्त्र इत्यर्थः॥

स्तोत्रफलं दर्शयन्नुपसंहरति—

इत्येषोन्मत्तधीः प्रेम्णा शंसन्ती कंसमर्दनम् ।
स्फुरन्तं पुरतः प्रेक्ष्य प्रौढानन्दोत्सवं ययौ ॥ ४४ ॥

**इत्येषेति** । एषा बल्लवसुन्दरीत्येभिर्नामभिः कंसमर्दनं कृष्णं शंसन्ती संकीर्तयन्ती तत्संकीर्तनमहिम्ना पुरः स्फुरन्तं साक्षाद्भवन्तं तं प्रेक्ष्य प्रौढानन्दोत्सवं ययौ तेन सह संभोगसुखमन्वभूत् ॥

आधुनिकान् भक्तान् प्रति कर्तव्यमाह—

प्रेमेन्दुसागराख्येऽस्मिन्नाम्नामष्टोत्तरे शते ।
विगाहयन्तु विबुधाः प्रीत्या रसनमन्दरम् ॥ ४५ ॥

**प्रेमेति** । हे विबुधा व्युत्पन्ना भक्ताः, पक्षे देवाः, प्रेमेन्दुसागराख्ये नाम्नामष्टोत्तरेऽस्मिन् स्तोत्रे प्रीत्यातिरुच्या रसनमन्दरं जिह्वामन्थाचलं भवन्तो विगाहयन्तु विलोडयन्तु । देवैर्मन्दरेण मथितक्षीरसमुद्राद्यथेन्दुरखिलतापोपशमकः प्रादुरभूत्, तथास्मात्स्तोत्राद्भक्तै रसनेन गृहीतात्तादृशः कृतप्रेमा प्रादुर्भावीति भावः ॥

इति श्रीप्रेमेन्दुसागराख्यं श्रीकृष्णनामाष्टोत्तरशतनामस्तोत्रं व्याख्यातम् ।

---

## केशवाष्टकम् ।

श्रीकेशवाय नमः ।

अथ केशवमष्टकेन स्तौति—

नवप्रियकमञ्जरीरचितकर्णपूरश्रियं
विनिद्रतरमालतीकलितशेखरेणोज्ज्वलम् ।
दरोच्छ्वसितयूथिकाग्रथितवल्गुवैकक्षकं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ १ ॥

**नवेत्यादि** । केशवमहं भजे इत्यनुषङ्गः । कीदृशमित्याह—विपिनदेशतः काननात् सायाह्नसमये व्रजे गोष्ठे विजयिनमतिप्रसन्नतया समागच्छन्तम् । पुनः कीदृशमित्याह—नवाभ्यां प्रियकमञ्जरीभ्यां कदम्बवल्लरीभ्यां रचितौ यौ कर्णपूरौ श्रोत्रावतंसौ ताभ्यां श्रीर्यस्य तम् । विनिद्रतराभिर्विकसिताभिर्मालतीभिः कलितेन निर्मितेन शिखरेण शिरोऽवतंसेनोज्ज्वलं सुन्दरम् । दरोच्छ्वसिताभिरीषद्विकसिताभिर्यूथीभिर्ग्रथितं वल्गु मनोहरं वैकक्षकं यस्य तम् । 'आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः । तिर्यग्वक्षसि निक्षिप्तं वैकक्षकमुदाहृतम् ॥' इति हलायुधः ॥

पिशङ्गि मणिकस्तनि प्रणतशृङ्गि पिङ्गेक्षणे
मृदङ्गमुखि धूमले शबलिहंसि वंशि प्रिये ।

इति स्वसुरभीकुलं तरलमाह्वयन्तं मुदा
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ २ ॥

**पिशङ्गीति ।** पिशङ्गीत्यादीनि नव संबुद्ध्यन्तानि स्फुटार्थानि । इत्येभिर्नामभिः स्वसुरभीकुलं सजातीयं स्वगोवृन्दमाह्वयन्तमाकारयन्तम् । 'गौः सौरभेयी माहेयी महासुरभिरर्जुनी' इति, 'कुलं तेषां सजातीनाम्' इति च हैमः ॥

घनप्रणयमेदुरान्मधुरनर्मगोष्ठीकला-
विलासनिलयान्मिलद्विविधवेशविद्योतिनः ।
सखीनखिलसारया पथिषु हासयन्तं गिरा
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ३ ॥

**घनेति ।** पथिषु मार्गेषु अखिलसारया सर्वश्रेष्ठया गिरा वाचा सखीन् वयस्यान् हासयन्तम् । 'सारो मज्जास्थिरांशयोः । बले श्रेष्ठे च सारं तु द्रविणन्यायवारिषु ॥' इति हैमः । सखीन् विशिनष्टि—घनप्रणयेन निबिडप्रेम्णा मेदुरान् स्निग्धान् मधुरनर्मगोष्ठ्यां स्वादुपरिहाससंसदि ये कलाविलासा वैदग्धीप्रकाशास्तेषां निलयान् । 'गोष्ठी सभायां संलापे' इति विश्वः । मिलन्प्राप्नुवन् यो विविधैर्वेशैर्विद्योतश्छविविशेषस्तद्विशिष्टान् । अतिमनोज्ञानित्यर्थः ॥

श्रमाम्बुकणिकावलीदरविलीढगण्डान्तरं
समूढगिरिधातुभिर्लिखितचारुपत्राङ्कुरम् ।
उदञ्चदलिमण्डलीद्युतिविडम्बिवक्रालकं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ४ ॥

**श्रमाम्बिति ।** श्रमाम्बुकणिकानामावलीभिर्दरविलीढमीषद्विभूषितं गण्डान्तरं कपोलमध्यं यस्य तम् । समूढा अन्विष्य प्राप्ता येऽतिसुगन्धयो गौरारुणसितनीला गिरिधातवस्तैर्लिखिताश्चारुपत्राङ्कुरा यत्र तम् । उदञ्चन्ती चपलीभवन्ती या अलिमण्डली भृङ्गविततिस्तस्या द्युतिं विडम्बयति न्यक्करोति तथाभूता वक्रालका क्षुद्रकुन्तला यस्य तम् ॥

निबद्धनवतर्णकावलिविलोकनोत्कण्ठया
नटत्खुरपुटाञ्चलैरलघुभिर्भुवं भिन्दतीम् ।
कलेन धवलाघटां लघु निवर्तयन्तं पुरो
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ५ ॥

**निबद्धेति ।** धवलाघटां गोसंहतिं कलेन वेणुनादेन लघु शीघ्रं निवर्तयन्तम् । 'धवला गवि' इति मेदिनीकारः । 'बहूनां घटना घटा' इति हैमः । 'लघु क्षिप्रमरं द्रुतम्'

इत्यमरः । तां विशिनष्टि—गोष्ठे निबद्धानां नवानां तर्णकावलीनां वत्सश्रेणीनां विलोकनोत्कण्ठया हेतुना नटत्खुरपुटाञ्चलैर्भुवं भूमिं भिन्दतीं लिखन्तीम् । 'वत्सस्तर्णक उच्यते' इति हलायुधः ॥

पदाङ्कततिभिर्वरां विरचयन्तमध्वश्रियं
चलत्तरलनैचिकीनिचयधूलिधूम्रस्रजम् ।
मरुल्लहरिचञ्चलीकृतदुकूलचूडाञ्चलं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ६ ॥

**पदाङ्केति** । पदाङ्कततिभिर्ध्वजवज्रादिचरणचिह्नवृन्दैः अध्वश्रियं मार्गशोभाम् वरां श्रेष्ठाम् । विरचयन्तं कुर्वन्तं चलतां तरलानां चपलानां नैचिकीनिचयानामुत्तमगोसमूहानां धूलिभी रजोभिर्धूम्रा स्रक् वनमाला यस्य तम् । 'उत्तमा गोषु नैचिकी' इति, 'धूम्रधूमलौ कृष्णलोहिते' इति चामरः । मरुल्लहर्या मन्दपवनतरङ्गेन चञ्चलीकृतो दुकूलचूडयोः पीताम्बरशिरोऽवतंसयोरञ्चलः प्रान्तो यस्य तम् ॥

दूरादेव मातृवर्गानन्दकारितां वर्णयन् विशिनष्टि—

विलासमुरलीकलध्वनिभिरुल्लसन्मानसाः
क्षणादखिलबल्लवीः पुलकयन्तमन्तर्गृहे ।
मुहुर्विदधतं हृदि प्रमुदितां च गोष्ठेश्वरीं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ७ ॥

**विलासेति** । विलासहेतुभूताया मुरल्याः कलध्वनिभिर्मधुरनादैरन्तर्गृहे स्थिता अखिलबल्लवीर्व्रजेश्वरीसमकक्षाः सर्वगोपीः पुलकयन्तं सरोमाञ्चाः कुर्वन्तम् । कीदृशीस्ता इत्याह—क्षणात् कृष्णागमनरूपादुत्सवाद्धेतोरुल्लसन्मानसाः प्रहृष्टचित्ताः गोष्ठेश्वरीं श्रीयशोदां च स्वमातरं हृदि मुहुः पुनः पुनः प्रमुदितां सप्रमोदां विदधतं कुर्वन्तम् ॥

तीव्रानुरागवतीभिः प्रियाभिस्तु साक्षात्कृत एवाभूदिति वर्णयन् विशिनष्टि—

उपेत्य पथि सुन्दरीततिभिराभिरभ्यर्चितं
स्मिताङ्कुरकरम्बितैर्नटदपाङ्गभङ्गीशतैः ।
स्तनस्तबकसंचरन्नयनचञ्चरीकाञ्चलं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ८ ॥

**उपेत्येति** । सुन्दरीततिभिर्युवतीश्रेणीभिर्हर्म्यावलीमुपेत्य आरुह्य पथि मार्गे एव नटदपाङ्गभङ्गीशतैः कक्षमालाभिरभ्यर्चितं पूजितम् । आभिरिति कवेस्तत्साक्षात्कारो व्यज्यते । तच्छतैः कीदृशैरित्याह—स्मितेति । मन्दहासवद्भिरित्यर्थः । स्वयं च ताः सच्चकारेति वर्णयन् विशिनष्टि—तासां स्तना विचित्रकञ्चुकीभूषितत्वात् स्तबका गुच्छा

इवेति स्तनस्तबकास्तेषु संचरन् नयनयोश्चञ्चरीकयोरिवाञ्चलः प्रान्तभागो यस्य तम् । लुप्तोपमेयम् । न च रूपकम् । नयनाञ्चलसंचारस्य तद्बाधकत्वात् ॥

अष्टकपाठफलमाह—

इदं निखिलबल्लवीकुलमहोत्सवोल्लासनं
क्रमेण किल यः पुमान्पठति सुष्ठु पद्याष्टकम् ।
तमुज्ज्वलधियं सदा निजपदारविन्दद्वये
रतिं ददचञ्चलां सुखयताद्विशाखासखः ॥ ९ ॥

**इदमिति** । यः पुमानिदं पद्याष्टकं सुष्ठु अतिशयेन पठति । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः । तं विशाखासखः सुखयतात् विशाखायाः सखा मित्रभावेनोपेतो नायकः । कृष्ण इत्यर्थः । किं कुर्वन्नित्याह—निजपदारविन्दद्वये अचञ्चलां स्थिरां रतिं भावं ददत् प्रापयन् । स्फुटार्थमन्यत् । अत्रापि पृथ्वीछन्दः ॥

इति केशवाष्टकं व्याख्यातम् ।

---

प्रथमं कुञ्जविहार्यष्टकम् ।

नमः कुञ्जविहारिणे ।

अथाष्टकाभ्यां कुञ्जविहारिणं कृष्णं स्तौति—

इन्द्रनीलमणिमञ्जुलवर्णः फुल्लनीपकुसुमाञ्चितकर्णः ।
कृष्णलाभिरकृशोरसि हारी सुन्दरो जयति कुञ्जविहारी ॥ १ ॥

**इन्द्रेति** । सुन्दरः प्रियापरिषदस्य(?) कुञ्जविहारी व्रजराजसूनुर्जयतीत्यन्वयः । कीदृश इत्याह—इन्द्रनीलमणेरिव मञ्जुलो वर्णो रूपं यस्य सः । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोक्षरे' इति विश्वः । अकृशोरसि विस्तीर्णवक्षसि कृष्णलाभिर्गुञ्जाभिर्हारी । गुञ्जाहारमनोहरवक्षा इत्यर्थः । स्फुटमन्यत् ॥

तद्रम्यतां स्फुटयति—

राधिकावदनचन्द्रचकोरः सर्वबल्लववधूधृतिचौरः ।
चर्चरीचतुरताञ्चितचारीचारुतो जयति कुञ्जविहारी ॥ २ ॥

**राधिकेति** । चर्चरी तालविशेषस्तस्यां या चतुरता प्रवीणता तया अञ्चिता चारीचारुता नृत्यगतिमनोज्ञता यस्य सः । विस्फुटार्थमन्यत् ॥

स्वं विहारप्रत्यूहभूतां स्वपरिषदां काचित्कीमन्यमानस्कतां च निरास्थदित्याह—

सर्वतः प्रथितकौलिकपर्वध्वंसनेन हृतवासवगर्वः ।
गोष्ठरक्षणकृते गिरिधारी लीलया जयति कुञ्जविहारी ॥ ३ ॥

**सर्वत इति** । सर्वतः प्रथितं ख्यातं कौलिकं गोपेन्द्रकुलपरम्पराप्राप्तं च यत्पर्व इन्द्रपूजोत्सवस्तस्य ध्वंसनेन दूरीकरणेन हेतुना हृतो वासवस्य इन्द्रस्य गर्वो लोकेश्वरताभिमानो येन सः । हृतपर्वणीन्द्रे कृतव्रजक्लेशे कमुपायं चकार तत्राह—गोष्ठेति । 'व्रजः स्याद्गोकुलं गोष्ठम्' इति हलायुधः । लीलया गिरिधारीत्यन्वयः । तत्र दुर्लभदर्शनानां प्रियाणां दर्शनोत्सवो महानभूदिति भावः ॥

एवं प्रत्यूहहेतुमिन्द्रमपि निर्जित्यानन्दमत्तो विहरतीत्याह—

रागमण्डलविभूषितवंशीविभ्रमेण मदनोत्सवशंसी ।
स्तूयमानचरितः शुकशारीश्रेणिभिर्जयति कुञ्जविहारी ॥ ४ ॥

**रागेत्यादि** । रागाणां नानावैचित्र्यवतां मण्डलेन वृन्देन विभूषिता या वंशी तस्या विभ्रमेण विलासेन मदनोत्सवं शंसति प्रियाः प्रतिज्ञापयतीति सः । वंशीनादमाधुर्यानुरक्ताभिः शुकादिपङ्क्तिभिः स्तूयमानचरितः । वर्णितोत्तमगायकतागुणक इत्यर्थः ॥

शातकुम्भरुचिहारिदुकूलः केकिचन्द्रकविराजितचूलः ।
नव्ययौवनलसद्व्रजनारीरञ्जनो जयति कुञ्जविहारी ॥ ५ ॥

**शातकुम्भेति** । शातकुम्भस्य सुवर्णस्य रुचिं कान्तिं हरति तिरस्करोति तादृग्दुकूलं वासो यस्य सः । 'हेम स्वर्णं जातरूपं सुवर्णं भर्म रुक्मं हाटकं शातकुम्भम्' इति हलायुधः । 'दुकूलं श्लक्ष्णवस्त्रे स्यात्क्षौमे च' इति मेदिनी । केकिचन्द्रकेण शिखिपिच्छेन विराजिता चूडा यस्य सः । डलयोः सावर्ण्यमत्र दर्शितम् । शशिव्यावृत्तयेऽत्र केकिशब्दः चन्द्रकेत्यनेनैवेष्टसिद्धेः । नव्येति स्फुटार्थम् । वंशीनादाकृष्टानां तासामभिमर्षणादिना परितोषकृदित्यर्थः ॥

स्थासकीकृतसुगन्धिपटीरः स्वर्णकाञ्चिपरिशोभिकटीरः ।
राधिकोन्नतपयोधरवारीकुञ्जरो जयति कुञ्जविहारी ॥ ६ ॥

**स्थासकीति** । स्थासकीकृतश्चर्चया धृतः सुगन्धिपटीरः सुरभिचन्दनो येन सः । सुगन्धिचन्दनचर्चितदेह इत्यर्थः । 'चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः । 'कृशृपृकटिपटिशौटिभ्य ईरन्' इत्युणादिसूत्रात्कटीरपटीरशब्दयोः सिद्धिः । स्वर्णकाञ्च्या कनकमेखलया परिशोभि मनोज्ञं कटीरं यस्य सः । 'कलापः सप्तकी काञ्ची मेखला रसना तथा । कटिसूत्रं सारसनं किङ्किणी क्षुद्रघण्टिका ॥' इति । 'आरोहश्च नितम्बः कटीकटीरं त्रिकस्थानम्' इति हलायुधः । राधिकाया उन्नतौ यौ पयोधरौ कुचौ सैव वारी गजबन्धनी तस्याः कुञ्जरः । 'वारी तु गजबन्धनी' इत्यमरः । वार्यां कुञ्जर इव तत्कुचशोभया निबद्ध इत्यर्थः । कान्तौ पानीयादिशब्दप्रयोगात्पयोधरौ कान्तिधराविति व्याख्यातारः ॥

गौरधातुतिलकोज्ज्वलभालः केलिचञ्चलितचम्पकमालः ।
अद्रिकन्दरगृहेष्वभिसारी सुभ्रुवां जयति कुञ्जविहारी ॥ ७ ॥

**गौरेति** । गौरधातुरचितेन तिलकेनोज्ज्वलं दीप्तिमद्भालमलिकं यस्य सः । 'भालं ललाटमहसोः' इति विश्वः । सुभ्रुवामद्रिकन्दरगृहेष्वभिसारीत्यन्वयः । 'दरी तु कन्दरो वा स्त्री' इत्यमरः ॥

विभ्रमोच्चलदृगञ्चलनृत्यक्षिप्तगोपललनाखिलकृत्यः ।
प्रेममत्तवृषभानुकुमारीनागरो जयति कुञ्जविहारी ॥ ८ ॥

**विभ्रमेति** । विभ्रमेण स्मरविलासेनोच्चलौ चपलौ दृगञ्चलौ नेत्रान्तौ तयोर्नृत्येन क्षिप्तं दूरीकृतं गोपललनानामखिलं कृत्यं गृहकर्म येन सः । नागरो रसिकः ॥

अष्टकपाठफलमाह—

अष्टकं मधुरकुञ्जविहारिक्रीडया पठति यः किल हारि ।
स प्रयाति विलसत्परभागं तस्य पादकमलार्चनरागम् ॥ ९ ॥

**अष्टकमिति** । मधुरया कुञ्जविहारिणः क्रीडया हारि मनोहरमिदमष्टकं यः पठति । 'चारु हारि रुचिरं मनोहरम्' इति हैमः । स तस्य कुञ्जविहारिणश्चरणार्चनरागं प्रयाति लभत इत्यन्वयः । तद्रागं कीदृशमित्याह—विलसन् परभागो यस्मात्तम् । 'परभागो गुणोत्कर्षे' इति हैमः । स्वागतात्र छन्दः । 'स्वागता रनभगैर्गुरुणा च' इति तल्लक्षणम् ॥

इति प्रथमं कुञ्जविहार्यष्टकं व्याख्यातम् ।

---

द्वितीयं कुञ्जविहार्यष्टकम् ।

नमः कुञ्जविहारिणे ।

अविरतरतिबन्धुस्मेरताबन्धुरश्रीः
कवलित इव राधापाङ्गभङ्गीतरङ्गैः ।
मुदितवदनचन्द्रश्चन्द्रकापीडधारी
मुदिरमधुरकान्तिर्भाति कुञ्जेविहारी ॥ १ ॥

**अविरतेत्यादि** । कुञ्जेविहारी नन्दसूनुर्भगवान् भातीत्यन्वयः । सप्तम्या अलुक् । स कीदृश इत्यपेक्षायां विशिनष्टि—अविरतं निरन्तरं रतिबन्धुना स्मरेण या स्मेरता स्मितं तया बन्धुरा रम्या श्रीर्यस्य सः । 'बन्धुरो रम्यनम्रयोः' इति हैमः । राधाया अपाङ्गभङ्गीतरङ्गैः कटाक्षोर्मिभिः कवलित इव ग्रस्त इव । मुदितः सहर्षो वदनचन्द्रो यस्य सः । चन्द्रकखचितमापीडं शिरोऽवतंसं धारयति तच्छीलः । मुदिरान्मेघादपि मधुरा कान्तिर्यस्य सः ॥

प्रियाभिः सह नाट्यविनोदवन्तं तं वर्णयन् विशिनष्टि—

ततसुषिरघनानां नादमानद्धभाजां
जनयति तरुणीनां मण्डले मण्डितानाम् ।

तटभुवि नटराजक्रीडया भानुपुत्र्या
विदधदतुलचारीर्भाति कुञ्जेविहारी ॥ २ ॥

**ततेति** । भानुपुत्र्या यमुनायास्तटभुवि नटराजक्रीडयोत्तमनर्तकलीलया विशिष्टः सन्नतुलचारीर्निरुपमनृगतीर्विदधत् कुर्वन् भातीत्यन्वयः । कस्मिन् सतीत्याह—तरुणीनां स्वप्रियाणां मण्डले वृन्दे परितः स्थित आनद्धभाजां मुरजमहितानां ततसुषिरघनानां वीणावेणुकांस्यतालानां नादं जनयति सति । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥' इत्यमरः । तरुणीर्विशिनष्टि—मण्डिताना-मिति । आपादशिखं विचित्रैर्भूषणैर्भूषितानामित्यर्थः ॥

न केवलं प्रेयसीरेवानन्दयति, अपि तु वृन्दाटवीस्थितानि सत्त्वानि चानन्दयती-(त्या)ह—

शिखिनि कलितषड्जे कोकिले पञ्चमाढ्ये
स्वयमपि नववंश्योद्दामयन्ग्राममुख्यम् ।
धृतमृगमदगन्धः सुष्ठु गान्धारसंज्ञं
त्रिभुवनधृतिहारिर्भाति कुञ्जेविहारी ॥ ३ ॥

**शिखिनीति** । शिखिनि मयूरे कलितषड्जे षड्जस्वरमुच्चारयति । कोकिले पञ्चमाढ्ये पञ्चमस्वरमुच्चारयति सति । स्वयमपि तदालापकृष्टस्तौ परिहर्षयन् नववंश्या गान्धारसंज्ञं ग्राममुख्यमुद्दामयन् निरर्गलतयालापयन् भाति । इदमत्र बोध्यम्—स्वरो नाम श्रुत्यारब्धमनुरणनम् । यदुक्तं संगीतशास्त्रे—'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणना-त्मकः । स्व(श्रु)तो रञ्जयति श्रोतुश्चित्रं(त्तं) स स्वर उच्यते ॥' इति । श्रुतिर्नाम स्वरार-म्भकावयवः शब्दविशेषः । यदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥' इति । श्रुतिसंख्या चोक्ता—'चतुश्चतुश्चतुश्चैव षड्जमध्यमप-ञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिऋषभधैवतौ ॥' इति । 'श्रुतिभ्यः स्युः स्वराः षड्जर्ष-भगान्धारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्तमे ॥' तेषां संज्ञाः—'सऋगमप-धनि' इत्यपरा मता इति । ग्रामलक्षणं चोक्तम्—'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां संदोहो ग्राम इत्यभिधीयते ॥ षड्जग्रामो भवेदाद्यो मध्यमग्राम एव च । गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ॥ नन्दावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः ॥' इति । मूर्छालक्षणं चोक्तम्—'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥' इति । षड्ज-मध्यमगान्धाराः स्वरसंघातभेदा ग्रामविशेषास्त्रयस्तेषां स्वरारोहावरोहमो(?) मूर्छना । ग्रामत्रयेऽपि प्रत्येकं सप्त सप्तेत्येकविंशतिर्मूर्छना इति । स्फुटार्थमन्यत् ॥

प्रियापरिषदा सह वृन्दाटव्यां पर्यटन्तं वर्णयन्विशिनष्टि—

अनुपमकरशाखोपात्तराधाङ्गुलीको
लघु लघु कुसुमानां पर्यटन्वाटिकायाम्।
सरभसमनुगीतश्चित्रकण्ठीभिरुच्चै-
र्व्रजनवयुवतीभिर्भाति कुञ्जेविहारी॥ ४॥

अन्विति। अनुपमाभिः करशाखाभिर्वामकराङ्गुलिभिरुपात्ता गृहीता राधादक्षिणकराङ्गुल्यो येन सः। 'अङ्गुल्यः करशाखाः स्युः' इत्यमरः। कुसुमानां वाटिकायां तया सह लघु लघु मन्दं मन्दं पर्यटन् परिक्रामन् चित्रकण्ठीभिर्विचित्रमधुरस्वराभिर्व्रजनवयुवतीभिर्ललितायाभिः श्रीराधासखीभिरनुगीतः। सरभसं सहर्षम्। 'रभसो वेगहर्षयोः' इति हैमः॥

प्रियाभिर्विशिष्टं तं कदाचिद्गोवर्धनो हरिदासवर्य एव तौर्यत्रिकेण तोषयतीति वर्णयति—

अहिरिपुकृतलास्ये कीचकारब्धवाद्ये
व्रजगिरितटरङ्गे भृङ्गसंगीतभाजि।
विरचितपरिचर्यश्चित्रतौर्यत्रिकेण
स्तिमितकरणवृत्तिर्भाति कुञ्जेविहारी॥ ५॥

अहीति। व्रजगिरितटरङ्गे चित्रतौर्यत्रिकेण विरचितपरिचर्य इत्यन्वयः। व्रजगिरेर्गोवर्धनाद्रेस्तट एव रङ्गस्तस्मिन्। 'रङ्गः स्यान्नृत्ययुद्धवोः' इति हैमः। 'तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्' इत्यमरः। रङ्गविशेषणमुखेन तौर्यत्रिकं संपादयति। अहिरिपुभिर्मयूरैः कृतं लास्यं नृत्यं यत्र तस्मिन्। 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इत्यमरः। कीचकैरारब्धं वाद्यं यत्र तस्मिन्। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। भृङ्गाणां भ्रमराणां यत्र गुञ्जितं तद्रूपं संगीतं भजतीति तस्मिन्। स्तिमिता तौर्यत्रिकानुभावेनार्द्रा करणवृत्तिरिन्द्रियव्यापारो यस्य सः॥

दिशि दिशि शुकशारीमण्डलैर्गूढलीलाः
प्रकटमनुपठद्भिर्निर्मिताश्चर्यपूरः।
तदतिरहसि वृत्तं प्रेयसीकर्णमूले
स्मितमुखमभिजल्पन्भाति कुञ्जेविहारी॥ ६॥

दिशीति। दिशि दिशि क्रीडद्भिः शुकादिमण्डलैर्निर्मितः कृतश्चाश्चर्यपूरो विस्मयप्रवाहो यस्य सः। हेतुगर्भं विशेषणमाह—गूढलीला रहस्यक्रीडाः प्रकटमनुपठद्भिरिति। अतिरहस्येकान्ते तच्छुकादिवृत्तं प्रेयस्या राधायाः कर्णमूलेऽभिजल्पन्। स्मितमुखमिति जल्पक्रियाविशेषणम्। चातुरक्षिकमावयोश्चरितं कथमेभिर्बहिश्चरैर्ज्ञातमिति विस्मयेन स्मितोदयः॥

श्रीराधिकाङ्गानि भङ्ग्या स्तुवन्तं कृष्णं वर्णयति—

तव चिकुरकदम्बं स्तम्भते प्रेक्ष्य केकी
नयनकमललक्ष्मीर्वन्दते कृष्णसारः ।
अलिरलमलकान्तं नौति पश्येति राधां
सुमधुरमनुशंसन्भाति कुञ्जेविहारी ॥ ७ ॥

**तवेति** । राधां प्रतीति शंसन् कथयन् भातीत्यन्वयः । इति किं तदाह—हे राधे, केकी मयूरस्तव चिकुरकदम्बं केशवृन्दं प्रेक्ष्य स्तम्भते । अयमस्याः केशपाशो विविधपुष्पचित्रितो मत्कलापन्यक्कारीति स्तब्धो भवतीत्यर्थः । कृष्णसारो मृगस्तव नयनकमललक्ष्मीर्वन्दते । मन्नेत्रतोऽप्यतिरम्यास्या नेत्राब्जशोभेति ताः प्रणमतीत्यर्थः । अलिर्भृङ्गस्तवालकान्तं नौति मच्चापलान्मन्नैल्याच्चातिशयितमस्या अलकचापलादीति त्वदलकावलीं स्तौति । अत्र व्यतिरेकेणोपमा व्यज्यते ॥

मदनतरलबालाचक्रवालेन विष्व-
ग्विविधवरकलानां शिक्षया सेव्यमानः ।
स्खलितचिकुरवेशे स्कन्धदेशे प्रियायाः
प्रथितपृथुलबाहुर्भाति कुञ्जेविहारी ॥ ८ ॥

**मदनेति** । मदनतरलेन स्मरचपलेन बालानां ललितादीनां चक्रवालेन वृन्देन कर्त्रा विविधानां वरकलानां शिक्षयोपदेशेन विष्वक् सर्वतः सेव्यमानः । 'तरलश्चञ्चले खिङ्गे हारमध्यमणावपि' इति विश्वः । बालावृन्दात् कलाशिक्षणोक्तिस्तस्य तत्रातिप्रावीण्यं व्यनक्ति । न च सर्वज्ञस्य हरेस्तस्मात् कलाशिक्षणमसंगतं तस्य पराख्या तत्स्वरूपशक्तिरूपत्वेनादोषत्वात् । एवमेव व्यञ्जितं श्रीमुनीन्द्रेण 'तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात्' इत्यत्र । शोभाविशेषेण स्थितिमाह—स्खलितेति । प्रथितोऽर्पितः ॥

अष्टकाध्ययनफलमाह—

इदमनुपमलीलाहारि कुञ्जेविहारि-
स्मरणपदमधीते तुष्टधीरष्टकं यः ।
निजगुणवृतया श्रीराधयाराधितस्तं
नयति निजपदाब्जं कुञ्जसद्माधिराजः ॥ ९ ॥

**इदमिति** । य इदमष्टकमधीते तं कुञ्जसद्माधिराजः कृष्णो निजपदाब्जं नयति प्रापयति । अष्टकं विशिनष्टि—अनुपमाभिः श्रीराधायूथसंबन्धादत्युत्कृष्टाभिर्लीलाभिर्हारि मनोहरं कुञ्जेविहारिस्मरणस्य पदं स्थानम् । श्रीराधया निकुञ्जमहिष्या । अत्र मालिनी छन्दः ।

'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् । एतदेव परस्मिन्नष्टकद्वये बोध्यम् ॥

इति द्वितीयं कुञ्जविहार्यष्टकं व्याख्यातम् ।

---

मुकुन्दाष्टकम् ।

श्रीमुकुन्दाय नमः ।

अथाष्टकेन मुकुन्दं स्तौति—

बलभिदुपलकान्तिद्रोहिणि श्रीमदङ्गे
घुसृणरसविलासैः सुष्ठु गान्धर्विकायाः ।
स्वमदननृपशोभां वर्धयन्देहराज्ये
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ १ ॥

**बलेति** । मुकुन्दो मम नेत्राभीष्टपूर्तिं प्रणयतु करोतु । दृग्गोचरोऽस्त्वित्यर्थः । मुखे कुन्दवद्धासो यस्येति, मुक्तिं ददाति विरहतापात् प्रत्यक्षः सन् संसारक्लेशाद्वा ध्यातः सन्निति मुकुन्दः । पृषोदरादीनि यथोपदिष्टमिति सूत्रात्प्रयोगसाधुत्वम् । किं कुर्वन्नित्यपेक्ष्याह—श्रीमदङ्गे घुसृणरसविलासैः कुङ्कुमचर्चाभिर्गान्धर्विकाया देहराज्ये स्वमदननृपशोभां वर्धयन् श्रीमत्यङ्गे ललाटवक्षःस्थलादौ स्वावयवे । 'कुङ्कुमं घुसृणं वर्णं प्रोक्तं लोहितचन्दनम् । काश्मीरजं च विद्वद्भिः कालेयं जागुडं स्मृतम् ॥' इति हलायुधः । असंगतिरलंकारः हेतुकार्ययोर्देशभेदात् । यदुक्तं काव्यकौस्तुभे—'असंगतिर्भवेद्भिन्नदेशत्वे हेतुकार्ययोः' इति । श्रीमदङ्गे कीदृशीत्याह—बलभिदुपल इन्द्रनीलमणिस्तत्कान्तिद्रोहिणि । ततोऽप्युज्ज्वलकान्तिमतीत्यर्थः ॥

उदितविधुपरार्धज्योतिरुल्लङ्घिवक्त्रो
नवतरुणिमरज्यद्बाल्यशेषातिरम्यः ।
परिषदि ललितालीं दोलयन्कुण्डलाभ्यां
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ २ ॥

**उदितेति** । उदितानां विधुपरार्धानां ज्योतींषि द्योतास्तान्युल्लङ्घयति तिरस्करोति तादृशं वक्त्रं यस्य सः । निरुपममुखकान्तिक इत्यर्थः । 'ज्योतिर्भद्योतदृष्टिषु' इति नानार्थवर्गः । नवेन तरुणिम्ना रज्यन् रक्तीभवन् यो बाल्यशेषस्तेनातिरम्यो दर्शनीयः । युवतिपरिषदि स्थितां ललितालीं राधां कुण्डलाभ्यां दोलयन् चपलां कुर्वन् कुण्डलकान्त्या तामधीरां रचयन् ॥

राधिकानिखातमनस्तां व्यञ्जयन्वर्णयति—

कनकनिवहशोभानिन्दि पीतं नितम्बे
तदुपरि नवरक्तं वस्त्रमित्थं दधानः ।

प्रियमिव किल वर्णं रागयुक्तं प्रियायाः
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ३ ॥

**कनकेति** । नितम्बे पीतं वस्त्रमन्तरायं तदुपरि नवरक्तमुत्तरीयं च वस्त्रमित्थं भङ्गीविशेषेण दधानः । तत्रोत्प्रेक्षा—प्रियाया रागयुक्तं वर्णमिवेति । कुतो दधानस्तत्राह—यतः प्रियम् । प्रीतिहेतुमित्यर्थः । यद्यप्यमरादिभिर्नितम्बशब्दः स्त्रीकट्याः पश्चाद्भागे पठितः, तथापि सामान्यतोऽत्र कटौ पठ्यते, हलायुधादिभिस्तथैव पठितत्वात् ॥

श्रीराधासरसि प्रियाभिः सह क्रीडन्तं वर्णयति—

सुरभिकुसुमवृन्दैर्वासिताम्भःसमृद्धे
प्रियसरसि निदाघे सायमालीपरीताम् ।
मदनजनकसेकैः खेलयन्नेव राधां
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ४ ॥

**सुरभीति** । निदाघे ग्रीष्मर्तौ प्रियसरसि श्रीराधिकाकुण्डे आलीपरीतां सखीयुक्तां राधां मदनजनकैः स्मरोद्दीपकैर्यन्त्रमुक्तैरम्बुसेकैः खेलयन् । कीदृशे प्रियसरसीत्याह—सुरभिभिः सुगन्धिभिः जले निपतितैः कुसुमवृन्दैर्वासितेन सुगन्धिना अम्भसा समृद्धे पूर्णे ॥

वृन्दाटव्यामागतायाः श्रीराधायाः सौरभ्येणापि माद्यतीति वर्णयति

परिमलमिह लब्ध्वा हन्त गान्धर्विकायाः
पुलकिततनुरुच्चैरुन्मदस्तत्क्षणेन ।
निखिलविपिनदेशान्वासितानेव जिघ्र-
न्प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ५ ॥

**परीति** । स्फुटार्थं पद्यम् । उन्मलब्धो(?)न्मादः ॥

सौरभ्यधारया राधामन्विष्योपलभ्य च तया सार्धं विहरतीति वर्णयति—

प्रणिहितभुजदण्डः स्कन्धदेशे वराङ्ग्याः
स्मितविकसितगण्डे कीर्तिदाकन्यकायाः ।
मनसिजजनिसौख्यं चुम्बनेनैव तन्व-
न्प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ६ ॥

**प्रणिहितेति** । कीर्तिदा श्रीवृषभानोर्नृपस्य पत्नी तत्कन्यकायाः राधायाः स्कन्धदेशे प्रणिहितभुजदण्डः तस्या एव स्मितविकसिते गण्डे कपोले चुम्बनेनैव मनसिजजनिसौख्यं निधुवनानन्दं तन्वन् विस्तारयन्निति । तद्विधानेति वैदग्ध्यं व्यङ्ग्यम् । विभावनात्रालंकारः । निधुवनाभावेऽपि तदानन्दस्योदयात् ॥

अतिस्निग्धाभ्यां मातापितृभ्यां प्रति मुहुर्लाल्यमानोऽतिविक्रमी नायकः सुभ्रुवां परमानुरागहेतुरिति तद्भावं वर्णयति—

प्रमददनुजगोष्ठ्याः कोऽपि संवर्तवह्नि-
व्रजभुवि किल पित्रोर्मूर्तिमान्स्नेहपुञ्जः।
प्रथमरसमहेन्द्रः श्यामलो राधिकायाः
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः॥ ७॥

**प्रमदेति**। संवर्तवह्निः प्रलयाग्निः। 'संवर्तः प्रलयः कल्पः' इत्यमरः। पित्रोर्यशोदानन्दयोर्व्रजेश्वरयोः स्नेहपुञ्ज एव मूर्तिमानिति स्नेहतद्विषयोरैक्यं वस्तु व्यज्यते। 'पिता मात्रा' इति सूत्रादेकशेषः। राधिकायाः प्रथमरसमहेन्द्रः शृङ्गाररसाधिष्ठातृदेवः। तद्भावेन तयानुभूयमान इत्यर्थः॥

कदाचिन्महामानिन्या राधाया मानभङ्गाय स्वयमेव व्यापृणातीति वर्णयति—

स्वकदनकथयाङ्गीकृत्य मृद्वीं विशाखां
कृतचटु ललितां तु प्रार्थयन्प्रौढशीलाम्।
प्रणयविधुरराधामानविध्वंसनाय
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः॥ ८॥

**स्वेति**। स्वकदनकथया निजव्यथानिवेदनया मृद्वीं कोमलचित्तां विशाखामङ्गीकृत्य स्वपक्षपातिनीं विधाय प्रौढशीलां ललितां तु कृतचटु यथा स्यादेवं प्रार्थयन्। 'चटु चाटु प्रियं वाक्यम्' इति हलायुधः। 'हे ललिते मदेकहितैषिणि सुन्दरि, वार्षभानवी मयि निर्दया वर्तते। त्वमपि चेदशनिमनस्तां धत्से तदातिव्यथितस्य कान्तत्वेन वृतस्य च मम का गतिः' इत्येवं कृतं रचितं चटु प्रियवचनं यत्र तद्यथा भवत्येवं याचमान इत्यर्थः। एतद्व्यापारस्य फलमाह—प्रणयेति। स्नेहदुःखिताया राधाया मानविभङ्गायेत्यर्थः। नन्वन्यतरुणीप्रसक्ते कृष्णे राधाया मानः स्वसुखपर्यवसायीति चेत् मैवम्, सितापानकपानार्हे तत्पानकं विहाय कषायपानकं पिबति सितापानकनिर्मातुस्तस्मिन् कोपस्तत्सुखार्थ एवेति प्रत्ययात्॥

मुकुन्दाष्टकपाठके शमादीन्गुणान्विदधत्तदष्टकपाठफलमाह—

परिपठति मुकुन्दस्याष्टकं काकुभिर्यः
सकलविषयसङ्गात्संनियम्येन्द्रियाणि।
व्रजनवयुवराजो दर्शयन्स्वं सराधे
स्वजनगणनमध्ये तं प्रियायास्तनोति॥ ९॥

**परीति**। यो जनः सकलविषयसङ्गात् शब्दस्पर्शरूपरसगन्धासक्ती[नी]न्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणानि समनांसि संनियम्य प्रत्याहृत्य देहधारणमात्रोपजीवनः सराधे

मुकुन्दे निहितमनाः सन् मुकुन्दस्याष्टकं काकुभिर्हर्षगद्गदवाग्भिः परिपठति, तं व्रजनवयुवराजः श्रीनन्दनृपसूनुः प्रियायाः श्रीराधायाः स्वजनगणनमध्ये तनोति । प्रियापरिचारमध्येऽङ्गीकरोतीत्यर्थः । श्रुतिश्च हरिभक्तस्य शमादीन्विधत्ते । तस्मादेवं विच्छान्तो दान्त उपारतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदित्यादिना ॥

इति मुकुन्दाष्टकं व्याख्यातम् ।

---

व्रजनवयुवराजाष्टकम् ।

नमः श्रीगोकुलयुवराजाय ।

अथाष्टकेन व्रजनवयुवराजं स्तौति—

मुदिरमदमुदारं मर्दयन्नङ्गकान्त्या
　वसनरुचिनिरस्ताम्भोजकिञ्जल्कशोभः ।
तरुणिमतरणीक्षाविक्लवद्बाल्यचन्द्रो
　व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ १ ॥

**मुदिरेत्यादि** । व्रजनवयुवराजः पित्रा नन्दराजेन व्रजराज्याधिकारेऽभिषिक्तः श्रीकृष्णो मे काङ्क्षितं कृषीष्ट मम वाञ्छितं पूर्यात् । पित्रा न्यस्तराज्यभारस्य सर्वार्थदाने सामर्थ्यात् । मुदिरो मेघः । किञ्जल्कः केसरः । तरुणिमा प्रथमकैशोरमेव तरणिः सूर्यस्तस्योद्गमस्येक्षया दर्शनेन विक्लवन् बाल्यचन्द्रो यस्य सः । तारुण्योद्गमनिलीयमानबाल्य इत्यर्थः । तेन चापल्यादिपरिहारो व्यङ्ग्यः । बाल्योत्तरं तारुण्योदयोऽलौकिकत्वाद्बोध्यः ॥

व्रजराज्ययोग्ये तस्मिन्पित्रादीनां स्नेहराशिः समवर्धतेत्याह—

पितुरनिशमगण्यप्राणनिर्मन्थनीयः
　कलिततनुरिवाद्धा मातृवात्सल्यपुञ्जः ।
अनुगुणगुरुगोष्ठीदृष्टिपीयूषवर्ति-
　र्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ २ ॥

**पितुरिति** । पितुर्व्रजेश्वरस्य अनिशं प्रतिक्षणं अगण्यैः प्राणैर्निर्मन्थनीयो निर्मन्थितुं योग्यः । मातृवात्सल्यपुञ्जः यशोदास्नेहराशिः । कलिततनुरिव धृतदेह इवेत्युत्प्रेक्ष्यते । अद्धेति साक्षादर्थेऽव्ययम् । अनुगुणाया अनुकूलाया गुरुगोष्ठ्याः पूज्यजनसभाया दृष्टिषु नेत्रेषु पीयूषवर्तिः सुधामय्यञ्जनलेखा । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति ॥' इति मेदिनी । रूपकेणोपमा व्यज्यते । तद्वत्सुखदो रोचमानश्चेत्यर्थः ॥

अखिलजगति जाग्रन्मुग्धवैदग्ध्यचर्या-
　प्रथमगुरुरुदग्रस्थामविश्रामसौधः ।

अनुपमगुणराजीरञ्जिताशेषबन्धु-
व्रंजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ३ ॥

**अखिलेति।** अखिले जगति सर्वस्मिल्लोके जाग्रत् प्रशस्तीया मुग्धवैदग्ध्यचर्या मनोज्ञकलाप्रक्रिया तस्याः प्रथमगुरुः। ताः कलास्तस्मादेव प्रादुर्बभूवुरित्यर्थः। उदग्रस्योत्कृष्टस्य स्थाम्नो वनस्य विश्रामः सुखनिवासस्तस्य सौधो महानालयः। 'प्राणः स्थाम बलं द्युम्नम्' इति हलायुधः। 'सौधोऽस्त्री राजसदनम्' इत्यमरः। अनुपमया सर्वोत्कृष्टसौशील्यसौहार्दादिकया गुणराज्या रञ्जिता अशेषाः सर्वे बान्धवाः स्वजना येन सः। 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः॥

अपि मदनपरार्धैर्दुष्करं विक्रियोर्मिं
युवतिषु निदधानो भ्रूधनुर्धूननेन ।
प्रियसहचरवर्गप्राणमीनाम्बुराशि-
र्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ४ ॥

**अपीति।** मदनपरार्धैरसंख्येयैरपि मदनैर्दुष्करं कर्तुमशक्यं विक्रियोर्मिं हृद्भेदनविचूर्णनलक्षणविकारतरङ्गं भ्रूधनुर्धूननेन युवतिषु निदधानोऽर्पयन्। विभावनात्रालंकारः। शरप्रयोगाभावेऽपि भेदनादेर्जातत्वात्। प्रियेति स्फुटार्थम्। मीनानामम्भोधिरिव सहचराणां सुखभूमिरित्यर्थः॥

नयनसृणिविनोदक्षोभितानङ्गनागो-
न्मथितगहनराधाचित्तकासारगर्भः ।
प्रणयरसमरन्दास्वादलीलाषडङ्घ्रि-
र्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ५ ॥

**नयनेति।** नयनसृणिना कटाक्षाङ्कुशेन यो विनोदस्ताडनं तेन क्षोभितो योऽनङ्गनागः स्मरगजस्तेनोन्मथितो गहनो दुरवगाहो राधाचित्तकासारगर्भस्तन्मनःसरोमध्यभागो येन सः। 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इति, 'कासारः सारसी सरः' इति चामरः। गर्भेति तस्या गाम्भीर्यातिशयो व्यङ्ग्यः। राधाया यः प्रणयरसः स एव मरन्दस्तदास्वादलीलायां षडङ्घ्रिर्भ्रमरः। 'अथ पुष्परसो मधुः', 'मकरन्दो मरन्दश्च' इति हैमः॥

अनुपदमुदयन्त्या राधिकासङ्गसिद्ध्या
स्थगितपृथुरथाङ्गद्वन्द्वरागानुबन्धः ।
मधुरिममधुधाराधोरणीनामुदन्वा-
न्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ६ ॥

**अनुपदमिति।** अनुपदं प्रतिव्यवसायमुदयन्त्या जायमानया राधिकासङ्गसिद्ध्या

गान्धर्वालाभफलेन कृत्वा स्थगितः स्तब्धतां नीतः पृथुरुत्कृष्टो रथाङ्गद्वन्द्वस्य चक्रवाकमिथुनस्य रागानुबन्धो येन सः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । रथाङ्गयो रात्रौ सङ्गाभावात्तस्यामनयोस्तदाधिक्यात्तद्रागानुबन्धन्यक्कारः । रूपवाक्चरितादिगता ये मधुरिमाणस्तान्येव मधूनि तेषां या धाराधोरण्यः प्रवाहश्रेणयस्तासामुदन्वान्समुद्रः । 'राजिर्लेखा ततिर्वीथी मालाल्यावलिपङ्क्तयः । धोरणी श्रेणी' इति हैमः । 'उदन्वानुदधिः सिन्धुः' इत्यमरः ॥

अलघुकुटिलराधादृष्टिवारीनिरुद्ध-
त्रिजगदपरतन्त्रोद्दामचेतोगजेन्द्रः ।
सुखमुखरविशाखानर्मणा स्मेरवक्त्रो
व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ७ ॥

**अलघ्विति** । अलघुरुत्कृष्टा कुटिला च या राधादृष्टिः कटाक्षवीक्षा सैव वारी गजबन्धनी तया निरुद्धो वशीभूतस्त्रिजगदपरतन्त्रः स्वतन्त्रः उद्दामोऽपि प्रबलश्च चेतोगजेन्द्रो यस्य सः । स्वसख्या वशीकृतं कृष्णं विज्ञाय सुखमुखराया हर्षबहुभाषिण्या विशाखाया या नर्म 'यो भवान् स्ववशचित्तोऽहं युवतीनां जिष्णुचित्तानां वश्यो न स्यामित्यसकृदवादीत्, स किमधुना राधिकाङ्गस्पर्शाय मां मुहुर्मुहुरभ्यर्थयते । निर्मन्थनार्हं भवतस्तुरङ्गस्येव स्ववशचित्तत्वम्' इति परिहासवाक्यं तेन स्मेरवक्त्रः । जितस्तयाहमिति स्मयमान इत्यर्थः ॥

विशाखाप्रसाधितया राधया सह क्रीडित्वा तदन्ते समागतायां विशाखायां परिहसन्तं वर्णयन्विशिनष्टि—

त्वयि रहसि मिलन्त्यां संभ्रमन्यासभुग्ना-
प्युषसि सखि तवालीमेखला पश्य भाति ।
इति विवृतरहस्यैर्ह्रेपयन्नेव राधां
व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ८ ॥

**त्वयीति** । हे विशाखे, तवाली राधा मेघोपरि विद्युदिव मदुपरि चापलं चकार । तस्यास्त्वदाल्या मेखला किङ्किणी रहस्येकान्ते त्वयि मिलन्त्यां सत्यां संभ्रमन्यासेन त्वरार्पणेन भुग्ना वक्रापि भाति । 'सुन्दरे किमसुन्दरम्' इति न्यायेन परिशोभत इत्यर्थः । 'वक्रं वृजिनं भङ्गुरमाविद्धं वेल्लितं नतं जिह्मम् । भुग्नमरालं कुटिलं व्याकुञ्चितमूर्तिमत्कथितम् ॥' इति हलायुधः । त्वं पश्य । इति दृष्ट्वा मच्छीलं निजालीशीलं च जानीहीत्यर्थः । इत्येवंप्रकारेण विवृतैः प्रकटितै रहस्यैरेकान्तचरितै राधां ह्रेपयन् सलज्जां कुर्वन् ॥

अष्टकपाठफलमाह—

व्रजनवयुवराजस्याष्टकं तुष्टबुद्धिः
कलितवरविलासं यः प्रयत्नादधीते ।

परिजनगणनायां नाम तस्यानुरज्य-

न्विलिखति किल वृन्दारण्यराज्ञीरसज्ञः ॥ ९ ॥

**व्रजेति।** कलिता वर्णिता वरविलासा यत्र तत्। वृन्दारण्यराज्ञी निकुञ्जपट्टमहिषी श्रीराधा तस्या रसज्ञो रसिकः। स्फुटमन्यत्॥

इति श्रीव्रजनवयुवराजाष्टकं व्याख्यातम्।

---

प्रणामप्रणयस्तवः।

नमः श्रीकृष्णाय।

अथ प्रणतिप्रियत्वात्प्रणामैः कृष्णं प्रसादयति—

कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे।

जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे॥ १ ॥

**कन्दर्पेति।** गोपेन्द्रो नन्दस्तस्य सूनवे पशुपाङ्गजायेत्यादिस्मरणादौरसपुत्राय श्रीकृष्णाय नमः। स्फुटमन्यत्॥

कृष्णलाकृतहाराय कृष्णलावण्यशालिने।

कृष्णाकूलकरीन्द्राय कृष्णाय करवै नमः॥ २ ॥

**कृष्णेति।** कृष्णला गुञ्जाः। कृष्णं यल्लावण्यमिन्द्रनीलमणिवत्तरलं रूपं तच्छालिने तद्विशिष्टाय। कृष्णा श्रीयमुना, 'नीलोत्पलदलश्यामा' इति पाद्मे तन्नामस्तोत्रात्, तस्याः कूटे(ले) करीन्द्राय। तद्वत्तत्र क्रीडते इत्यर्थः॥

सर्वानन्दकदम्बाय कदम्बकुसुमस्रजे।

नमः प्रेमावलम्बाय प्रलम्बारिकनीयसे॥ ३ ॥

**सर्वेति।** सर्वं समग्रं यदानन्दकदम्बं तद्रूपाय। 'सर्वं समस्तमन्यूनं समग्रं सकलं समम्। विश्वाशेषाखण्डकृत्स्नान्यक्षाणि निखिलाखिले॥' इति हैमः। पूर्णसुखघनायेत्यर्थः। यद्वा सर्वाणि नानाविधान्यानन्दकदम्बानि यस्मात्। निखिलसुखहेतवे इत्यर्थः। प्रेमैवावलम्बो यस्मिंस्तस्मै। यत्प्राप्तौ प्रेमैव हेतुरित्यर्थः। स्वभक्तप्रेमोपजीव्यायेति वा। 'विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः। प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥' इत्यादिस्मरणात्। प्रलम्बारेर्बलदेवस्य कनीयसेऽनुजाय॥

कुण्डलस्फुरदंसाय वंशायत्तमुखश्रिये।

राधामानसहंसाय व्रजोत्तंसाय ते नमः॥ ४ ॥

**कुण्डलेति।** कुण्डलाभ्यां स्फुरन्तावंसौ यस्य तस्मै। कुण्डलद्युतिशोभितस्कन्धायेत्यर्थः। वंशायत्तेन वेणुवादनसंकुचितेन मुखेन श्रीः शोभा यस्य तस्मै। राधाया मानसं चित्तमेव

मानसं तदाख्यं सरस्तस्मिन् हंसाय । तद्वत्तत्र विहरत इत्यर्थः । श्लेषपरम्परितं रूपकम् । व्रजस्य तद्वर्तिनो जननिचयस्य उत्तंसाय शिरोभूषणमाल्याय ॥

नमः शिखण्डचूडाय दण्डमण्डितपाणये ।
कुण्डलीकृतपुष्पाय पुण्डरीकेक्षणाय ते ॥ ५ ॥

**नम इति** । शिखण्डेन चन्द्रकेण चुम्बिता चूडा केशपाशी यस्य तस्मै । 'शिखा चूडा केशपाशी' इत्यमरः । दण्डेन रत्नखचितेन लगुडेन मण्डितः पाणिर्यस्य तस्मै । कुण्डलीकृतानि पुष्पाणि येन तस्मै । पुष्पकुण्डलभूषितकर्णायेत्यर्थः । पुण्डरीकेक्षणायारविन्दनेत्राय ॥

राधिकाप्रेममाध्वीकमाधुरीमुदितान्तरम् ।
कन्दर्पवृन्दसौन्दर्यं गोविन्दमभिवादये ॥ ६ ॥

**राधिकेति** । स्फुटार्थम् । अभिवादये प्रणमामि ॥

शृङ्गाररसशृङ्गारं कर्णिकारात्तकर्णिकम् ।
वन्दे श्रिया नवाभ्राणां बिभ्राणं विभ्रमं हरिम् ॥ ७ ॥

**शृङ्गारेति** । हरिं वन्दे इत्यन्वयः । कीदृशमित्याह—शृङ्गार उज्ज्वलापरपर्यायो यो रसस्तस्य शृङ्गारम् । भूषणमित्यर्थः । कर्णिकारैः पुष्पैरात्ते गृहीते कर्णिके येन तस्मै । 'कर्णिका कर्णभूषणम्' इत्यमरः । श्रिया विग्रहकान्त्या नवाभ्राणां नूतनाम्बुदानां विभ्रमं भ्रान्तिं बिभ्राणं धारयन्तम् । 'विभ्रमस्तु विलासे स्याद्विभ्रमो भ्रान्तिहावयोः' इति विश्वलोचनकारः ॥

साध्वीव्रतमणिव्रातपश्यतोहरवेणवे ।
कह्लारकृतचूडाय शङ्खचूडभिदे नमः ॥ ८ ॥

**साध्वीति** । साध्वीनां गोपसुभ्रुवां यानि व्रतानि कुलधर्मनिष्ठास्ता एव मणिव्रातास्तेषां पश्यतोहरो वेणुर्यस्य तस्मै । षष्ठ्या अलुक् । 'यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः' इति हैमः । वेणुनादेन व्रजतरुणीर्हठादाकर्ष इत्यर्थः । कह्लारेण सौगन्धिकेन पद्मेन कृता रचिता चूडा यस्य तस्मै । 'सौगन्धिकं तु कह्लारम्' इत्यमरः । शङ्खचूडं कंसभृत्यं यक्षं भिनत्तीति तस्मै ॥

राधिकाधरबन्धूकमकरन्दमधुव्रतम् ।
दैत्यसिन्धुरपारीन्द्रं वन्दे गोपेन्द्रनन्दनम् ॥ ९ ॥

**राधिकेति** । राधिकाधर एव बन्धूको बन्धुजीवः पुष्पभेदस्तस्य मकरन्दे मधुव्रतं भृङ्गम् । दैत्या एव सिन्धुरा हस्तिनस्तेषां पारीन्द्रं सिंहम् । तन्नाशकमित्यर्थः ॥

बर्हेन्द्रायुधरम्याय जगज्जीवनदायिने ।
राधाविद्युद्वृताङ्गाय कृष्णाम्भोदाय ते नमः ॥ १० ॥

**बर्हेति** । बर्हाण्येवेन्द्रायुधं शक्रचापस्तेन रम्याय । 'पिच्छबर्हे नपुंसके' इति, 'आयुधं

स्यात्प्रहरणम्' इति चामरः । जगतो जीवनं जीविका तदेव जीवनं जलं तद्ददातीति तस्मै । समस्तवस्तुविषयं रूपकमेतत् । तत्र परम्परितं रूपकमङ्गं तेन संकरोऽयम् ॥

प्रेमान्धबल्लवीवृन्दलोचनेन्दीवरेन्दवे ।
काश्मीरतिलकाढ्याय नमः पीताम्बराय ते ॥ ११ ॥

**प्रेमान्धेति ।** प्रेमान्धानां बल्लवीवृन्दानां लोचनान्येवेन्दीवराणि तेषामिन्दवे। तद्विकाशयते इत्यर्थः । काश्मीरतिलकेन कुङ्कुमोर्ध्वपुण्ड्रेणाढ्याय संपन्नाय । 'काश्मीरं कुङ्कुमे प्रोक्तम्' इति विश्वः ॥

गीर्वाणेशमदोद्दामदावनिर्वाणनीरदम् ।
कन्दुकीकृतशैलेन्द्रं वन्दे गोकुलबान्धवम् ॥ १२ ॥

**गीर्वाणेशेति ।** गीर्वाणेश इन्द्रस्तस्य मदो गर्व एवोद्दामदावो महान् वनाग्निस्तस्य निर्वाणे विनाशे नीरदं मेघम् । 'वनवह्निर्दवो दावः' इति हलायुधः । स्फुटमन्यत् ॥

एवं प्रणम्य स्वदोषविज्ञप्तिपूर्वकमनुग्रहं प्रार्थयति—

दैन्यार्णवे निमग्नोऽस्मि मन्तुग्रावभरार्दितः ।
दुष्टे कारुण्यपारीण मयि कृष्ण कृपां कुरु ॥ १३ ॥

**दैन्येति ।** दैन्यार्णवे दुर्गतिसमुद्रे निमग्नोऽहमस्मि । हे कारुण्यपारीण दयासागर, उपरिष्टान्मन्तुग्राव्णोऽपराधशिलाया भरेणार्दितः पीडितश्चास्मि । 'आगोऽपराधो मन्तुश्च' इत्यमरः । दुष्टे दैन्यमन्तुदोषवति मयि त्वं कृपां कुरु। यत्त्वं कारुण्यपारीणोऽसीति हेतुगर्भं संबोधनम्। दैन्यबोधिकेयं विज्ञप्तिः । संप्रार्थनात्मिका लालसामयी च सा भवति । एवमुक्तं श्रीहरिभक्तिरसामृते—'संप्रार्थनात्मिका दैन्यबोधिका लालसामयी । इत्यादिर्विविधा धीरैः कृष्णे विज्ञप्तिरीरिता ॥' इति ॥

ननु दुष्टे त्वयि मत्कृपा कथं स्यात्तत्राह—

आधारोऽप्यपराधानामविवेकहतोऽप्यहम् ।
त्वत्कारुण्यप्रतीक्षोऽस्मि प्रसीद मयि माधव ॥ १४ ॥

**आधार इति ।** यद्यप्यहमपराधानामाधारः खनिः अविवेकेन सारासारविवेकाभावेनापि हतः पीडितश्चास्मि, तथापि त्वत्कारुण्यप्रतीक्षस्त्वदनुकम्पां नीचोच्चविवेकशून्यां प्रपश्यन्नस्मि । हे माधव, तादृशेऽपि मयि प्रसीद प्रसादं कुरु । अन्यथा त्वत्कारुण्यस्य तथात्वं हीयेत, तद्वादिनः सन्तश्च व्रीडिताः स्युरिति भावः ॥

इति प्रणामप्रणयाख्यः स्तवो व्याख्यातः ।

---

## हरिकुसुमस्तबकम् ।

नमः श्रीकृष्णाय ।

गतिगञ्जितमत्ततरद्विरदं रदनिन्दितसुन्दरकुन्दमदम् ।
मदनार्बुदरूपमदघ्नरुचिं रुचिरस्मितमञ्जरिमञ्जुमुखम् ॥ १ ॥

**गतीत्यादि** । तं हरिं नमामीत्यन्वयः। कीदृशमित्याह—गत्या गञ्जितो न्यक्कृतो मत्ततरोऽतिमत्तो द्विरदो गजो येन तम् । रदैर्दन्तैर्निन्दितोऽवज्ञातः सुन्दराणां कुड्मलतया कमनीयानां कुन्दानां मदो गर्वो येन तम् । मदनार्बुदस्य रूपमदं हन्ति तादृशी रुचिः कान्तिर्यस्य तम् । रुचिरया स्मितमञ्जर्या मञ्जु चारु मुखं यस्य तम् ॥

मुखरीकृतवेणुहृतप्रमदं मदवल्गितलोचनतामरसम् ।
रसपूरविकासककेलिपरं परमार्थपरायणलोकगतिम् ॥ २ ॥

**मुखरीति** । मुखरीकृतेन वादितेन वेणुना हृता आकृष्टाः प्रमदा वनिता येन तम् । मदेन तारुण्यमत्ततया वल्गिते अरुणतया रुचिरे लोचनतामरसे नेत्रपद्मे यस्य तम् । रसपूरं सख्यहास्यादिरसप्रवाहं विकासयति या केलिस्तत्परं तन्निविष्टम् । परमार्थस्तत्त्वज्ञानपूर्वको भक्तिमार्गस्तत्परायणानां लोकानां गतिं साध्यसाधनरूपम् ॥

गतिमण्डितयामुनतीरभुवं भुवनेश्वरवन्दितचारुपदम् ।
पदकोज्वलकोमलकण्ठरुचं रुचकात्तविशेषकवल्गुतरम् ॥ ३ ॥

**गतीति** । गत्या मण्डिता ध्वजवज्रादिचिह्नैर्भूषिता यामुनतीरभूर्येन तम् । भुवनेश्वरैर्विधिरुद्राद्यैर्वन्दिते चारुपदे कमनीयचरणे यस्य तम् । पदकैरूर्ध्वाधोभावेन वक्षसि धृतैरुज्ज्वला कोमलस्य कण्ठस्य रुक् द्युतिर्यस्य तम् । रुचकेन गोरोचनेन आत्तं धृतं यद्विशेषकं तेन वल्गुतरमतिमनोहरम् । 'रोचनायां च रुचकम्' इति विश्वः । 'तिलकं तमालपत्रं चित्रकमुक्तं विशेषकं पुण्ड्रम्' इति हलायुधः ॥

तरलप्रचलाकपरीतशिखं शिखरीन्द्रधृतिप्रतिपन्नभुजम् ।
भुजगेन्द्रफणाङ्गणरङ्गधरं धरकन्दरखेलनलुब्धहृदम् ॥ ४ ॥

**तरलेति** । तरलेन चञ्चलेन प्रचलाकेन शिखिपिच्छेन परीता युक्ता शिरःशिखा यस्य तम् । 'प्रचलाकः शिखण्डश्च कलापो बर्ह उच्यते', 'शिखा चूडे शिरस्यपि' इति हलायुधः । शिखरीन्द्रो गोवर्धनस्तस्य धृतौ प्रतिपन्नः प्रागल्भ्येन प्राप्तो भुजो वामबाहुर्यस्य तम् । भुजगेन्द्रस्य कालियस्य फणाङ्गणेषु रङ्गधरं नृत्यगीतधारकम् । धरकन्दरेषु गिरिदरीषु यानि खेलनानि क्रीडास्तेषु लुब्धं हृद्यस्य तम् ॥

हृदयालुसुहृद्गणदत्तमहं महनीयकथाकुलधूतकलिम् ।
कलिताखिलदुर्जयबाहुबलं बलबल्लवशावकसंनिहितम् ॥ ५ ॥

**हृदयाल्विति**। हृदयालुभ्यः सुहृदयेभ्यः सुहृद्गणेभ्यो दत्तो मह उत्सवो येन तम्। 'हृदयालुः सहृदयः' इति, 'मह उद्धव उत्सवः' इति चामरः। महनीयेन पूज्येन कथाकुलेन चरितवृन्देन धूतः कलिरन्त्ययुगं येन तम्। 'कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि' इति हैमः। अथ वा तेन धूतः कलिः प्रेयसीनां विवादो येन तम्। कलितानि धृतान्यखिलदुर्जयानि बाहुबलानि येन तम्। बलश्च बल्लवशावका गोपबालाश्च तेषां संनिहितं संनिधिस्थम्॥

हितसाधुसमीहितकल्पतरुं तरुणीगणनूतनपुष्पशरम्।
शरणागतरक्षणदक्षतमं तमसाधुकुलोत्पलचण्डकरम्॥ ६॥

**हितेति**। हितानामनुवर्तिनां साधूनां यानि समीहितानि वाञ्छितानि तेषां कल्पतरुं पूरकम्। तरुणीगणेषु नूतनपुष्पशरं नवीनमदनम्। शरणागतानां प्रपन्नानां रक्षणे पालने दक्षतममतिचतुरम्। असाधुकुलान्यसुरवृन्दान्येवोत्पलानीन्दीवराणि तेषु चण्डकरं सूर्यम्। 'स्यादिन्दीवरमुत्पलम्' इति हलायुधः। तेषां संकोचकमित्यर्थः॥

करपद्ममिलत्कुसुमस्तबकं बकदानवमत्तकरीन्द्रहरिम्।
हरिणीगणहारकवेणुकलं कलकण्ठरवोज्ज्वलकण्ठरणम्॥ ७॥

**करपद्मेति**। करपद्मे मिलन्कुसुमस्तबको यस्य तम्। दक्षिणहस्तधृतपुष्पगुच्छमित्यर्थः। कुसुमस्तबकाख्यो दण्डकोऽयमिति सूचयन्मुद्रालंकारश्च। एवमुक्तं काव्यकौस्तुभे—'द्योतार्थद्योतनं मुद्रा शब्दैः प्रकृतवाचिभिः' इति। बको नाम दानवः स एव मत्तकरीन्द्रस्तस्मिन्हरिं तद्विदारे सिंहम्। हरिणीगणस्य हारक आकर्षको वेणुकलो वंशीमधुरनादो यस्य तम्। कलकण्ठरवात् कोकिलनादादप्युज्ज्वलः कण्ठरणो यस्य तम्। 'अन्यभृतः परपुष्टः कलकण्ठः कोकिलः पिकः प्रोक्तः' इति हलायुधः॥

रणखण्डितदुर्जनपुण्यजनं जनमङ्गलकीर्तिलताप्रभवम्।
भवसागरकुम्भजनामगुणं गुणसङ्गविवर्जितभक्तगणम्॥ ८॥

**रणेति**। रणेन युद्धेन खण्डिता दुर्जना दुष्टाः पुण्यजना राक्षसा येन तम्। 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' इत्यमरः। जनमङ्गलायाः कीर्तिलतायाः प्रभवो यस्मात्तम्। विस्तारितजगत्कल्याणकरयशोवृन्दमित्यर्थः। भवसागरस्य कुम्भजो नाम गुणो यस्य तम्। नामप्रवृत्तिनिमित्तमेको गुणो यस्यागस्त्यवदविद्यासागरं शोषयति, किं पुनः सर्वो गुण इति भावः। गुणसङ्गेन प्रकृतिस्पर्शेन विवर्जिता भक्तगणा यस्य तम्॥

गणनातिगदिव्यगुणोल्लसितं सितरश्मिसहोदरवक्त्रवरम्।
वरदृप्तवृषासुरदावघनं घनविभ्रमवेशविहारमयम्॥ ९॥

**गणनेति**। गंणा(ण)नातिगैरसंख्येयैर्दिव्यैः स्वरूपानुबन्धिभिर्गुणैः सार्वैश्वर्यसार्वज्ञसौहार्दकारुण्यादिभिरुल्लसितं प्रकाशितम्। सितरश्मेश्चन्द्रस्य सहोदरं सदृशं यद्वक्त्रं मुखं तेन

वरं वरणीयम् । दृप्तेषु वरो वरदृप्तोऽतिगर्वितो यो वृषासुरः स एव दावो वनवह्निस्तस्मिन् घनं मेघम् । तन्नाशकमित्यर्थः । घना निबिडा ये विभ्रमादयस्तन्मयं तत्प्रचुरम् । तत्र विभ्रमो विलासः, वेशो भूषादिधारणम्, विहारः कुञ्जादिक्रीडा ॥

मयपुत्रतमःक्षयपूर्णविधुं विधुरीकृतदानवराजकुलम् ।
..................कुलनन्दनमत्र नमामि हरिम् ॥ १० ॥

**मयेति** । मयपुत्रो व्योमो नामासुरस्तदेव तमस्तिमिरं तस्य क्षये विनाशे पूर्णविधुं राकेशम् । विधुरीकृतं कष्टं नीतं दानवराजानां कुलं येन तम् । 'विधुरं व्यसनं कष्टं कृच्छ्रं गहनमुद्धरेत्' इति धनंजयः । ........................................ । कुलं स्ववंशं नन्दयतीति तम् । छेकानुप्रासोऽत्रालंकारः । अस्य दण्डकस्य लक्षणम्—'सगणः । सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तबकम् ॥' इति । इह षट्पञ्चाशदुत्तराः शतं सगणा भवन्ति, तेषूनचत्वारिंशता सगणैः पादाश्चत्वारः कल्पनीयाः॥

एवं दण्डकेन प्रणम्यार्यया स्तौति—

उरसि परिस्फुरदिन्दिरमिन्दिन्दिरमन्दिरस्रजोल्लसितम् ।
हरिमङ्गनातिमङ्गलमङ्गलसच्चन्दनं वन्दे ॥ ११ ॥

**उरसीति** । हरिमहं वन्दे । कीदृशमित्याह—उरसि वक्षसि परिस्फुरन्ती रेखारूपा इन्दिरा लक्ष्मीर्यस्य तम् । इन्दिन्दिराणामलीनां मन्दिरं निवासस्थानं या स्रग् वैजयन्ती तयोल्लसितं शोभमानम् । अङ्गनानां युवतीनामतिमङ्गलम् । रञ्जकमित्यर्थः । अङ्गेषु लसद्दीप्यमानं चन्दनं मलयजानुलेपनं यस्य तम् । अत्र यमकमलंकारः । तल्लक्षणमुक्तम्—'भिन्नार्था संभवत्यर्थे स्वरव्यञ्जनसंहतिः । क्रमेण तेन चेद्भूच्छेदावृत्तिं यमकं तदा ॥' इति काव्यकौस्तुभे ॥

इति हरिकुसुमस्तबकं व्याख्यातम् ।

---

## गाथाछन्दःस्तवः ।

नमः श्रीकृष्णाय ।

अथ गाथाच्छन्दसा कृष्णं स्तौति—

परितोषितगोपवधूपटलं
　पटलङ्घितकाञ्चनसारचयम् ।
रचयन्तमुदारविलासकलां
　सकलाञ्चितपादमगाधबलम् ।
धवलं नवकीर्तिकुलैरमितम् ॥ १ ॥

**परीत्यादि** । परितोषितमालिङ्गनादिदानैः प्रहर्षितं गोपवधूनां पटलं वृन्दं येन तम् । अत्र कृष्णमिति विशेष्यं मृग्यम् । 'असाधारणानि विशेषणानि विशेष्यं लक्षयन्ति' इति

न्यायात् । 'अयमुदयति मुद्राभञ्जनः पद्मिनीनां–' इत्यादाविव । स्मरामीति क्रियापदं चाक्षेप्यम् । 'प्रविश पिण्डीम्' इत्यादौ 'गृहं भुङ्क्ष्व' इतिवत् । पटेन वाससा लङ्घितस्तिरस्कृतः काञ्चनसाराणां श्रेष्ठकनकानां चयो येन तम् । अत्युज्ज्वलपीताम्बरमित्यर्थः । उदारां महतीं वाञ्छितदात्रीं वा विलासकलां रचयन्तं प्रकटयन्तम् । सकलैः सर्वैर्देवादिभिरञ्चितौ पूजितौ पादौ यस्य तम् । सर्वेश्वरमित्यर्थः । नवैः कीर्तिकुलैर्धवलं शुभ्रम् । रूपेण तु श्याममित्यर्थः । अमितं विभुम् । गाथेदं छन्दः, पञ्चभिस्तोटकपादैर्निर्मितत्वात् । 'इह तोटकमम्बुधिसैर्गदितम्' इति तोटकलक्षणम् । 'पादैरसमं च गाथा' इति गीतावल्यां लिखिष्यते ॥

इति गाथाछन्दःस्तवो व्याख्यातः ।

---

त्रिभङ्गीछन्दःस्तवः ।

नमः श्रीकृष्णाय ।

अथ त्रिभङ्गीच्छन्दसा कृष्णं स्तौति—

**यमलार्जुनभञ्जनमाश्रितरञ्जनमहिगञ्जनघनलास्यभरं**
**पशुपालपुरंदरमभिसृतकन्दरमतिसुन्दरमरविन्दकरम् ।**
**वरगोपवधूजनविरचितपूजनमुरुकूजननववेणुधरं**
**स्मरनर्मविचक्षणमखिलविलक्षणतनुलक्षणमतिदक्षतरम् ॥ १ ॥**

**यमलेति** । हे दामोदर, त्वां वयं वन्देमहीति पञ्चमपद्येनान्वयः । कीदृशं त्वामित्याह— यमलौ युग्मीभूतावर्जुनौ भनक्तीति तम् । 'युग्मं यमलयामले' इति हैमः । नारदशापादर्जुनवृक्षयुग्मतां गतौ नरकूबरमणिग्रीवावुत्पाट्य तच्छापान्मोचयन्तमित्यर्थः । अहिः कालियस्तद्गञ्जनो घनो निबिडो लास्यभरो नृत्यातिशयो यस्य तम् । अभिसृता कन्दरा गिरिदरी येन तम् । पूर्वमभिसृत्य स्थितैर्वरैरुत्कृष्टरूपगुणैर्गोपवधूजनैर्विरचितं पूजनं स्वयौवनार्पणलक्षणं यस्य तम् । उरु चित्तमोहकतयोत्कृष्टं कूजनं नादो यस्य तादृशं नवं वेणुं धरति तम् । स्मरनर्मणि विचक्षणं पण्डितम् । अखिलविलक्षणानि गुणोत्थानि चिह्नोत्थानि च तनुलक्षणानि यस्य तम् । रक्तत्वतुङ्गत्वादिगुणयोगीनि, गुणोत्थानि करचरणेषु चक्राम्बुजवज्रादीनि रेखामयानि चिह्नोत्थानि, तानीमान्यवतारान्तरेष्वपि तथानुदयादखिलविलक्षणानि इत्युक्तम् । सर्वासु क्रियास्वतिकुशलत्वादतिदक्षतरम् । स्फुटार्थमन्यत् ॥

**प्रणताशनिपञ्जरमम्बरपिञ्जरमरिकुञ्जरहरिमिन्दुमुखं**
**गोमण्डलरक्षिणमनुकृतपक्षिणमतिदक्षिणममितात्मसुखम् ।**
**गुरुगैरिकमण्डितमनुनयपण्डितमवखण्डितपुरुहूतमखं**
**व्रजकमलविरोचनमलिकसुरोचनगोरोचनमतिताम्रनखम् ॥ २ ॥**

**प्रणतेति** । प्रणतानामशनिपञ्जरं वज्रशालाकम् । तद्वदभयस्थानमित्यर्थः । अम्बराणि वासांसि पिञ्जराणि यस्य तम् । 'पीते च पिञ्जरः' इति विश्वः । अरिकुञ्जराणां हरिं सिं-

दम् । गोमण्डलस्य धेनुवृन्दस्य रक्षिणं पालकम् । अनुकृताः कण्ठनादेन गत्या च सादृश्यं नीताः पक्षिणः शुकसारसादयो येन तम् । अतिदक्षिणमतिसरलम् । 'दक्षिणः सरलावामपरच्छन्दानुवर्तिषु' इति विश्वलोचनकारः । अमितान्यात्मभूतानि सुखानि लीलानन्दा यस्य तम् । गुरुणा रूपसौगन्ध्यादिगुणोत्कृष्टेन गैरिकेण गिरिधातुना मण्डितं तत्कृतैः पत्राङ्कुरादिचित्रैः शोभितम् । मित्राणां विप्राणां च रुष्टानामनुनये प्रसादने पण्डितम् । अवखण्डितः पुरुहूतस्येन्द्रस्य मखो येन तम् । व्रजकमलस्य गोकुलपद्मस्य विरोचनं रविम् । तत्प्रकाशकमित्यर्थः । अलिके ललाटे सुरोचनी ऊर्ध्वपुण्ड्रभावेन शोभमाना गोरोचना यस्य तम् । अतिताम्राः प्रशस्तारुणवन्तो नखा यस्य तम् । 'अतिशब्दः प्रशंसायाम्' इति विश्वः ॥

**उन्मदरतिनायकशानितसायकविनिधायकचलचिल्लिलत-**
**मुद्धतसंकोचनमम्बुजलोचनमघमोचनममरालिनतम् ।**
**निखिलाधिकगौरवमुज्ज्वलसौरभमतिगौरभपशुपीषु रतं**
**मृदुपदपल्लवमभ्रमुवल्लभरुचिदुर्लभसविलासगतम् ॥ ३ ॥**

**उन्मदेति** । उन्मदस्य रतिनायकस्य कामस्य ये शानितास्तीक्ष्णाः सायकाः शरास्तेषां विनिधायके समर्पिके चले चिल्लिलते भ्रूवल्ल्यौ यस्य तम् । भ्रूचापेनैव युवतिषु स्मरबाणानर्पयन्तमित्यर्थः । उद्धतान् दुर्वृत्तान् संकोचयति हतविक्रमान् करोतीति तम् । अमराल्या देवश्रेण्या नतं नमस्कृतम् । यतो निखिलेभ्योऽधिकं गौरवं पूज्यत्वं यस्य तम् । सर्वेश्वरमित्यर्थः । अतिगौरी भा यासां तास्तथाभूतासु पशुपीषु गोपीषु रतं संसक्तमनसम् । अभ्रमुवल्लभस्येन्द्रगजस्यैरावतस्य रुच्याभिलाषेणापि दुर्लभं सविलासगतं सखेलगमनं यस्य तम् । ऐरावतो यद्गतिं मनसापि लब्धुं न शक्नोति पादैः कुतस्तरां तां लभेतेति भावः । शिष्टानि स्पष्टार्थानि ॥

**भुजमूर्ध्नि विशङ्कटमधिगतशङ्कटनतकङ्कटमटवीषु चलं**
**नवनीपकरम्बितवनरोलम्बितमवलम्बितकलकण्ठकलम् ।**
**दुर्जनतृणपावकमनुचरशावकनिकरावकमरुणोष्ठदलं**
**निजविक्रमचर्चितभुजगुरुगर्वितगन्धर्वितदनुजादिबलम् ॥ ४ ॥**

**भुजमूर्ध्नीति** । भुजयोर्मूर्ध्नि विशङ्कटम् । विशालस्कन्धमित्यर्थः । अधिगतं ज्ञातं शङ्कटं स्वभयं यैस्तादृशानां नतानां प्रपन्नानां कङ्कटं कवचम् । तेषां तद्वत्त्रायकमित्यर्थः । अटवीषु काननेषु चलं चपलम् । नवैर्नीपैः कदम्बैः करम्बितेषु विशिष्टेषु वनेषु रोलम्बितं भृङ्गायितम् । तद्वत्तत्सौरभ्याणि जिघ्रन्तमित्यर्थः । अवलम्बितः कलकण्ठस्य पिकस्य कलो मधुरस्वरो येन तम् । कोकिलवत्कूजन्तमित्यर्थः । दुर्जनतृणानां पावकम् । वह्निवत्तानि दहन्तमित्यर्थः । अनुचराणां सह विक्रीडतां शावकनिकराणां गोपबालकवृन्दानामवकम् । दावाग्न्यादिभयाद्रक्षकमित्यर्थः । निजविक्रमैश्चर्चिता भुजास्तैर्गुरु महद्गर्वितं दर्पो येषां ते गन्धर्विताश्च ये दनुजास्ता-

नर्दयति पीडयति तच्छीलं बलं पौरुषं यस्य तम् । गन्धर्वः शरभवदतिपराक्रमी पशुजातिः । 'नभश्वरे तु गन्धर्वो मृगभेदे तुरङ्गमे' इति मेदिनी । तद्वदाचरन्तो गन्धर्विता इत्यर्थः ॥

श्रुतिरत्नविभूषणरुचिजितपूषणमलिदूषणनयनान्तगतिं
यमुनातटतल्पितपुष्पमनल्पितमदजल्पितदयितासरतिम् ।
वन्देमहि वन्दितनन्दममन्दितकुलमन्धितखलकंसमतिं
त्वामिह दामोदर हलधरसोदर हर नो दरमनुबद्धरतिम् ॥ ९ ॥

(त्रिभङ्गीपञ्चकम्)

**श्रुतीति** । श्रुतिवर्तिनो रत्नविभूषणयो रुचिभिर्जितः पूषा रविर्येन तम् । अलिदूषणी नयनान्तगतिर्यस्य तम् । कटाक्षयोः स्फुरता(तोः) कज्व(ज्ज)लश्यामलिम्ना चापल्येन च भृङ्गानवजानन्तमित्यर्थः । यमुनातटे तत्कुञ्जे तल्पितानि शय्याभावेन रचितानि पुष्पाणि येन तम् । अनल्पितं बहु मदजल्पितं गर्वभाषितं यस्यास्तया दयितया आप्ता रतिरानन्दो येन तम् । पितृभक्ततां दर्शयन्विशिनष्टि—वन्दितो नमस्कृतः स्तुतश्च नन्दो येन तम् । अमन्दितमुच्चीकृतं कुलं वंशो येन तम् । यतः अन्धिता प्रसारहानिं नीता खलस्य कंसस्य मतिर्येन तम् । हे दामोदर, हे हलधरसोदर, त्वां वयं वन्देमहीति । त्वं नोऽस्माकं दरं संसारभयं हर नाशय । त्वां कीदृशम् । अनुबद्धरतिं भक्तेषु सरागम् । त्रिभङ्गीति मात्रावृत्तमिदम्—'द्वात्रिंशत्कलिका यस्यां प्रतिपादं प्रकीर्तिताः । सा स्यात्त्रिभङ्गी विच्छिन्ना .........दशाष्टकैः ॥' इति छन्दःकौस्तुभे ॥

इति त्रिभङ्गीछन्दःस्तवो व्याख्यातः ।

---

अथ स्वस्य कृष्णैकगतिकतामयोग्यत्वेऽपि कृष्णगुणेन तदाशां चाह—

विरचय मयि दण्डं दीनबन्धो दयां वा
गतिरिह न भवत्तः काचिदन्या ममास्ति ।
निपततु शतकोटिर्निर्मलं वा नवाम्भ-
स्तदपि किल पयोदः स्तूयते चातकेन ॥ १ ॥

**विरचयेति** । हे दीनबन्धो, त्वं मयि दण्डं दयां वा विरचय कुरु । मम भवत्तस्त्वत्तः सकाशादन्या गतिराश्रयो नास्ति । आद्यादित्वात्तसिल् । पयोदाच्छतकोटिर्वज्रं नवाम्भो वा नूतनजलं निपततु, तथापि चातकेन वप्पीहेन पयोदः स्तूयते । 'चातकः स्तोकको वप्पीहः सारङ्गो नभोम्बुपः' इति हैमः । अर्थान्तरन्यासोऽत्रालंकारः । यथा चातकस्य मेघं विना नान्यो नद्यादिस्तृष्णाहरः, तथा त्वां विना ममान्यो विधिरुद्रादिर्न

संसारतापहरः । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इति श्रुतेः । 'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्यमः । एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥' इति स्मृतेश्च । इति भक्तिवृद्धिहेतुत्वादियं तापनाशरूपमुक्तिस्पृहा बोध्या । मालिन्यत्र छन्दः ॥

प्राचीनानां भजनमतुलं दुष्करं शृण्वतो मे
नैराश्येन ज्वलति हृदयं भक्तिलेशालसस्य ।
विश्वद्रीचीमघहर तवाकर्ण्य कारुण्यवीची-
माशाबिन्दूक्षितमिदमुपैत्यन्तरे हन्त शैत्यम् ॥ २ ॥

**प्राचीनानामिति** । प्राचीनानां शुकाम्बरीषादीनां भजनं दुष्करं दुःशकं शृण्वतो मे हृदयं नैराश्येन ज्वलति निर्वाञ्छिततया परितापमेति । मे कीदृशस्येत्याह—यतो भक्तिलेशेऽप्यलसस्य । किंतु हे अघहर, तव कारुण्यवीचीं कृपातरङ्गं निशम्य शास्त्रतः श्रुत्वा । हन्तेति हर्षे । अन्तरे हृन्मध्ये इदं शैत्यमुपैति । तद्वीचीं विशिनष्टि—विश्वेति । ब्रह्मादिपामरान्तगामिनीमित्यर्थः । शैत्यं कीदृशमित्याह—आशेति । वाञ्छालवेन सिक्तमित्यर्थः । 'बिन्दुर्लवेऽप्यवयवे' इति मेदिनी । लालसामयी विज्ञप्तिरियम् । पद्येऽस्मिन्मन्दाक्रान्ता छन्दः—'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' इति तल्लक्षणम् ॥

---

## मुकुन्दमुक्तावली ।

श्रीव्रजनागराय नमः ।

अथ वृत्तमुक्तावल्या मुकुन्दं स्तौति—

नवजलधरवर्णं चम्पकोद्भासिकर्णं
विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् ।
कनकरुचिदुकूलं चारुबर्हावचूलं
कमपि निखिलसारं नौमि गोपीकुमारम् ॥ १ ॥

**नवेति** । कमप्यलौकिकं गोपीकुमारं यशोदासुतं नौमि । कीदृशमित्याह—नवजलधरस्येव वर्णो रूपं यस्य तम् । चम्पकाभ्यामुद्भासिनौ भ्राजमानौ कर्णौ यस्य तम् । विकसितं यन्नलिनं पद्मं तदिवास्यं यस्य तम् । चारु कमनीयं बर्हं चन्द्रकमवति रक्षति । धारयतीति यावत् । चारुबर्हावचूडा मौलिर्यस्य तम् । 'शिखाचूडे शिरस्यपि' इत्युक्तेः । शिखिपिञ्छमौलिमित्यर्थः । स्फुटमन्यत् ॥

मुखजितशरदिन्दुः केलिलावण्यसिन्धुः
करविनिहितकन्दुर्बल्लवीप्राणबन्धुः ।

वपुरुपसृतरेणुः कक्षनिःक्षिप्तवेणु-
र्वचनवशगधेनुः पातु मां नन्दसूनुः ॥ २ ॥

**मुखेति ।** करे विनिहितोऽर्पितः कन्दुर्गेन्दुर्येन सः । वपुषोपसृता धृता रेणवो गोरजांसि येन सः । स्फुटमन्यत् ॥ मालिनीच्छन्दः । तल्लक्षणं गतं प्राक् ॥

ध्वस्तदुष्टशङ्खचूड बल्लवीकुलोपगूढ
भक्तमानसाधिरूढ नीलकण्ठपिच्छचूड ।
कण्ठलम्बिमञ्जुगुञ्ज केलिलब्धरम्यकुञ्ज
कर्णवर्तिफुल्लकुन्द पाहि देव मां मुकुन्द ॥ ३ ॥

**ध्वस्तेति ।** हे मुकुन्द, मां पाहीत्यन्वयः । ध्वस्तो निहतो दुष्टः शङ्खचूडो येन हे तादृश । ततः प्रहृष्टेन बल्लवीकुलेनोपगूढ कृतालिङ्गन । नीलकण्ठस्य मयूरस्य पिच्छेनाञ्चिता चूडा केशपाशो यस्य हे तादृश । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इत्यमरः । कण्ठलम्बिन्यो मञ्जुगुञ्जास्तत्कृतो हारो यस्य हे तादृश । केलये लब्धा रम्याः कुञ्जा येन हे तादृश । स्फुटमन्यत् ॥

यज्ञभङ्गरुष्टशक्रनुन्नघोरमेघचक्र-
वृष्टिपूरखिन्नगोपवीक्षणोपजातकोप ।
क्षिप्तसव्यहस्तपद्मधारितोच्चशैलसद्म-
गुप्तगोष्ठ रक्ष रक्ष मां तथाद्य पङ्कजाक्ष ॥ ४ ॥

**यज्ञेति ।** यज्ञभङ्गात् स्वपूजाविध्वंसाद्धेतोः रुष्टेन शक्रेण नुन्नं प्रेरितं यन्मेघचक्रं तद्वृष्टिपूरेण खिन्नानां गोपानां वीक्षणेन जातः कोपो यस्य हे तादृश । क्षिप्तं शीघ्रं सव्यहस्तपद्मेन वामकराम्बुजेन धारितो य उच्चशैलो गोवर्धनाद्रिस्तद्रूपेण सद्मना मन्दिरेण गुप्तं संरक्षितं गोष्ठं व्रजो येन हे तादृश । अत्र करपद्मस्याद्रिधृतिहेतुत्वेनाख्यातत्वेऽपि तद्धेतुत्वेनोपनिबन्धाद्विभावनाभेदोऽयमिति काव्यकौस्तुभे । हे पङ्कजाक्ष, तथा गोरक्षणवदद्य मां रक्ष रक्ष ॥ चित्रम् । 'चित्रसंज्ञमीरितं समानिकापदद्वयम्' इति तल्लक्षणम् । समानिकालक्षणं तु—'ग्लौरजौ समानिका तु' इत्येतत् ॥

मुक्ताहारं दधदुडुचक्राकारं सारं गोपीमनसि मनोजारोपी ।
कोपी कंसे खलनिकुरम्बोत्तंसे वंशे रङ्गी दिशतु रतिं नः शार्ङ्गी ॥५॥

**मुक्तेत्यादि ।** शार्ङ्गी श्रीकृष्णो नोऽस्मभ्यं रतिं प्रीतिं दिशतु ददातु । किं कुर्वन् । मुक्ताहारं दधत् वक्षसि धारयन् । यद्यपि हारशब्दो मुक्तासंदर्भस्य वाचकः, 'हारो मुक्तावली' इति विश्वप्रकाशात्, तथापि मुक्ताशब्दस्तस्य विशुद्धिबोधाय, 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । संनिधानादिबोधाय स्थितेष्वेतत्समर्थनम् ॥' इति भरत-

महर्षिवचनात् । हारं विशिनष्टि—उडुचकेति । नक्षत्रनिचयप्रख्यमित्यर्थः । सारं श्रेष्ठम्, सुवृत्तत्वादिगुणयोगात् । पुनः कीदृशः शार्ङ्गीत्याह—गोपीनां मनसि चित्ते मनोजारोपी स्मरार्पकः । कंसे कोपी सरोषः । कीदृशीत्याह—खलेति । निखिलदुष्टशिरोमणावित्यर्थः । वृत्त्यनुप्रासोऽयम् ॥

लीलोद्दामा जलधरमालाश्यामा क्षामाः कामादभिरचयन्ती रामाः ।
सा मामव्यादखिलमुनीनां स्तव्या गव्यापूर्तिः प्रभुरघशत्रोर्मूर्तिः ॥ ६ ॥

**लीलेति** । अघशत्रोः सा मूर्तिर्मामव्यात् रक्षतादिति संबन्धः । सा कीदृगित्याह—लीलासु क्रीडासूद्दामा स्वच्छन्दा । जलधरमालेव श्यामा । कामात्स्वविषयकादभिलाषाद्धेतोः रामास्तरुणीः क्षामाः कृशाङ्गीरभिरचयन्ती कुर्वती । अखिलमुनीनां शुकादिविरक्तानां स्तव्या। सैव तेषां ध्येयेत्यर्थः । गव्यानां गोसंहतीनां पूर्तिस्तृप्तिर्यया सा । 'खलगोरथाद्यत्' इति सूत्राद्गोशब्दात्समूहे यत् ॥ जलधरमाला । 'अब्धङ्गैः सा जलधरमालाम्भस्मा' इति तल्लक्षणम् । मुद्रा चात्रालंकारः ॥

पर्ववर्तुलशर्वरीपतिगर्वरीतिहराननं
नन्दनन्दनमिन्दिराकृतवन्दनं धृतचन्दनम् ।
सुन्दरीरतिमन्दिरीकृतकन्दरं धृतमन्दरं
कुण्डलद्युतिमण्डलप्लुतकंधरं भज सुन्दरम् ॥ ७ ॥

**पर्वेति** । हे चित्त, त्वं नन्दनन्दनं भजेत्यन्वयः । कीदृशमित्याह—पर्वणि पूर्णिमास्यां वर्तुलस्य पूर्णमण्डलस्य शर्वरीपतेश्चन्द्रस्य गर्वरीतिं हरति तथाभूतमाननं यस्य तम् । तदा कथंचित्पूर्णोऽपि चन्द्रो यद्वदनसाम्यमलब्ध्वा पुनः क्षीणकलो भवतीति भावः। सुन्दरीभिः साकं रतये मन्दिरीकृता कन्दरा येन तम् । धृतो मन्दरस्तत्तुल्यो गोवर्धनो येन तम् । कुण्डलयोर्द्युतिमण्डलेन प्लुता व्याप्ता कंधरा ग्रीवा यस्य तम् । 'ग्रीवायां शिरोधिः कंधरेत्यपि' इत्यमरः ॥

गोकुलाङ्गनमङ्गलं कृतपूतनाभवमोचनं
कुन्दसुन्दरदन्तमम्बुजवृन्दवन्दितलोचनम् ।
सौरभाकरफुल्लपुष्करविस्फुरत्करपल्लवं
दैवतव्रजदुर्लभं भज बल्लवीकुलवल्लभम् ॥ ८ ॥

**गोकुलेति** । बल्लवीकुलवल्लभं कृष्णं भज हे चित्त । कीदृशमित्याह—सौरभाकरौ सुगन्धिरवनी ये फुल्लपुष्करे विकसितपद्मे ते इव विस्फुरन्तौ करपल्लवौ यस्य तम् । दैवतव्रजस्य देववृन्दस्य दुर्लभं दुरधिगमम् । स्फुटार्थमन्यत् ॥ रङ्गिणी । अष्टादशाक्षराया धृत्याख्याया जायते भेदोऽयं वृत्तरत्नाकरादौ न लक्षितः । वाणीभूषणे तु लक्षितोऽस्ति । तल्लक्षणं त्वेवं निष्पद्यते—'रस्जजैरथ भेन रेण च रङ्गिणीति समीरितम्' इति ॥

तुण्डकान्तिदण्डितोरुपाण्डुरांशुमण्डलं
गण्डपालिताण्डवालिशालिरत्नकुण्डलम् ।
फुल्लपुण्डरीकखण्डक्लृप्तमाल्यमण्डनं
चण्डबाहुदण्डमत्र नौमि कंसखण्डनम् ॥ ९ ॥

**तुण्डेति** । अत्र जगति कंसखण्डनं नौमि । कीदृशमित्याह—तुण्डकान्त्या मुखरुचा दण्डितो न्यक्कृत उरुः पूर्णः पाण्डुरांशोश्चन्द्रस्य मण्डलो बिम्बं येन तम् । गण्डपाल्योः कपोलप्रान्तयोस्ताण्डवालिं नृत्यश्रेणीं शलतः प्राप्नुतस्तच्छीले रत्नकुण्डले यस्य तम् । 'पालिर्यूकाश्रिपङ्क्तिषु । जातश्मश्रुस्त्रियां प्रान्ते' इति हैमः । गण्डान्तचलन्मकरकुण्डलमित्यर्थः । फुल्लेन पुण्डरीकखण्डेन शुक्लाम्बुजवृन्देन क्लृप्तं रचितं यन्माल्यं तन्मण्डनं यस्य तम् । 'अब्जादिकदम्बे खण्डमस्त्रियाम्' इत्यमरः । स्फुटमन्यत् । इह वीरव्यञ्जनादोजस्विनो वर्णाः ॥

उत्तरङ्गदङ्गरागसंगमातिपिङ्गल-
स्तुङ्गशृङ्गसङ्गिपाणिरङ्गनातिमङ्गलः ।
दिग्विलासिमल्लिहासिकीर्तिवल्लिपल्लव-
स्त्वां स पातु फुल्लचारुचिल्लिरद्य बल्लवः ॥ १० ॥

**उदिति** । स बल्लवो गोपकुमारः श्रीकृष्णस्त्वामद्य पातु रक्षतात् । कीदृगित्याह—उत्तरङ्गवदाचरन् योऽङ्गरागो विलेपनं तेनातिपिङ्गलः । 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः । तुङ्गमुत्कृष्टं यच्छृङ्गं तत्सङ्गी पाणिर्यस्य सः । दिक्षु विलसन्ति प्रसरन्ति दिग्विलासिनः मल्लिवद्धास उज्ज्वलतालक्षणः प्रकाशो येषां ते मल्लिहासिनः । ततः कर्मधारयः । तथाभूताः कीर्तिवल्लिपल्लवा यस्य सः । फुल्ले कान्त्युल्लसिते चारुचिल्ली कमनीयभ्रुवौ यस्य सः ॥ तूणकम् । तल्लक्षणं च—'तूणकं समानिकापदद्वयं विनान्तिमम्' इत्येतत् ॥

इन्द्रनिवारं व्रजपतिवारं निर्धुतवारं हृतघनवारम् ।
रक्षितगोत्रं प्रीणितगोत्रं त्वां धृतगोत्रं नौमि सगोत्रम् ॥ ११ ॥

**इन्द्रेति** । व्रजपतिवारं गोकुलेशपुत्रं त्वामहं नौमि । कीदृशम् । इन्द्रं यज्ञभङ्गात्कुपितं निवारयतीति तम् । कर्मण्यण् । निर्धुतानि स्वसंकल्पेनैव शोषितान्यनन्तानि वारि जलानि येन तम् । ननु मेघाः पुनर्वर्षिष्यन्ति तत्राह—**हृतेति** । दूरीकृतमेघजालमित्यर्थः । एवं सगणमिन्द्रं निरस्य रक्षिता गोत्रा व्रजभूर्येन तम् । प्रीणिता गोत्रा गोसंहतिर्येन तम् । धृतो गोत्रो गोवर्धनाद्रिर्येन तम् । सगोत्रं गोत्रेण प्रसन्नेन बन्धुगणेन सहितम् । 'गोत्रं क्षेत्रेऽन्वये छत्रे संभाव्यबोधवर्त्मनोः । वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवां गणे ॥' इति हैमः । पादान्तयमकमिदम् ॥

कंसमहीपतिहृद्गतशूलं संततसेवितयामुनकूलम् ।
वन्दे सुन्दरचन्द्रकचूलं त्वामहमखिलचराचरमूलम् ॥ १२ ॥

**कंसेति** । त्वामहं वन्दे । कीदृशमित्याह—अखिलस्य सर्वस्य चराचरस्य जगतो मूलं कारणम् । तव तु मूलं नास्ति मूलस्य मूलाभावात् । स्फुटमन्यत् ॥ अतिरम्यत्वात्पज्झटिकाभ्यां स्तौति । मात्रावृत्तमेतत् । तल्लक्षणं चोक्तं छन्दःकौस्तुभे—'प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झटिका पुनरत्र विवेकः क्वापि न मध्यगतो गुरुरेकः ॥' इत्येतत् । नवमगुरुत्वं व्यभिचरन्ति छन्दोविदः ॥

मलयजरुचिरस्तनुजितमुदिरः पालितविबुधस्तोषितवसुधः ।
मामतिरसिकः केलिभिरधिकः सितसुभगरदः कृपयतु वरदः ॥ १३ ॥

**मलयजेति** । पालिता विबुधाः पण्डिता देवाश्च येन सः । तोषिता वसुधा पृथ्वी येन सः । सिताः कुन्दवदुज्ज्वलाः सुभगास्तत्कुड्मलवन्मनोज्ञाश्च रदा यस्य सः । स्फुटमन्यत् ॥

उररीकृतमुरलीरुतभङ्गं नवजलधरकिरणोल्लसदङ्गम् ।
युवतिहृदयधृतमदनतरङ्गं प्रणमत यामुनतटकृतरङ्गम् ॥ १४ ॥

**उररीकृतेति** । उररीकृतः स्वीकृतः । प्रकासि(शि)त इति यावत् । मुरलीरुतानां वेणुनादानां भङ्गस्तरङ्गो येन तम् । नवजलधरस्येव ये किरणास्तैरुल्लसन्त्यङ्गानि यस्य तम् । यामुनतटे कृतो रङ्गो नृत्यं येन तम् । कृष्णं प्रणमत यूयम् ॥ पज्झटिके । प्राग्वत् ॥

नवाम्भोदनीलं जगत्तोषिशीलं मुखासङ्गिवंशं शिखण्डावतंसम् ।
करालम्बिवेत्रं वराम्भोजनेत्रं धृतस्फीतगुञ्जं भजे लब्धकुञ्जम् ॥ १५ ॥

**नवाम्भोदेति** । जगत्तोषि शीलं स्वभावः सच्चरितं वा यस्य तम् । 'शीलं स्वभावे सद्वृत्ते' इति विश्वः । मुखासङ्गी वदनलग्नो वंशो यस्य तम् । स्फुटमन्यत् ॥

हृतक्षोणिभारं कृतक्लेशहारं जगद्गीतसारं महारत्नहारम् ।
मृदुश्यामकेशं लसद्वन्यवेशं कृपाभिर्नदेशं भजे बल्लवेशम् ॥ १६ ॥

**हृतेति** । बल्लवेशं कृष्णं भजे । कीदृशमित्याह—हृतः क्षोण्या भूमेर्भारो येन तम् । कृतः क्लेशहारो दुःखनाशो येन तम् । जगति गीतः सारो बलं यस्य तम् । 'सारो बले मज्जनि च स्थिरांशे' इति विश्वः । महान्ति रत्नानि येषु तादृशा हारा यस्य तम् । कृपाभिर्नदेशं करुणासमुद्रम् ॥ भुजङ्गप्रयातम् । तल्लक्षणं च 'भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः' इत्येतत् ॥

उल्लसद्बल्लवीवाससां तस्करस्तेजसा निर्जितप्रस्फुरद्भास्करः ।
पीनदोःस्तम्भयोरुल्लसच्चन्दनः पातु वः सर्वतो देवकीनन्दनः ॥ १७ ॥

**उदिति** । देवकीनन्दनो यशोदासुतो वो युष्मान् पातु । 'द्वे नाम्नी नन्दभार्याया यशोदा

देवकीति च' इति स्मरणात् । स कीदृगित्याह—उल्लसतां स्वर्णरसाक्तप्रान्ततया देदीप्यमानानां बल्लवीवाससां तस्करोऽपहर्ता । स्फुटार्थमन्यत् ॥

**संसृतेस्तारकं तं गवां चारकं वेणुना मण्डितं क्रीडने पण्डितम् ।**
**धातुभिर्वेषिणं दानवद्वेषिणं चिन्तय स्वामिनं बल्लवीकामिनम् ॥ १८ ॥**

**संसृतेरिति** । संसारसागरात्पारं नयन्तमित्यर्थः । धातुभिर्गैरिकैर्वेषिणं कृतवेषम् । स्फुटमन्यत् ॥ स्रग्विणी । 'कीर्तितैषा चतूरेफिका स्रग्विणी' इति तल्लक्षणम् ॥

**उपात्तकवलं परागशबलं मदेकशरणं सरोजचरणम् ।**
**अरिष्टदलनं विकृष्टललनं नमामि समहं सदैव तमहम् ॥ १९ ॥**

**उपात्तेति** । उपात्तो गृहीतः कवलो दध्योदनपिण्डो येन तम् । परागैः पुष्परजोभिः शबलं चित्रा । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः ॥

**विहारसदनं मनोज्ञरदनं प्रणीतमदनं शशाङ्कवदनम् ।**
**उरस्थकमलं यशोभिरमलं करात्तकमलं भजस्व तमलम् ॥ २० ॥**

**विहारेति** । तं कृष्णं भजस्व । कीदृशमित्याह—प्रणीतो युवतिषु प्रापितो मदनो येनं तम् । उरस्था कमला रेखारूपा लक्ष्मीर्यस्य तम् । करात्तं कमलं लीलाम्बुजं यस्य तम् । स्फुटमन्यत् ॥ जलोद्धतगतिः । 'रसैर्जसजसा जलोद्धतगतिः' इति तल्लक्षणम् ॥

**दुष्टध्वंसः कर्णिकारावतंसः खेलद्वंशीपञ्चमध्वानशंसी ।**
**गोपीचेतःकेलिभङ्गीनिकेतः पातु स्वैरी हन्त वः कंसवैरी ॥ २१ ॥**

**दुष्टेति** । कंसवैरी वः पातु । स कीदृगित्याह—दुष्टान् ध्वंसयति विनाशयतीति सः । कर्णिकारैरवतंसो यस्य सः । खेलन्तं सर्वत्र प्रसरन्तं वंशीपञ्चमध्वानं शंसत्युद्गिरतीति सः । गोपीचेतसां याः केलिभङ्ग्या(ङ्ग्य)स्तासां समाश्रयः तासां चेतांसि तन्निकेता यस्येति वा । स्वैरी स्वतन्त्रः ॥

**वृन्दाटव्यां केलिमानन्दनव्यां कुर्वन्नारीचित्तकन्दर्पधारी ।**
**नर्मोद्गारी मां दुकूलापहारी नीपारूढः पातु बर्हावचूडः ॥ २२ ॥**

**वृन्देति** । बर्हावी चूडा यस्य स मां पातु । कीदृगित्याह—वृन्दाटव्यां केलिं कुर्वन् । कीदृशीं केलिम् । आनन्देन सुखौघेन नव्यां श्लाघ्याम् । नर्मोद्गारी । तद्वचनाद्वासांसि गृहीतुं जलात्तटमागतासु पाणिभ्यां पिहितरहस्याङ्गीषु गोपकन्यासु जलदेवतावज्ञात्रीभिर्भवतीभिर्मूर्धनि योजिताञ्जलितया भास्करे नमस्कृते तदवज्ञाप्रायश्चित्तं भावीति परिहासकारीत्यर्थः । स्फुटमन्यत् ॥ शालिनी । 'मातौ गौ चेच्छालिनी वेदलोकैः' इति तल्लक्षणम् ॥

रुचिरनखे रचय सखे वलितरतिं भजनततिम् ।
त्वमविरतिस्त्वरितगतिर्नतशरणे हरिचरणे ॥ २३ ॥

**रुचिरेति** । हे सखे, हरिचरणे भजनततिं श्रवणादिकां भक्तिं रचय कुरु । कीदृशीं तत्ततिमित्याह—वलिता प्रचला रतिर्भावो यया ताम् । त्वं कीदृशः सन्नित्याह—अविरतिर्निरन्तरोद्यतः । त्वरितगतिः सत्वरश्चलन् । क्षणभङ्गदेहत्वादिति भावः । पक्षे छन्दोनामोल्लेखन्मुद्रालंकारश्च ॥

चेतसि हरिस्फूर्तिमिच्छन्नाह—

रुचिरपटः पुलिनतटः पशुपपतिर्गुणवसतिः ।
सममशुचिर्जलदरुचिर्मनसि परिस्फुरतु हरिः ॥ २४ ॥

**रुचिरेति** । स हरिर्मम मनसि परिस्फुरतु । गुणवसतिर्भक्तवात्सल्यादिगुणालयः । शुचिः स्मृतः सन् सर्वदोषहरः शृङ्गाररूपो वा । स्फुटमन्यत् ॥ त्वरितगतिः—'त्वरितगतिश्च नजनगैः' इति तल्लक्षणम् ॥

केलिविहितयमलार्जुनभञ्जन सुललितचरितनिखिलजनरञ्जन ।
लोचननर्तनजितचलखञ्जन मां परिपालय कालियगञ्जन ॥ २५ ॥

**केलीति** । हे कालियगञ्जन, त्वं मां परिपालय भक्तिरसेन पुषाण । स्पष्टमन्यत् ॥

भुवनविसृत्वरमहिमाडम्बर विरचितनिखिलखलोत्करसम्बर ।
वितर यशोदातनय वरं वरमभिलषितं मे धृतपीताम्बर ॥ २६ ॥

**भुवनेति** । भुवनेषु निखिलेषु विसृत्वरः प्रसारी महिम्नः पारमैश्वर्यस्याडम्बरस्तूर्यवद्घोषो यस्य हे तथाभूत । 'आडम्बरः समाटोपे गजगर्जिततूर्ययोः' इति विश्वः । विरचितः कृतो निखिलानां खलोत्कराणां सम्बरो विनाशो येन हे तथाभूत । हे यशोदातनय, मे मह्यमभिलषितं वाञ्छितं वरं वितर देहि । स्पष्टमन्यत् । वरं श्रेष्ठम् ॥

चिकुरकरम्बितचारुशिखण्डं भालविनिर्जितवरशशिखण्डम् ।
रदरुचिनिर्धुतमुद्रितकुन्दं कुरुत बुधा हृदि सपदि मुकुन्दम् ॥ २७ ॥

**चिकुरेति** । हे बुधाः, मुकुन्दं सपदि शीघ्रं हृदि कुरुत चित्ते धारयत यूयम् । कीदृशमित्याह—चिकुरेषु करम्बितो नियोजितश्चारुः शिखण्डो येन तम् । भालेन ललाटेन विनिर्जितः वरः शशिखण्डः शुक्लाष्टमीचन्द्रो येन तम् । रदरुचिभिर्दन्तकान्तिभिर्निर्धुतानि न्यक्कृतानि मुद्रितानि कुड्मलीभूतानि कुन्दानि येन तम् ॥

यः परिरक्षितसुरभीलक्षस्तदपि च सुरभीमर्दनदक्षः ।
मुरलीवादनखुरलीशाली स दिशतु कुशलं तव वनमाली ॥ २८ ॥

**य इति** । स वनमाली तव कुशलं दिशत्वर्पयतु । स कीदृगित्याह—परिरक्षितानि

सुरभीनां गवां लक्षाणि येन स:। सुरभियां देवत्रासानां मर्दने विनाशे दक्ष:। सुरभीति सभङ्गश्लेष:। तदपीति विरोधाभाससिद्धये तेनोभयोरङ्गाङ्गिभाव: संकर:। मुरलीवादने खुरलीमभ्यासं शलति गच्छति तच्छील:। 'अभ्यास: खुरलीयोग्या' इति त्रिकाण्डशेष:॥

रमितनिखिलडिम्भे वेणुपीतोष्ठबिम्बे
हतखलनिकुरम्बे बल्लवीदत्तचुम्बे।
भवतु महितनन्दे तत्र व: केलिकन्दे
जगदविरलतुन्दे भक्तिरुर्वी मुकुन्दे॥ २९॥

**रमितेति**। तत्र मुकुन्दे वो युष्माकं गुर्वी महती भक्तिरस्तु। तत्र कीदृशीत्याह— रमिता निखिला: सर्वे डिम्भा गोपशिशवो येन तस्मिन्। 'पोत: पाकोऽर्भको डिम्भ: पृथुक: शावक: शिशु:' इत्यमर:। वेणुना पीत ओष्ठबिम्बो यस्य तस्मिन्। वंशीविभूषितमुख इत्यर्थ:। हतं खलानां पूतनादीनां निकुरम्बं वृन्दं येन तस्मिन्। 'समवायो निकुरम्बं जालं निवहसंचयौ जातम्' इति हैम:। बल्लवीभिर्दत्तश्चुम्बो यस्मै तस्मिन्। महितोऽर्चितो नन्दो व्रजराजो येन तस्मिन्। पितृभक्ते इत्यर्थ:। केलिकन्दे विविधक्रीडाकर्तरीत्यर्थ:। जगद्भिर्ब्रह्माण्डैरविरलं गहनं तुन्दमुदरं यस्य तस्मिन्। 'पिचण्डकुक्षीजठरोदरं तुन्दम्' इत्यमर:॥

पशुपयुवतिगोष्ठीचुम्बितश्रीमदोष्ठी
स्मरतरलितदृष्टिर्निर्मितानन्दवृष्टि:।
नवजलधरधामा पातु व: कृष्णनामा
भुवनमधुरवेषा मालिनी मूर्तिरेषा॥ ३०॥

**पश्विति**। एषा कृष्णनामा मूर्ति: पातु रक्षतु। कीदृशी सेत्याह—पशुपयुवतिगोष्ठ्या चुम्बित: श्रीमानोष्ठो यस्या: सा। स्मरेण तच्चुम्बोद्दीप्तेन तरलिते चञ्चले दृष्टी नेत्रे यस्या: सा। ततो निर्मितानन्दवृष्टिस्तासु संभोगसुखवर्षा यया सा। स्फुटार्थमन्यत्॥ मालिनी। तल्लक्षणं गतं प्राक्॥ 'तस्यैव हरिधर्मस्य यदिहोक्ति: पुन: पुन:। तद्गाढरागान्नावद्यमेतत्तद्भक्तलक्षणम्॥'

इति श्रीमुकुन्दमुक्तावली व्याख्याता॥

---

प्रिययोर्द्वन्द्वं ध्यातुमिच्छंस्तदाह पद्येन—

अङ्गश्यामलिमच्छटाभिरभितो मन्दीकृतेन्दीवरं
जाड्यं जागुडरोचिषां विदधतं पट्टाम्बरस्य श्रिया।

वृन्दारण्यविलासिनं हृदि लसद्दामाभिरामोदरं
राधास्कन्धनिवेशितोज्ज्वलभुजं ध्यायेम दामोदरम् ॥ १ ॥

अङ्गेति । अङ्गानां यः श्यामलिमा तस्य च्छटाभिः परम्पराभिर्मन्दीकृतानि न्यग्भावितानीन्दीवराणि येन तम् । जागुडरोचिषां कुङ्कुमकान्तीनाम् । हृदि वक्षसि । स्फुटार्थमन्यत् । इदमत्र विमृश्यते—ननु पूर्णानन्दस्वरूपस्य श्रीकृष्णस्य बल्लवीस्पर्शरूपादिविषयभोगजन्यानन्दस्पृहात्र वर्ण्यमाना न युक्ता पूर्णानन्दविरोधात् । यत्तु तद्भोगे वर्णनं मुनिना कृतं तत्खलु जनमनोनिवेशार्थकं लोकविडम्बनं तत्र तस्य तात्पर्यमिति । मैवमेतत्—'न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः । या माभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥' 'बल्लव्यो मे मदात्मिकाः' इत्यादिभिस्तत्र तत्तात्पर्यप्रतीतेः । तत्र लोकविडम्बनादिवाक्यानि लोकानुसारिभिरपि चरितैर्लोकचरितन्यग्भावात् । 'बल्लव्यश्च ताः परावताराः' इति तत्स्पर्शादिभोगान्नात्मारामतातिक्रमः । मालिन्यशङ्का तु सुदूरोत्सारितेति कामाधिकरणभाष्यादधिगन्तव्यम् । यत्तु कश्चित् तादृशस्य हरेस्ताभिः सह शृङ्गारलीला तत्पतिभावेनास्तु न तूपपतिभावेन । तेन तस्मिंस्तासु च सौशील्यप्रतीपस्य कौशील्यस्य प्रसङ्गादित्याह—धर्मशास्त्राभ्यासघासग्रासपुष्टस्तदसत् सर्वेशस्यात्मारामस्य हरेः शृङ्गारोत्कर्षरसिकस्य सत्यसंकल्पस्यानादितत्संकल्पादनादितस्तथाविर्भूताभिस्तदात्मभूताभिस्तदन्यास्पृष्टाभिः स्वकान्तिसमाभिः सह लीलायां स्वात्वारामत्वानपायात् । यच्चातिप्रवणो भगवान् बादरायणिरवर्णयत्पारीक्षितमाक्षेपं तिरस्कुर्वन्, यच्च कृताञ्जलिर्नृपेन्द्रः प(पा)रीक्षिदशृणोत् 'लोकेऽपि परमोदाराणां गुणगम्भीराणां विशुद्धमनसामतितेजसा भ्राजमानानां राजकुमारीणां राजकुमाराणां च मिथः प्रसक्तमनसां मिथोऽनुरञ्जनं प्रेम सौशील्यमेव' इति नोक्तदोषगन्धः । मिथो हितेच्छत्वादेव विषयासक्तिदोषः परास्तः । जनमनोनिवेशस्त्वनुषङ्गसिद्ध इति न कश्चिदाक्षेपलेशः ॥

---

आनन्दचन्द्रिकाख्यं राधादशनामस्तोत्रम् ।

श्रीराधायै नमः ।

'आनन्दमूर्तिरपि नन्दसुतो निविन्दत्यासाद्य यां सुखततिं परमां परेशः । तां चित्तसद्मनि निधाय गुणैरगाधां राधां तदीयनुतिषु प्रतनोमि टीकाम् ॥' एवमेकादशभिः स्तोत्रैः सर्वेश्वरः श्रीकृष्णोऽभिष्टुतः । अथ गोकुलाख्ये माथुरमण्डले वृन्दावनमध्ये सहस्रदलपद्ममध्ये कल्पतरोर्मूलेऽष्टदलकेसरे गोविन्दोऽपि श्यामः पीताम्बरो द्विभुजो मयूरपिच्छशिरो वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः सचेष्टो विराजते द्वे पार्श्वे चन्द्रावली राधिका चेति यस्या अंशे 'लक्ष्मीदुर्गादिका शक्तिः' इत्युक्त्वा 'तस्याद्या प्रकृती राधिका नित्यनिर्गुणा सर्वालंकारशोभिता' इत्याद्यथर्वश्रुत्या । 'सत्यं तत्वं परत्वं च तत्वत्रयमहं किल । त्रितत्वरूपिणी सापि राधिका मम वल्लभा ॥ प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी । देवी कृष्णमयी प्रोक्ता राधिका परदेवता ॥ सर्वलक्ष्मीमयी सर्वकान्तिः संमो-

हिनी परा ॥' इति गौतमीयोक्त्या च महालक्ष्मीतया कृष्णात्मकतया च तेन कृष्णचैतन्येनोपदिष्टा सर्वेश्वरी श्रीराधिकाभिष्टूयते । तत्र तावद्दशनामस्तोत्रमाह—

राधा दामोदरप्रेष्ठा राधिका वार्षभानवी ।
समस्तबल्लवीवृन्दधम्मिल्लोत्तंसमल्लिका ॥ १ ॥

**राधेति** । राध्नोति संसाधयति प्रेष्ठस्य श्रीकृष्णस्य वाञ्छितानीति राधा । दामोदरस्य यशोदासुतस्य हरेः प्रेष्ठातिप्रीतिकर्त्री । राधयति समर्चयति निजेशभावेन कृष्णमिति राधिका । वृषभानो राज्ञः पुत्रीति वार्षभानवी । समस्तानां बल्लवीवृन्दानां धम्मिल्लोत्तंसमल्लिका । केशजूटभूषणस्रगित्यर्थः । राजपुत्रीत्वेन सौहार्दादिगुणवत्तया सर्वेश्वरीत्वेन च तासां सर्वासां वन्दनीयेति यावत् ॥

कृष्णप्रियावलीमुख्या गान्धर्वा ललितासखी ।
विशाखासख्यसुखिनी हरिहृद्भृङ्गमञ्जरी ॥ २ ॥

**कृष्णेति** । उक्तश्रुत्यादिभ्यः कृष्णप्रियावलीमुख्या । गानादिविद्यातिप्रावीण्याद्गान्धर्वा । ललितया सह सख्याल्ललिता सखी । विशाखायाश्छायावदनुवर्तिन्याः सख्येन सौख्यवत्त्वाद्विशाखासख्यसुखिनी । कुसुमितवल्लरीवत्कृष्णमनोमधुपानन्दविधायित्वाद्धरिहृद्भृङ्गमञ्जरी ॥

स्तोत्राख्यां तत्पाठफलं चाह—**इमामिति** द्वाभ्याम्—

इमां वृन्दावनेश्वर्या दशनाममनोरमाम् ।
आनन्दचन्द्रिकां नाम यो रहस्यां स्तुतिं पठेत् ॥ ३ ॥
स क्लेशरहितो भूत्वा भूरिसौभाग्यभूषितः ।
त्वरितं करुणापात्रं राधामाधवयोर्भवेत् ॥ ४ ॥

**स इति** । क्लेशरहितो विनष्टाविद्यः सन् ॥

इत्यानन्दचन्द्रिकाख्यं श्रीराधादशनामस्तोत्रं व्याख्यातम् ॥

---

श्रीप्रेमसुधासत्राख्यं श्रीवृन्दावनेश्वरीनामाष्टोत्तरशतनामस्तोत्रम् ।

नमो वृन्दावनेश्वर्यै ।

अथाष्टोत्तरशतनामभिः श्रीराधां स्तौति । तत्रादौ स्तोत्रजन्मकथामाह **मानसमिति** चतुर्भिः—

मानसं मानसंत्यागादुत्कण्ठार्तं निरुन्धतीम् ।
राधां संविद्य विद्याढ्या तुङ्गविद्येदमब्रवीत् ॥ १ ॥

मानिनी राधा समागत्यानुनयन्तं कृष्णं रूक्षा सती निरास्थत् । नैरास्येन कृष्णे निर्गते तद्गुणवृन्दाक्रान्तचित्ता सानुतापमविदत् । तदा मानस्य संत्यागात्परिक्षयाद्धेतोरुत्कण्ठार्तं

मनो मानसं निरुन्धन्तीं सद्गुणसारोऽसौ कृष्णो रूक्षवचोभिर्मया निराकृतः कथं मदन्तिकमागच्छेदिति विचारेणातितृष्णमपि मनस्ततो निवर्तयन्तीं राधां संविद्य ज्ञात्वा तुङ्गविद्या सरस्वती सखीदमब्रवीत् ॥

किमब्रवीत्तदाह—

विमुञ्च बन्धुरे मानं निर्बन्धं शृणु मद्वचः ।
पुरा कन्दर्पसुन्दर्यै यान्युत्कण्ठितचेतसे ॥ २ ॥

**विमुञ्चेति** । हे बन्धुरे मनोज्ञे राधे, बन्धुरे कृष्णे मानं विमुञ्च । निर्बन्धं सनियमं मद्वचः शृणु । मया निरस्तोऽसौ मां नागमिष्यतीति निरस्तचित्ता मा भूत् । स त्वदनुमतिमाघ्रायैवायास्यतीति भावेनाह—**पुरेति** सार्धाभ्याम् ॥

भगवत्योपदिष्टानि तव सख्योपलब्धये ।
इङ्गिताभिज्ञया तानि सिन्दूरेणाद्य वृन्दया ॥ ३ ॥
विलिख्य सखि दत्तानि स जीवितसुहृत्तमः ।
विरहार्तस्तवेमानि जपन्नामानि शाम्यति ॥ ४ ॥

**भगवत्येति** । तव सख्योपलब्धये उत्कण्ठितचेतसे कन्दर्पसुन्दरीनाम्न्यै गोपसुभ्रुवे यानि भगवत्या पूर्णमास्योपदिष्टानि पुराभूवन् तानि तवेमानि नामानि स जीवितसुहृत्तमस्त्वत्प्राणबन्धुः कृष्णस्त्वद्विरहार्तो जपन् शाम्यति । त्वद्विरहतापोपशान्तिं भजतीत्यर्थः । ननु कृष्णेन तानि कुतो लब्धानि तत्राह—पौर्णमासीङ्गिताभिज्ञया वनदेव्या वृन्दया सिन्दूरेण विलिख्य कृष्णायाद्य दत्तानीति । सिन्दूरेण तल्लिपिराकर्षणायेति मान्त्रिकाः । तथा च त्वदभिषङ्गाय त्वन्नामानि जपतो हरेस्त्वदनुमतिरेव तत्प्राप्तिरिति भावः ॥

तानि नामान्याह—

राधा कृष्णवनाधीशा मुकुन्दमधुमाधवी ।
गोविन्दप्रेयसीवृन्दमुख्या वृन्दावनेश्वरी ॥ ५ ॥

**राधेति** । राधेति प्राग्वत् । कृष्णवनं वृन्दारण्यं तस्याधीशा । तत्पट्टमहिषीत्वात्तत्स्वामिनीत्यर्थः । मुकुन्द एव मधुर्वसन्तस्तस्य माधवी वासन्तीति तद्गुणव्यापिका । तदेकोल्लास्या चेत्यर्थः । गोविन्देति । कृष्णप्रियावलीमुख्येयम् । वृन्दावनेश्वरीत्यर्थपुनरुक्तिर्न दोषाय सर्वेषां नाम्नां जप्यराधिकैकविषयत्वात् ॥

ब्रह्माण्डमण्डलोत्तंसकीर्तिः कार्तिकदेवता ।
दामोदरप्रियसखी राधिका वार्षभानवी ॥ ६ ॥

**ब्रह्माण्डेति** । ब्रह्माण्डेति । सर्वव्यापियशा इत्यर्थः । कार्तिकमासाधिष्ठातृदेवतात्वात्का-

र्तिकदेवता । दामोदरस्य सख्यभाववती प्रियेति दामोदरप्रियसखी । अतः कार्तिके द्वयोः सहैवाभ्यर्चनम् । राधिकेति द्वयं प्राग्वत् ॥

भानुभक्तिभराभिज्ञा वृषभानुकुमारिका ।
मुखराप्राणदौहित्री कीर्तिदाकीर्तिदायिनी ॥ ७ ॥

**भानुभक्तीति** । अविभूतिविभूतस्य भानोर्भक्तिभरेऽभिज्ञा निपुणा । वृषेति स्फुटम् । मुखरा स्वमातामही तस्याः प्राणभूता दौहित्री नप्त्री । कीर्तिदायै वृषभानुपत्न्यै स्वमात्रे कीर्तिं ददातीति तथा ॥

कृष्णप्रेमाब्धिमकरी वत्सलाच्युतमातृका ।
सखीमण्डलजीवातुर्ललिताजीविताधिका ॥ ८ ॥

**कृष्णेति** । कृष्णविषयिकप्रेमाब्धौ मकरी । तद्वत्तत्र निमज्जन्तीत्यर्थः । वत्सला वात्सल्यवती अच्युतमाता श्रीयशोदा यस्यां सा । सखीमण्डलस्य जीवातुः । यामाश्रित्य तन्मण्डलो जीवतीत्यर्थः । ललिताया जीवितादप्यधिका ॥

विशाखाप्राणसर्वस्वं कारुण्यामृतमेदुरा ।
पौर्णमासीपृथुप्रेमपात्री सुबलनन्दिता ॥ ९ ॥

**विशाखेति** । यत्पार्थक्ये सति विशाखायाः प्राणा विह्वलीभवन्त्यतो विशाखाप्राणसर्वस्वम् । कारुण्यामृतेन मेदुरा । सर्वव्रजविषयकेन कृपापीयूषेण स्निग्धेत्यर्थः । पौर्णमासी सांदीपनेर्जननी तस्या यः पृथुः पुञ्जीभूतः प्रेमा तस्य पात्री घटी । सुबलेन कृष्णसंदेशादिदात्रा नन्दिता सहर्षा ॥

कुञ्जाधिराजमहिषी वृन्दारण्यविहारिणी ।
विशाखासख्यविख्याता ललिताप्रेमलालिता ॥ १० ॥

**कुञ्जेति** । कुञ्जाधिराजस्य वृन्दाटवीनिकुञ्जस्वामिनो हरेर्महिषी कृताभिषेका राज्ञी । वृन्दारण्येति प्रस्फुटम् । विशाखायाः सख्येन विख्याता । तां विना राधा लवमपि न तिष्ठेदिति प्रसिद्धिमतीत्यर्थः । ललितया प्रेम्णा लालिता । लब्धपोषेत्यर्थः ॥

सदाकिशोरिका गोष्ठयुवराजविलासिनी ।
गोविन्दप्रेमशिक्षार्थनटीकृतनिजांशका ॥ ११ ॥

**सदेति** । सदा नित्यं किशोरिका । कैशोरे वयसि स्थिरेत्यर्थः । गोष्ठेति स्फुटार्थम् । गोविन्दस्य स्वनाथस्य प्रेमशिक्षार्थं नटीकृतो नटीत्वं प्रापितो निजांशो यया सा । गोविन्देन परेशेन स्वभक्तिमार्गप्रचारो यथा महत्तमजीवमंशमाविश्य क्रियते तथा गोविन्दचरितगीतनृत्यादिना तत्प्रेमा प्रादुर्भवेदिति तत्प्रेममार्गोपदेशाय परेशया यया महत्तमो जीवोंऽशः कश्चित्स्वावेशेन नटीत्वं नीत इत्यर्थः ॥

एतदेवाह—

प्रबोधनीनिशानृत्यमाहात्म्यभरदर्शिनी ।
चन्द्रकान्तिचरी सर्वगन्धर्वकुलपावनी ॥ १२ ॥

**प्रबोधनीति** । प्रबोधन्यामेकादश्यां निशि यज्जागरणं हरेः पुरतो यन्नृत्यं च तस्य यन्माहात्म्यं तत्पार्षदभावलाभलक्षणं तद्दर्शिनी । तन्निरूपिकेत्यर्थः । तस्य निजांशस्य जीवस्य ससारूप्यलाभात्पूर्वं तेनांशेन चन्द्रकान्तिरभूदिति चन्द्रकान्तिचरी । भूतपूर्वे चरट् । गन्धर्वलोकेऽपि तेनांशेन भगवन्नृत्यगीतादिप्रादुरकार्षीदिति सर्वगन्धर्वकुलपावनी । इत्थं च स्कान्दकार्तिकमाहात्म्यं भविष्योत्तरीयतुलसीत्रिरात्रं च व्याख्यातम्, तन्मुख्यार्थग्राही तु न केनापि तत्त्वज्ञेनानुगृहीतो बोध्यः पूर्वोक्तश्रुतिस्मृतिभ्य एव । न च श्रुतचरदासीपुत्रभावान्नारदान्नित्यपार्षदो नारदोऽन्यो नास्तीति वदन् प्रामवान् प्रेक्षावताम् ॥

स्वजन्मभूषितोत्तुङ्गवृषभानुकुलस्थितिः ।
लास्यविद्याव्रतस्नाता रासक्रीडादिकारणम् ॥ १३ ॥

**स्वजन्मेति** । स्वजन्मना भूषितालंकृता सूर्यवंशप्रभवत्वेनोत्तुङ्गापि वृषभानोर्गोपराजस्य पितुः कुलस्थितिर्यया सा । महालक्ष्म्याः प्रादुर्भावात्कुलस्यातिशोभेत्यर्थः । निखिलां नृत्यविद्यामधीत्य विधिना तद्व्रतमुत्सृष्टवती पठितसपरिकरनृत्यविद्येत्यर्थः । अतः—रासेति । यां विना हरे रासक्रीडा न सिद्ध्येदिति भावः ॥

रासोत्सवपुरोगण्या कृष्णनीतरहस्थला ।
गोविन्दबद्धकबरी कृष्णोत्तंसितकुन्तला ॥ १४ ॥

**रासेति** । अतो रासोत्सवेषु पुरोगण्या श्रेष्ठा । एतदेवाह—कृष्णेत्यादिभिश्चतुर्भिः । तदेकानुरक्तेन कृष्णेनान्याः प्रेयसीर्विहाय रहस्थलं विजनं प्रापितेत्यर्थः । कृष्णेन नीतं रहस्थलं यामिति विग्रहः । गोविन्देत्यर्धकं स्फुटार्थम् ॥

व्यक्तगोष्ठारविन्दाक्षीवृन्दोत्कर्षातिहर्षिणी ।
अन्नतर्पितदुर्वासा गान्धर्वा श्रुतिविश्रुता ॥ १५ ॥

**व्यक्तेति** । व्यक्तोऽतिख्यातो यो गोष्ठारविन्दाक्षीवृन्दात्स्वस्योत्कर्षः कृष्णकर्तृकोऽतिसत्कारस्तेनातिहर्षिणी प्रहृष्टा । अन्नेन पायसादिना तर्पितो दुर्वासा यया सा । अतितृप्तोऽपि दुर्वासाः । राधया दत्तमन्नं तु तूष्णीं बुभुजे कृष्णतत्त्वं च तया पृष्टोऽतिप्रीत्या प्रोवाचेति गोपालोत्तरतापिन्यां कथास्ति । गान्धर्वविद्यायोगाद्गान्धर्वा । श्रुतौ महालक्ष्मीत्वेन विश्रुता ख्याता ॥

गान्धर्विका स्वगान्धर्वविस्मापितबलाच्युता ।
शङ्खचूडारिदयिता गोपीचूडाग्रमालिका ॥ १६ ॥

**गान्धर्विकेति** । गान्धर्वं कायत्युच्चारयतीति गान्धर्विका । एतदेवाह—स्वेति । स्वगान्धर्वेण होरिकोत्सववृत्तेन विस्मापितौ बलाच्युतौ यया सा । येनातिप्रीयमाणो बलस्तस्यै स्यमन्तकं पारितोषिकं ददाविति प्रसिद्धम् । शङ्क्वेत्यर्धकं प्रकटार्थम् ॥

चारुगोरोचनागौरी गारुत्मतनिभाम्बरा ।
विचित्रपट्टचमरीचारुवेणीशिखारुचिः ॥ १७ ॥

**चार्विति** । गारुत्मतं मरकतमणिस्तन्निभं तद्वच्छ्यामम्बरं शाटी यस्याः सा । मौक्तिकादिरत्नगुच्छशालित्वेन विचित्रया पट्टचमर्या चारुर्मनोज्ञा या वेणीशिखा तया रुचिः कान्तिर्यस्याः सा । वेणीशिखा कबराग्रभागः । 'शिखा शिफायां चूडायां ज्वालायामग्रमात्रके' इति विश्वः ॥

पद्मेन्दुजैत्रवक्त्रश्रीनिरुद्धमुरमर्दना ।
चकोरिकाचमत्कारिहरिहारिविलोचना ॥ १८ ॥

**पद्मेति** । पद्ममिन्दुं च जयति तच्छीलं यद्वक्त्रं तस्य श्रिया कान्त्या निरुद्धो मुरमर्दनो यया सा । चकोरिकां चलचञ्चुं चमत्कुरुत आसक्तिभरेण विस्मापयत इति चकोरिकाचमत्कारिणी । हरिं हरतो विमोहयत इति हरिहारिणी । ततः कर्मधारयः । तथाभूते विलोचने नेत्रे यस्याः सा । 'ज्योत्स्नाप्रिये चलच्चञ्चुचकोरविषसूचकाः' इति हैमः ॥

कालीयदमनोत्कम्पिभङ्गुरभ्रूभुजङ्गमा ।
नासिकाशिखरालम्बिलवलीस्थूलमौक्तिका ॥ १९ ॥

**कालीयेति** । कालीयदमनमपि कृष्णमुत्कम्पयतस्तादृशौ भङ्गुरौ वक्रौ भ्रूभुजङ्गमौ यस्याः सा । नासिकायाः शिखरमग्रमालम्बेते लवलीस्थूले च मौक्तिके यस्याः सा । 'सुगन्धमूला लवली पाण्डुः कोमलवल्कला' इति हरीतक्यादिनिघण्टोः ॥

बन्धुराधरबन्धूकविकृष्टमधुसूदना ।
दन्तनिर्धूतशिखरा शिखरीन्द्रधरप्रिया ॥ २० ॥

**बन्धुरेति** । बन्धुरेण मनोज्ञेनाधरबन्धूकेन विकृष्टो मधुसूदनः कृष्ण एव मधुसूदनो भ्रमरो यया सा । परम्परितं रूपकम् । दन्तैर्निर्धूतानि शिखराणि यया सा । 'शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः । पक्वदाडिमबीजाभमाणिक्यशकलाग्रयोः ॥' इति मेदिनीकारः ॥

कपोलमण्डलान्दोलिमणिकुण्डलमण्डिता ।
पीतांशुकशुकाकर्षिनिस्तलस्तनदाडिमा ॥ २१ ॥

**कपोलेति** । कपोलमण्डले आन्दोलिनी चपले ये मणिकुण्डले ताभ्यां मण्डिता । पीतांशुकः कृष्णः स एव शुकस्तमाकर्षतोऽनुरञ्जयतस्तथाभूतौ निस्तलौ वर्तुलौ स्तनदाडिमौ यस्याः सा । 'निस्तलं वर्तुलं वृत्तम्' इति हलायुधः ॥

मणिकिङ्किण्यलंकारझङ्कारिश्रोणिमण्डला ।
स्थलारविन्दविच्छोलीनिर्मिञ्छि(र्मन्थि)तपदद्युतिः ॥ २२ ॥

**मणीति** । मणिकिङ्किणीति स्फुटार्थम् । स्थलारविन्दानां स्थलपङ्कजानां विच्छोल्या श्रेण्या निर्मिञ्छि(र्मन्थि)ता पदद्युतिर्यस्याः सा ॥

अरिष्टवधनर्मार्थनिर्मापितसरोवरा ।
गन्धोन्मादितगोविन्दा माधवद्वन्द्वताङ्किता ॥ २३ ॥

**अरिष्टेति** । अरिष्टवधेन यन्नर्मकृतगोवधो भवान् कथमस्मान् संस्पृशेदिति परिहासस्तदर्थं तत्सिद्धये निर्मापितं सरोवरं श्यामकुण्डं यया सा । उदीरितगोवधदोषेण कृष्णेन सरसि निर्मिते स्वस्वनामोच्चारणपूर्वकं गङ्गादिष्वाविर्भूतेषु कृष्णः स्नात्वा विशुद्धो राधां पस्पर्शेति पुराणे प्रसिद्धम् । गन्धेनाङ्गसौरभ्येणोन्मादितो गोविन्दो यया सा । माधवेन सह या द्वन्द्वता युगलीभावस्तेनाङ्किता । 'राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेषु' इति ऋक्परिशिष्टवचनात् ॥

कालिन्दीकूलकुञ्जश्रीर्भाण्डीरतटमण्डना ।
धृतनन्दीश्वरस्थेमा गोवर्धनदरीप्रिया ॥ २४ ॥

**कालिन्दीति** । कालिन्दीकूलकुञ्जानां श्रीर्लक्ष्मीर्भूषा वा । भाण्डीरतटं मण्डयति विहारैरिति तथा । धृतो नन्दीश्वरे स्थेमा स्थैर्यं यया सा । गोवर्धनदरीः प्रीणाति पादसंचारेण सुखयति तथा ताः प्रिया यस्याः सेति वा ॥

वंशीबडिशिकाविद्धरसोत्तर्षमनोझषा ।
वंशिकाध्वनिविश्रंसिनीवीबन्धग्रहातुरा ॥ २५ ॥

**वंशीति** । वंशीबडिशिकया विद्धो रसोत्तर्षो मनोझषो यस्याः सा । आमिषलुब्धो मत्स्यो यथा बडिशेन विध्यते तथा कृष्णाङ्गसङ्गरससतृष्णा राधा वंश्या विद्धान्तरा भवतीत्यर्थः । वंशिकाध्वनिना विश्रंसिनी शिथिलग्रन्थिर्या नीवी तद्बन्धग्रहे आतुरा । आर्तेत्यर्थः ॥

मुकुन्दनेत्रशफरीविहारामृतदीर्घिका ।
निजकुण्डकुडुङ्गान्तस्तुङ्गानङ्गरसोन्मदा ॥ २६ ॥

**मुकुन्देति** । मुकुन्दस्य नेत्र एव शफर्यौ प्रोष्ठ्यौ तयोर्विहारायामृतदीर्घिका सुधावापी । 'प्रोष्ठी तु शफरी द्वयोः', 'वापी तु दीर्घिका' इत्यमरः । तयोरतिसुखदेत्यर्थः । निजकुण्डकुडुङ्गानां स्वसरस्तटकुञ्जानामन्तर्मध्ये ये तुङ्गानङ्गरसास्तैरुन्मदा प्रमत्ता ॥

कृष्णभ्रूचण्डकोदण्डोड्डीनधैर्यविहङ्गमा ।
अनुरागसुधासिन्धुहिन्दोलान्दोलिताच्युता ॥ २७ ॥

**कृष्णेति**। कृष्णस्य भ्रुवावेवोच्चण्डकोदण्डे तीव्रधनुषी ताभ्यामुड्डीनो पलाय्य गतो धैर्यविहङ्गमो यस्याः सा। 'कोदण्डं धन्व कार्मुकम्' इति हैमः। अनुरागसुधासिन्धुरेव हिन्दोला प्रेङ्खोला तयान्दोलितोऽच्युतो यया सा॥

व्रजेन्द्रनन्दनास्येन्दुतुङ्गितानङ्गसागरा।
अनङ्गसंगरोत्तृष्णकृष्णलुञ्चितकञ्चुका॥ २८॥

**व्रजेन्द्रेति**। व्रजेन्द्रनन्दनस्यास्यमेवेन्दुस्तेन तुङ्गितः समुच्छलितोऽनङ्गसागरो यस्याः सा। अनङ्गसंगरे उत्तृष्णेन कृष्णेन लुञ्चितमपनीतं कञ्चुकं चोलिका यस्याः सा॥

लीलापद्मह‍तोद्दामनर्मलम्पटकेशवा।
हरिवक्षोहरिग्रावहरितालीयरेखिका॥ २९॥

**लीलेति**। तदा लीलापद्मेन हतस्ताडित उद्दामे नर्मणि लम्पटः केशवो यया सा। हरेर्वक्ष एव हरिग्रावा इन्द्रनीलपट्टिका तत्र हरितालीयरेखिका तद्वत्तत्र लग्ना शोभिता चेत्यर्थः॥

माधवोत्सङ्गपर्यङ्का कृष्णबाहूपधानिका।
रतिकेलिविशेषोहसखीस्मितविलज्जिता॥ ३०॥

**माधवेति**। माधवस्योत्सङ्गः क्रोड एव पर्यङ्कः शय्या यस्याः सा। 'क्रोडमङ्कस्तथोत्सङ्गः' इति, 'पर्यङ्कः शय्या' इति च हलायुधः। कृष्णस्य बाहुर्भुज एवोपधानमुच्छीर्षकं यस्याः सा। 'उच्छीर्षकमुपधानं धीरैरुपबर्हमाख्यातम्' इति हलायुधः। कृष्णभुजमुपधाय तदङ्कपर्यङ्के शयितेत्यर्थः। रतिकेलिविशेषं पुरुषायितमूहन्ते वितर्कयन्तीति तथाभूतानां सखीनां स्मितेन लज्जिता॥

आलीपुरोरहःकेलिजल्पोत्कहरिवन्दिनी।
वैजयन्तीकलाभिज्ञा वनस्रक्शिल्पकल्पिनी॥ ३१॥

**आलीति**। आलीनां पुरोऽग्रे रहःकेलिजल्पे उत्कं हरिं वन्दत इति तथा। मन्मूर्ध्नः शपथस्ते, मैवं वादीः, वदेश्चेन्न कदाचिदपि त्वदभ्यर्थितं साधयामीति वन्दनस्य भावः। वैजयन्तीति विस्फुटम्॥

धातुचित्रातिवैचित्रीविसृष्टिपरमेष्ठिनी।
वैदग्धीप्रथमाचार्या चारुचातुर्यचित्रिता॥ ३२॥

**धात्वित्यादि**। गैरिकादिधातुचित्राणां यातिवैचित्री तस्या विसृष्टौ निर्मिता परमेष्ठिनी विरिञ्चिरूपा। वैदग्धीनां नृत्यादिकलानां प्रथमाचार्या। तास्तत एवादौ प्रकटा इत्यर्थः। चारुणा मनोज्ञेन पाकक्रियागन्धयोजनादिगतेन चातुर्येण प्रावीण्येन चित्रिता॥

असाधारणसौभाग्यभाग्यामृततरङ्गिणी ।
मौग्ध्यप्रगल्भतारम्या धीराधीराङ्कभूषिता ॥ ३३ ॥

**असाधारणेति** । असाधारणं तन्मात्रवर्ति यत्सौभाग्यं कृष्णकर्तृकः सत्कारस्तदेव भाग्यं भजनीयममृतं पीयूषं तस्य तरङ्गिणी । तदाधारभूतेत्यर्थः । मौग्ध्येन प्रगल्भतया च रम्या । मध्येत्यर्थः । धीरायाश्चाधीरायाश्चाङ्केन लक्षणेन भूषिता । धीराधीरेत्यर्थः । तथा च नामभ्यां धीराधीरमध्येत्युक्तम् ॥

अथाभिसारिकात्वाद्यवस्थाभिर्नामान्याह—

श्यामलप्रच्छदपटी मूकनूपुरधारिणी ।
निकुञ्जधामसंस्कारमाधवाध्वेक्षणक्रिया ॥ ३४ ॥

**श्यामलेति** । श्यामला प्रच्छदपटी यस्यास्तमिस्रायामभिसरन्त्याः सा । 'प्रच्छदश्चोत्तरच्छदः' इति हलायुधः । मूके नुपूरे धारयतीति तथा । निकुञ्जधाम्नो यः संस्कारस्तत्र चन्द्रातपादिरचनात्मकः । यच्च कुञ्जान्निर्गत्य माधवस्याध्वेक्षणं सा च क्रिया यस्याः सेति । वासकसज्जेत्यर्थः ॥

प्रादुर्भूतघनोत्कण्ठा विप्रलम्भविषण्णधीः ।
प्रातरुत्प्रासितोपेन्द्रा चन्द्रावलिकटाक्षिणी ॥ ३५ ॥

**प्रादुर्भूतेति** । कृष्णे सविलम्बे सति प्रादुर्भूतेति । उत्कण्ठितेत्यर्थः । कृतसंकेते कृष्णे दैवादप्राप्ते विप्रलम्भेति । विप्रलब्धेत्यर्थः । प्रातरागत उत्प्रासितः सहासं निर्भर्त्सित उपेन्द्रः कृष्णो यया सा । खण्डितेत्यर्थः । चन्द्रावल्यामवज्ञालक्षणः कटाक्षो यस्या अस्ति सा तथा । यत्र त्वं निखातमनाः सा कामिनी किं त्वत्सौख्यं वेत्तीति त्वमपीदृगेवेति कटाक्षस्वरूपम् ॥

अनाकर्णितकंसारिकाकुवादा मनस्विनी ।
चाटुकारहरित्यागजातानुशयकातरा ॥ ३६ ॥

**अनाकर्णितेति** । अनाकर्णितः कर्णपथमपि न नीतः कंसारेः काकुवादो यया सा । त्वदेकतानमनाः केनचित्प्रत्यूहेनाभिभूतस्त्वां नागमम्, त्वं चेन्मां त्यजेस्तदाहं न भवेयमिति काकुवादस्वरूपम् । यतो मनस्विनी प्रेमगर्वादुच्चमनाः । एवं कृते कुटिलोऽनृजुः स्यात् । सुखनिर्भरमाप्नुयादिति भावः । चाटुकारस्य सप्रणामानि प्रियवचनानि रचयतोऽपि हरेस्त्यागेन जातो योऽनुशयः पश्चात्तापस्तेन कातरेति । कलहान्तरितेत्यर्थः । 'विप्रतिसारोऽनुशयः पश्चात्तापोऽनुतापः स्यात्' इति हलायुधः ॥

धृतकृष्णेक्षणौत्सुक्या ललिताभीतिमानिनी ।
विप्रयोगव्यथाहारिहरिसंदेशनन्दिता ॥ ३७ ॥

**धृतेति** । धृतं कृष्णेक्षणे औत्सुक्यं यया सा । विनष्टमानापि ललिताभीत्या मानिनी । विप्रयोगव्यथां विरहवेदनां हरति यो हरिसंदेशस्तेन नन्दिता । ततो हरिणा संयुक्तेत्यर्थः ॥

मदाल्पजल्पिताधीनपुण्डरीकाक्षमण्डिता ।
भ्रूलीलामोहितोपेन्द्रहस्ताग्रहृतवंशिका ॥ ३८ ॥

**मदेति** । मदेन तारुण्यमत्तयाल्पमर्धनिर्गतं यज्जल्पितं तदधीनेन तच्छ्रवणवशचित्तेन पुण्डरीकाक्षेण मण्डितेति । स्वाधीनभर्तृकेत्यर्थः । भ्रूलीलया मोहितस्योपेन्द्रस्य हरेर्हस्ताग्रतो हृता वंशी यया सा ॥

अतुलाच्युतमाधुर्यस्वादनाद्वैतभाग्यभूः ।
नियुद्धश्रान्तिनिद्राणहरिहारापहारिणी ॥ ३९ ॥

**अतुलेति** । अतुलस्याच्युतमाधुर्यस्य स्वादनं सम्यगनुभवनं तद्रूपं यदद्वैतं निरुपमं भाग्यं भजनीयं वस्तु तस्य भूराश्रयः । नियुद्धश्रान्त्या बाहुयुद्धश्रमेण निद्राणस्य हरेर्हारमपहरतीति तथा ॥

द्यूतनिर्जितवंशार्थिकंसारिपरिहासिनी ।
निजप्राणार्बुदप्रेष्ठकृष्णपादनखाञ्चला ॥ ४० ॥

**द्यूतेति** । द्यूतेन निर्जितं वंशमर्थयते याचयते यः कंसारिस्तस्य परिहासिनी । कुत्राद्य तव वंशी दुःखदासौ चूर्णयित्वा कालिन्दीपूरेण सिन्धुं लम्भितेति कृष्णं प्रति कृतपरिहास्येत्यर्थः । निजप्राणार्बुदादपि प्रेष्ठः कृष्णपादनखस्याञ्चलो यस्याः सेति राधायाः कृष्णभक्तवर्यत्वं दर्शितम् । तेन कृष्णेन राधिकानामजपादिकं लीलारूपमित्युक्तम् ॥

कृष्णकर्तृकस्य नामजपस्य फलमाह—

इति राधा सखीवाचमाचम्य पुलकाञ्चिता ।
छद्मना पद्मनाभस्य लतासद्मान्तिकं गता ॥ ४१ ॥

**इतीति** । इतीति पूर्वोक्तनामगणग्रथितां सखीवाचमाचम्य सादरं श्रुत्वा राधा तानि नामानि जपतः पद्मनाभस्य लतासद्मान्तिकं छद्मना पुष्पावचयमिषेण गता । तस्य वाञ्छितं पूरयामासेत्यर्थः ॥

स्तोत्रपाठफलमाह—

यः सेवते जनो राधानाम्नामष्टोत्तरं शतम् ।
नाम्ना प्रेमसुधासत्रं लिह्यात्प्रेमसुधामसौ ॥ ४२ ॥

**य इति** । यो जनः सेवतेऽतिप्रीत्या पठति, असौ प्रेमसुधां लिह्यादनुभवरसनया स्वादयेत् ॥

इति श्रीप्रेमसुधासत्राख्यं श्रीवृन्दावनेश्वरीनामाष्टोत्तरशतं व्याख्यातम् ॥

---

## श्रीराधाष्टकम् ।

नमः श्रीवृन्दावनेश्वर्यै ।

अथाष्टकेन श्रीराधां स्तवीति—

दिशि दिशि रचयन्तीं संचरन्नेत्रलक्ष्मी-
विलसितखुरलीभिः खञ्जरीटस्य खेलाम् ।
हृदयमधुपमल्लीं बल्लवाधीशसूनो-
रखिलगुणगभीरां राधिकामर्चयामि ॥ १ ॥

**दिशीत्यादि** । राधिकामहमर्चयामीत्यन्वयः । कीदृशीमित्याह—संचरन्ती या नेत्रयोर्लक्ष्मीः शोभासंपत्तस्यां विलसिता याः खुरल्यो विलोकनपटुतालक्षणा अभ्यासास्ताभिः खञ्जरीटस्य खञ्जनस्य खेलां दिशि दिशि रचयन्तीम् । 'खञ्जरीटस्तु खञ्जनः' इत्यमरः । यस्यां दिशि नेत्रे निक्षिपति सा दिक् खञ्जनमालयेव निचिता भवतीत्यर्थः । हृदयेति । मधुपस्य मल्लीमिव हरिहृदयस्यानन्दिनीमित्यर्थः । ननु कृष्णयुवत्याः श्रीराधायाः पूजा कथं पुंसा संपाद्येति चेत् स्त्रीरूपेणेति गृहाण । ननु पुंसः स्त्रीरूपं कथमिति चेत् भावनयेति प्रतीहि । न हि विरुद्धमिदं भावनम् । अणु चैतन्यं खलु जीवात्मनः स्वरूपम्, न तस्य पुरुषाद्याकारकत्वम्, किं तु तद्देहस्यैव प्राकृतस्य । 'नैव स्त्री न पुमानेष न चैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥' इति श्वेताश्वतरश्रुतेः । देहविगमे तु भावनानुसारिणा हरिसंकल्पेन विज्ञानानन्दात्मकस्त्रीविग्रहलाभेन किंचिदनुपपन्नम् । 'यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति छान्दोग्यवाक्यात्, 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी' इति स्मृतेश्चेति । अत एवमुक्तं बृहद्वामनपुराणे—'स्त्रियो वा पुरुषो वापि भर्तृभावेन केशवम् । हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशयः ॥' इति ॥

पितृकुलोत्कीर्तिकारितां वर्णयञ्श्रीराधां विशिनष्टि—

पितुरिह वृषभानोरन्ववायप्रशस्तिं
जगति किल समस्ते सुष्ठु विस्तारयन्तीम् ।
व्रजनृपतिकुमारं खेलयन्तीं सखीभिः
सुरभिणि निजकुण्डे राधिकामर्चयामि ॥ २ ॥

**पितुरिति** । इह समस्ते जगति वृषभानोः पितुरन्ववायप्रशस्तिं वंशश्लाघां विस्तारयन्तीम् । स्वजन्मना प्रख्यापयन्तीमित्यर्थः । 'वंशोऽन्ववायः संतानः' इत्यमरः । व्रजनृपतेर्नन्दस्य कुमारं श्रीकृष्णं स्वकान्तं सखीभिर्ललितादिभिः सार्धं सुरभिणि कुसुमपरागैः सुगन्धिते निजकुण्डे खेलयन्तीम् । जलैरभिषिञ्चतीमित्यर्थः ॥

अनुपममुखमण्डलतामतिमाधुर्याधारतां च वर्णयन्विशिनष्टि—

शरदुपचितराकाकौमुदीनाथकीर्ति-
प्रकरदमनदीक्षादक्षिणस्मेरवक्त्राम् ।
नटदघभिदपाङ्गोत्तुङ्गितानङ्गरङ्गां
कलितरुचितरङ्गां राधिकामर्चयामि ॥ ३ ॥

**शरदिति** । शरद्युपचितो बुद्धिमान् यो राकाकौमुदीनाथस्य पूर्णचन्द्रस्य निखिलतमो निर्मूलनतालक्षणः कीर्तिप्रकरस्तस्य दमनदीक्षायां दक्षिणं निपुणं स्मेरवक्त्रं सस्मितमुखं यस्यास्ताम् । 'दक्षिणस्तु परच्छन्दानुवर्तिनि । दक्षेऽपसव्ये सरले' इति हैमः । नटताघभिदो हरेरपाङ्गेनोत्तुङ्गितोऽनङ्गरङ्गो यस्यास्ताम् । कलितो रुचीनां कान्तीनां तरङ्गो यया ताम् ॥

अथ संभोगान्तजां शोभां वर्णयन्विशिनष्टि—

विविधकुसुमवृन्दोत्फुल्लधम्मिल्लधाटी-
विघटितमदघूर्णत्केकिपिच्छप्रशस्तिम् ।
मधुरिपुमुखबिम्बोद्गीर्णताम्बूलराग-
स्फुरदमलकपोलां राधिकामर्चयामि ॥ ४ ॥

**विविधेति** । विविधैः कुसुमवृन्दैरुत्फुल्लो धम्मिल्लस्तेन या धाटी बलादाक्रान्तिस्तया विघटिता तुच्छीकृता मदेन घूर्णतः केकिनः पिच्छप्रशस्तिर्यया ताम् । कुसुमितेन संभोगे स्रस्तेन केशपाशेन मयूरपिच्छततिमपकर्षन्तीमित्यर्थः । 'बलादाक्रमणं धाटी' इत्यमरः । मधुरिपोर्मुखबिम्बादुद्गीर्णो यस्ताम्बूलरागस्तेन स्फुरन्नमलकपोलो यस्यास्ताम् । तच्चुम्बनलभतद्रागविद्योतमानगण्डामित्यर्थः ॥

स्वसखीस्वनायकप्रेमैकपात्रतां वर्णयन्विशिनष्टि—

अमलिनललितान्तःस्नेहसिक्तान्तरङ्गा-
मखिलविधविशाखासख्यविख्यातशीलाम् ।
स्फुरदघभिदनर्घप्रेममाणिक्यपेटीं
धृतमधुरविनोदां राधिकामर्चयामि ॥ ५ ॥

**अमलिनेति** । अमलिनस्तदेकसौख्यपर्यवसानकत्वेनात्युज्ज्वलो यो ललितान्तःस्नेहस्तेन सिक्तमन्तरङ्गं चित्तं यस्यास्ताम् । अखिलविधेन विशाखायाः सख्येन विख्यातं शीलं सद्वृत्तं यस्यास्ताम् । स्फुरन्ति यान्यघभिदः प्रेममाणिक्यानि तेषां पेटीं संपुटिकाम् । 'समुद्गः संपुटः पेटी' इति हैमः ॥

अथ वृन्दावनाधिपात्वं वर्णयन्विशिनष्टि । आकाशवाक्प्रवृत्ताया महायोगेश्वर्याः पौर्णमास्या निदेशादागताभिरेकानंशासंज्ञाच्छायासौरीगङ्गाभिः पञ्चभिर्देवीभिर्ब्रह्माणीप्रभृतिभ्यः पद्मस्रक्सुवर्णसिंहासनरत्नालंकारच्छत्रचामरदुकूलेषु गीर्देव्या समानीतेषु नभसि देवदुन्दुभिनादतुम्बुर्वादिगन्धर्वगानोर्वश्याद्यप्सरोनृत्येषु च प्रवृत्तेषु सत्सु शुभमुहूर्ते महति समाजे सर्वेश्वरस्य कृष्णस्य साक्षादेव वृन्दावनरूपे राज्येऽभिषिक्तां ताभिः पञ्चभिः सुवर्णपद्ममारोप्य मणिकुम्भनिभृतैर्दिव्यौषधिरसैरभिषिच्य तद्राज्याधिकारीयदत्ततिलकां गीर्देवीनिवेदितब्रह्माण्यादिप्रेषितोपहारां वृन्दार्पितराज्यभारां माधवमित्रसहायां वृन्दावनराज्याधीश्वरीमित्यर्थः । आकाशवागियं वैधसी कृष्णहेतुका बोध्या । अथ पञ्चयोजनमात्रेण वृन्दावनराज्येन भगवत्प्रेयसीवर्गवरिष्ठायाः श्रीराधादेव्यः कोऽयमुत्कर्ष इति शङ्कामुत्सादयितुं वृन्दावनराज्यं विशिनष्टि—

अतुलमहसि वृन्दारण्यराज्येऽभिषिक्तां
निखिलसमयभर्तुः कार्तिकस्याधिदेवीम् ।
अपरिमितमुकुन्दप्रेयसीवृन्दमुख्यां
जगदघहरकीर्तिं राधिकामर्चयामि ॥ ६ ॥

**अतुलेति** । कोणैकदृष्टब्रह्माण्डकोटिकत्वाद्वैकुण्ठगरिष्ठमाथुरोत्तमत्वाच्चातुलं निरुपमं महः प्रभावः सर्वदावसन्तसेवितत्वादानन्दमयसकान्तस्वैश्वर्यधिष्ठितत्वाच्चोत्सवश्च यस्य तस्मिन् । 'महश्चोत्सवतेजसोः' इति नानार्थवर्गः । तथा चेदृग्राज्याधिपत्यात्पराकाष्ठापन्नस्तदुत्कर्ष इति भावः । कथा चेयमार्षी दानकेलिकौमुद्यां निबद्धा द्रष्टव्या । अतो भगवत्पट्टमहिषीत्वं व्यञ्जयन्विशिनष्टि—निखिलेति । 'यथा दामोदरो भक्तवत्सलो विदितो जनैः । तस्यायं तादृशो मासः स्वल्पमप्युरुकारकः॥' इति पाद्मवाक्यात्कार्तिकस्य तादृशत्वं तस्याधिदेवीमूर्जेश्वरीमित्यर्थः । अतः कार्तिके दामोदरपूजायां सैव तत्सहभावेन पूज्याभिहिता । अतोऽपरिमितेति । 'यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥' इति पाद्मवाक्यात् । यस्या अंशे लक्ष्मीदुर्गादिकशक्तिरिति महालक्ष्मीत्वव्याहारिणी श्रुतिस्तु तत्तत्सर्वाशेषूदाहृतिरवगन्तव्या ॥

पातिव्रत्यं दर्शयन्विशिनष्टि—

हरिपदनखकोटीपृष्ठपर्यन्तसीमा-
तटमपि कलयन्तीं प्राणकोटेरभीष्टाम् ।
प्रमुदितमदिराक्षीवृन्दवैदग्ध्यदीक्षा-
गुरुमतिगुरुकीर्तिं राधिकामर्चयामि ॥ ७ ॥

**हरीति** । हरिपदनखानां याः कोट्योऽग्राणि यानि च तेषां पृष्ठानि तत्पर्यन्तायाः सीमायास्तटमेकदेशमपि । नखकोट्यन्तं नखपृष्ठान्तं चेत्यर्थः । प्राणकोटेरपि सकाशादभीष्टं

प्रेष्ठं कलयन्तीं जानन्तीम् । प्रमुदितानां मदिराक्षीवृन्दानां गोपसुभ्रुनिकराणां वैदग्ध्यदीक्षायां कलाभ्यासोपदेशे गुरुम् । आचार्यामित्यर्थः ॥

माधुर्यं वर्णयन्विशिनष्टि—

अमलकनकपट्टोद्धृष्टकाश्मीरगौरीं
मधुरिमलहरीभिः संपरीतां किशोरीम् ।
हरिभुजपरिरब्धां लब्धरोमाञ्चपालिं
स्फुरदरुणदुकूलां राधिकामर्चयामि ॥ ८ ॥

**अमलेति** । अमले कनकपट्टे सौवर्णपेषणपाषाणे उद्धृष्टं पिष्टं यत्काश्मीरं कुङ्कुमं तदिव गौरीम् । 'पट्टः पेषणपाषाणे' इति विश्वलोचनकारः । मधुरिमेति । विद्युन्मालामिवोच्छलितरूपामित्यर्थः । किशोरीं नित्यकैशोराम् । स्फुटार्थमन्यत् ॥

अष्टकपाठफलमाह—

तदमलमधुरिम्णां काममाधाररूपं
परिपठति वरिष्ठं सुष्ठु राधाष्टकं यः ।
अहिमकिरणपुत्रीकूलकल्याणचन्द्रः
स्फुटमखिलमभीष्टं तस्य तुष्टस्तनोति ॥ ९ ॥

**तदिति** । यो जनो राधाष्टकं नित्यं पठति सुष्ठु सौस्वर्येण तस्याभीष्टं वाञ्छितं तस्याः प्रेयान् कृष्णस्तुष्टः सन् तनोति प्रयच्छतीत्यन्वयः । अष्टकं विशिनष्टि—तस्या राधाया येऽमला विशुद्धा मधुरिमाणः स्वरूपगुणविभूतिगता मनोज्ञतास्तेषामाधाररूपमाश्रयम् । प्रकाशकमित्यर्थः । ऊह्यं कृष्णं तदसाधारणेन विशेषणेन प्रकाशयति—अहिमेति । अहिमकिरणस्य रवेः पुत्र्याः श्रीयमुनायाः कूले तत्तटवर्तिनि वृन्दावने कल्याणचन्द्रः । सर्वदा पूर्णविधुरित्यर्थः । अष्टकस्य मालिनी छन्दः ॥

इति श्रीराधाष्टकं व्याख्यातम् ।

---

प्रार्थनापद्धतिः ।

श्रीराधिकायै नमः ।

अथ प्रार्थनया राधां प्रसादयति—

शुद्धगाङ्गेयगौराङ्गीं कुरङ्गीलङ्गिमेक्षणाम् ।
जितकोटीन्दुबिम्बास्यामम्बुदाम्बरसंवृताम् ॥ १ ॥

**शुद्धेत्यादि** । हे वृन्दावनेश्वरि, असौ जनस्त्वां याचत इति पञ्चमश्लोकेनान्वयः । त्वां

कीदृशीमित्याह—शुद्धानि यानि गाङ्गेयानि सुवर्णानि तेभ्योऽपि गौराण्यङ्गानि यस्यास्ता-मित्यधिकपदता निरस्ता । कुरङ्ग्या हरिण्या इव लङ्गिमे मनोज्ञे ईक्षणे नेत्रे यस्यास्ताम् । जिताः कोटय इन्दुबिम्बा येन तादृशमास्यं यस्यास्ताम् । अम्बुदतुल्येनाम्बरेण वाससा संवृताम् ॥

नवीनबल्लवीवृन्दधम्मिल्लोत्तंसमल्लिकाम् ।
दिव्यरत्नाद्यलंकारसेव्यमानतनुश्रियम् ॥ २ ॥

**नवीनेति** । स्फुटार्थम् ॥

विदग्धमण्डलगुरुं गुणगौरवमण्डिताम् ।
अतिप्रेष्ठवयस्याभिरष्टाभिरभिवेष्टिताम् ॥ ३ ॥

**विदग्धेति** । गुणाः सौहार्दमार्दवादयः ॥

चञ्चलापाङ्गभङ्गेन व्याकुलीकृतकेशवाम् ।
गोष्ठेन्द्रसुतजीवातुरम्यबिम्बाधरामृताम् ॥ ४ ॥

**चञ्चलेति** । चञ्चलापाङ्गभङ्गेन चपलकटाक्षतरङ्गेण ॥

त्वामसौ याचते नत्वा विलुठन्यमुनातटे ।
काकुभिर्व्याकुलस्वान्तो जनो वृन्दावनेश्वरि ॥ ५ ॥

**त्वामिति** । असौ मल्लक्षणो जनस्त्वां काकुभिर्गद्गदवाग्भिर्याचते ॥
किं याचसे तत्राह—

कृतागस्केऽप्ययोग्येऽपि जनेऽस्मिन्कुमतावपि ।
दास्यदानप्रदानस्य लवमप्युपपादय ॥ ६ ॥

**कृतेति** । कृतागस्के सापराधेऽपि । अयोग्ये निर्गुणेऽपि । कुमतौ कुटिलबुद्धावप्य-स्मिन्मल्लक्षणे जने । दास्यलक्षणस्य दानस्य देयस्य यत्प्रदानं तस्य लवमप्युपपादयार्पय । विशेषोक्तिरत्रालंकारः । दानपात्रत्वाभावे समग्रेऽपि हेतुं प्रति तदप्रार्थनस्य तत्कार्यस्या-भावात् । यदुक्तम्—'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति ॥

नन्वयोग्ये तद्दानं कथं तत्राह—

युक्तस्त्वया जनो नैव दुःखितोऽयमुपेक्षितुम् ।
कृपाद्योतद्रवच्चित्तनवनीतासि यत्सदा ॥ ७ ॥

**युक्त इति** । अयं दुःखितो जनस्त्वयोपेक्षितुं न युक्तः । यत्त्वं कृपाद्योतेत्यादिलक्ष-णासि । परदुःखप्रहाणेच्छा हि कृपा । दुःखितश्चाहं ततस्त्यक्तुं न युक्तः । पदगतकाव्य-लिङ्गम् ॥

इति प्रार्थनापद्धतिर्व्याख्याता ।

---

चाटुपुष्पाञ्जलिः ।

श्रीराधिकायै नमः ।

'चाटुमात्रेण या मङ्क्षु स्वामिनी निजसंमुखे ।
प्रसीदति जने स्तौमि तामहं राधिकां पराम् ॥'

अथ श्रीरूपः श्रीराधां चाटुवचनैः प्रसादयति—**नवेत्यादिभिः** ।

**नवगोरोचनागौरीं प्रवरेन्दीवराम्बराम् ।**
**मणिस्तबकविद्योतिवेणीव्यालाङ्गनाफणाम् ॥ १ ॥**

हे वृन्दावनेश्वरि, त्वामहं वन्द इति द्वादशश्लोकगतेनान्वयः । त्वां कथंभूतामित्यपेक्ष्याह—नवगोरोचनातोऽपि गौरीं पीताङ्गीम् । प्रवरं सद्योविकसितत्वेनातिरम्यं यदिन्दीवरं नीलाम्बुजं तदिवाम्बरं शाटी यस्यास्ताम् । मणिस्तबकेन विद्योती वेणीव्यालाङ्गनायाः कबरीभुजङ्ग्याः फणो यस्यां ताम् । अत्र वेणी भुजङ्गत्वेनोत्प्रेक्ष्यते । सीमन्तस्तत्फणत्वेन स्तबकस्तु तत्फणमणित्वेनेति रूपकेणोत्प्रेक्षा ॥

**उपमानघटामानप्रहारिमुखमण्डलाम् ।**
**नवेन्दुनिन्दिभालोद्यत्कस्तूरीतिलकश्रियम् ॥ २ ॥**

**उपमानेति** । उपमानघटायाश्चन्द्रारविन्दादिसंहतेर्मानं गर्वं प्रहरति तादृशं मुखमण्डलं यस्यास्ताम् । निरुपमास्यामित्यर्थः । नवेन्दुनिन्दिनि भाले उद्यता हरिपादाकृतिना कस्तूरीतिलकेन श्रीर्यस्यास्ताम् ॥

**भ्रूजितानङ्गकोदण्डां लोलनीलालकावलिम् ।**
**कज्व(ज्ज)लोज्ज्वलताराजच्चकोरीचारुलोचनाम् ॥ ३ ॥**

**भ्रूजितेति** । भ्रूभ्यां जितमनङ्गकोदण्डं स्मरधनुर्यया ताम् । लोला चपला नीला श्यामा चालकावलिर्यस्यास्ताम् । कज्जलेनोज्ज्वलतया च राजती भ्राजमाने प्रियसतृष्णतया चकोरीभ्योऽपि चारुणी लोचने यस्यास्ताम् ॥

**तिलपुष्पाभनासाग्रविराजद्वरमौक्तिकाम् ।**
**अधरोद्भूतबन्धूकां कुन्दालीबन्धुरद्विजाम् ॥ ४ ॥**

**तिलेति** । तिलपुष्पाया नासाया अग्रे विराजती वर्तुलोज्ज्वलतया वरे लघुमाणिक्यमध्ये मौक्तिके यस्यास्ताम् । स्थूलमौक्तिकयोस्तादृशयोरधस्ताल्लघुमौक्तिकयोगान्मौक्तिकानि विराजन्ति यस्यास्तामित्यपरे । अधरेत्यर्धकं स्फुटार्थम् ॥

**सरत्नस्वर्णराजीवकर्णिकाकृतकर्णिकाम् ।**
**कस्तूरीबिन्दुचिबुकां रत्नग्रैवेयकोज्ज्वलाम् ॥ ५ ॥**

**सरत्नेति** । सरत्नस्वर्णात्मके ये राजीवकर्णिके ताभ्यां कृते कर्णिके कर्णभूषणे यय

ताम् । 'कर्णिका बीजकोशः स्यात्' इति हलायुधः । कस्तूरीति स्फुटार्थम् । 'ओष्ठस्याधश्चिबुकम्' इति हलायुधः । ग्रैवेयकं कण्ठभूषणम् । 'ग्रैवेयकं कण्ठभूषा' इत्यमरः ॥

दिव्याङ्गदपरिष्वङ्गलसद्भुजमृणालिकाम् ।
वलारिरत्नवलयकलालम्बिकलाविकाम् ॥ ६ ॥

**दिव्येति** । दिव्ययोरङ्गदयोः परिष्वङ्गेन लसन्त्यौ [भुजमृणालिके] यस्यास्ताम् । बलारिरत्नानीन्द्रनीलमणयस्तन्निर्मितानां वलयानां कलं झणत्कारलक्षणं मधुरध्वनिमालम्बेते तथाभूते कलाविके यस्यास्ताम् । 'अधस्तस्य मणिबन्धात्प्रकोष्ठः स्यात्कलाविका' इति हैमः । तस्येति कफोणेः । 'मणिबन्धः पाणिमूलम्' इति हलायुधः ॥

रत्नाङ्गुरीयकोल्लासिवराङ्गुलिकराम्बुजाम् ।
मनोहरमहाहारविहारिकुचकुड्मलाम् ॥ ७ ॥

**रत्नेति** । रत्नखचितैरङ्गुरीयकैरङ्गुल्याभरणैरुल्लासिन्यो वराङ्गुलयो ययोस्तथाभूते कराम्बुजे यस्यास्ताम् । 'अङ्गुल्याभरणं प्रोक्तमङ्गुलीयकभूमिका' इति हलायुधः । परिणामोऽत्रालंकारः । 'परिणामः क्रियार्थश्चेदारोप्यो विषयात्मना' इति तल्लक्षणात् । अत्रारोप्येऽम्बुजे विषयात्मना कररूपेण परिणते सति तदङ्गुलीनामङ्गुरीयकैरुल्लासक्रियानिर्वृत्तिरिति लक्षणसंगतिः । मनोहराणां [महाहाराणां] यो विहारस्तद्वन्तौ कुचकुड्मलौ यस्यास्ताम् ॥

रोमालिभुजगीमूर्धरत्नाभतरलाञ्चिताम् ।
वलित्रयीलताबद्धक्षीणभङ्गुरमध्यमाम् ॥ ८ ॥

**रोमालीति** । नाभेरूर्ध्वगता या रोमाली सैव भुजगी तस्या मूर्धरत्नाभो यस्तरलः स्यमन्तकस्तेनाञ्चितां शोभिताम् । 'तरलो हारमध्यगः' इत्यमरः । वलित्रयी त्रिवलिः सैव लता तया बद्धं क्षीणं भङ्गुरं च मध्यमं यस्यास्ताम् । कृशत्वात्कुचभारेण भज्यमानत्वाच्च लतया निबद्धमित्युत्प्रेक्ष्यते ॥

मणिसारसनाधारविस्फारश्रोणिरोधसम् ।
हेमरम्भामदारम्भस्तम्भनोरुयुगाकृतिम् ॥ ९ ॥

**मणीति** । मणिनिर्मितं यत्सारसनं किङ्किणी तस्याधारभूतं विस्फारं विस्तीर्णं श्रोणिरोधः कटितटं यस्यास्ताम् । 'कटिसूत्रं सारसनं किङ्किणी क्षुद्रघण्टिका' इति हलायुधः । हेमरम्भा स्वर्णकदली तस्या यो मदारम्भो वर्तुलत्वक्रमस्थविरकृशिमकृतस्तं स्तम्भयति तथाभूता ऊरुयुगाकृतिः सक्थियुग्मशोभा यस्यास्ताम् । 'आकृतिः कथिता रूपे सामान्यवपुषोरपि' इति विश्वः ॥

जानुद्युतिजितक्षुल्लपीतरत्नसमुद्गकाम् ।
शरन्नीरजनीराज्यमञ्जीरविरणत्पदाम् ॥ १० ॥

**जान्वित्यादि** । जानुनोर्द्युत्या जितः क्षुल्लोऽल्पकः पीतरत्ननिर्मितः समुद्गकः संपुटो

यया ताम् । 'स्तोकं क्षुल्लं तुच्छमल्पम्' इति हैमः । शरत्कालभवाभ्यां नीरजाभ्यां नीराज्ये निर्मञ्छनीये मञ्जीराभ्यां विरणती शब्दायमाने च पदे चरणौ यस्यास्ताम् ॥

राकेन्दुकोटिसौन्दर्यजैत्रपादनखद्युतिम् ।
अष्टाभिः सात्त्विकैर्भावैराकुलीकृतविग्रहाम् ॥ ११ ॥

**राकेन्द्वित्यादि** । राकेन्दुकोटीनां यानि सौन्दर्याणि तेषां जैत्री पादनखद्युतिर्यस्यास्ताम् । अष्टाभिरिति स्पष्टार्थम् ॥

मुकुन्दाङ्गकृतापाङ्गामनङ्गोर्मितरङ्गिताम् ।
त्वामारब्धश्रियानन्दां वन्दे वृन्दावनेश्वरि ॥ १२ ॥

**मुकुन्देति** । मुकुन्दाङ्गेषु कृतोऽर्पितोऽपाङ्गो नेत्रान्तो यया ताम् । मुकुन्दाङ्गवीक्षणादेवानङ्गोर्मितरङ्गो जातो यस्यास्ताम् । त्वामहं वन्दे हे वृन्दावनेश्वरि राधे ॥

अयि प्रोद्यन्महाभावमाधुरीविह्वलान्तरे ।
अशेषनायिकावस्थाप्राकट्याद्भुतचेष्टिते ॥ १३ ॥

**अयीति** । अयीति सविनयप्रश्ने । 'अयि प्रश्ने सानुनये' इति हलायुधः । प्रोद्यन्ती या महाभावस्य माधुरी तया विह्वलं विवशमन्तरं चित्तमध्यं यस्या हे तथाभूते । अशेषाणां मुग्धादीनां नायिकानां या अवस्था दशास्तासां प्राकट्येनाद्भुतानि चेष्टितानि यस्या हे तथाभूते । स्वयं भगवति कृष्णे यथा सर्वनायकगुणा यथावसरमुदयन्ते तथा स्वयं लक्ष्म्यां राधायां सर्वनायिकागुणा भवन्तीति भावः ॥

सर्वमाधुर्यविच्छोलीनिर्मन्थितपदाम्बुजे ।
इन्दिरामृग्यसौन्दर्यस्फुरदङ्घ्रिनखाञ्चले ॥ १४ ॥

**सर्वेति** । सर्वासां नायिकानां या माधुर्यविच्छोली तत्तदवस्थागतचारुताश्रेणी तया निर्मन्थिते पदाम्बुजे यस्या[स्तत्संबोधने हे तथाभूते ।] इन्दिराभिर्मृग्याणि सौन्दर्याणि एषां तथाभूताः स्फुरन्तो दीप्यमाना अङ्घ्रिनखाञ्चला यस्याः [हे तथाभूते ।] राधा खलु महालक्ष्मीः पूर्वोक्तश्रुत्यादिभ्यस्ततस्तद्विलासांशकलाभिर्लक्ष्मीभिस्तदङ्घ्रिनखाञ्चलसौन्दर्याणि मृग्याण्येव संकर्षणेनेव वासुदेवस्य सौन्दर्यं बदरीपतिभ्यामिव श्वेतद्वीपपतेर्बलप्रद्युम्नादिभिरिव कृष्णस्येति न काचिदनुपपत्तिः । अन्ये त्वाहु—वैकुण्ठाधिपया राधासौन्दर्यं लब्धुं मृग्यते यतः कृष्णेन स्वाङ्गीकारः । न तु लभ्यते । अतस्तदेकरसिकेन तेन तदस्वीकारः । 'यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् शु(सु)चिरं धृतव्रता' इति स्मृतेः ॥

गोकुलेन्दुमुखीवृन्दसीमन्तोत्तंसमञ्जरि ।
ललितादिसखीयूथजीवातुस्मितकोरके ॥ १५ ॥

**गोकुलेन्द्विति** । गोकुलेत्यर्धकं स्फुटार्थम् । ललितादेः सखीयूथस्य जीवातुः स्मितकोरको मन्दहासकलिका यस्याः [हे] तथाभूते ॥

चटुलापाङ्गमाधुर्यबिन्दून्मादितमाधवे ।
तातपादयशःस्तोमकैरवानन्दचन्द्रिके ॥ १६ ॥

**चटुलेति** । चटुलस्य चञ्चलस्यापाङ्गस्य नेत्रान्तस्य माधुर्यबिन्दुनोन्मादितो माधवो यया । तातपादस्य वृषभानोर्यो यशःस्तोमः कीर्तिव्यूहास्त एव कैरवाणि कुमुदानि तेषामानन्दो यतस्तथाभूता चन्द्रिका कौमुदी त्वमसीति हे तथाभूते । चन्द्रिका यथा कैरवाणि प्रकाशयति तथा त्वं पितृयशांसीत्यर्थः ॥

अपारकरुणापूरपूरितान्तर्मनोह्रदे ।
प्रसीदास्मिञ्जने देवि निजदास्यस्पृहाजुषि ॥ १७ ॥

**अपारेति** । अपारेण करुणापूरेण पूरितोऽन्तर्मनोह्रदो यस्या हे महादयावति । अस्मिञ्जने मयि प्रसीद प्रसादं कुरु । प्रसादं व्यञ्जयन्विशिनष्टि—निजेति । दास्यदानप्रसादं विधेहीत्यर्थः ॥

तद्दानप्रसादे विशेषमर्थयति—

कच्चित्त्वं चाटुपटुना तेन गोष्ठेन्द्रसूनुना ।
प्रार्थ्यमानचलापाङ्गप्रसादा द्रक्ष्यसे मया ॥ १८ ॥

**कच्चिदिति** । कच्चिदिति प्रश्ने । 'कच्चित्स्यात्प्रश्नकाम्ययोः' इति हलायुधः । त्वां पृच्छामीत्यर्थः । पृच्छेति चेत्तत्राह—चाटुपटुना प्रियवचनरचननिपुणेन तेन गोष्ठेन्द्रसूनुना प्रार्थ्यमानेत्यादिलक्षणा त्वं मया कदा द्रक्ष्यसे । मानान्ते मदेकसेविका त्वं रहस्तिष्ठेस्तदा सखीभिः प्रवेशितेन चाटुपटुना कृष्णेन तमृजुपश्यन्त्या यस्याश्चलापाङ्गप्रसादः प्रार्थ्यः स्यात्सा त्वं मया दृष्टा भाविनीत्यर्थः ॥

त्वां साधु माधवीपुष्पैर्माधवेन कलाविदा ।
प्रसाध्यमानां खिद्यन्तीं वीजयिष्याम्यहं कदा ॥ १९ ॥

**त्वामिति** । कलाविदा मण्डनकलापण्डितेन माधवेन कर्त्रा माधवीपुष्पैः प्रसाध्यमानां विभूष्यमाणां तदा खिद्यन्तीं तत्करस्पर्शादुत्पद्यमानस्वेदां त्वामहं कदा वीजयिष्यामि ॥

केलिविस्रंसिनो वक्रकेशवृन्दस्य सुन्दरि ।
संस्काराय कदा देवि जनमेतं निदेक्ष्यसि ॥ २० ॥

**केलीति** । ततः कृतत्वत्प्रसाधनेन माधवेन सह जातया केल्या विस्रंसिनो विमुक्तस्य वक्रकेशवृन्दस्य संस्काराय वेणीजटभावाय तत्र संनिहितमेतं मल्लक्षणं जनं कदा निदेक्ष्यस्याज्ञापयिष्यसि ॥

कदा बिम्बोष्ठि ताम्बूलं मया तव मुखाम्बुजे।
अर्प्यमाणं व्रजाधीशसूनुराच्छिद्य भोक्ष्यते ॥ २१ ॥

**कदेति**। हे बिम्बोष्ठि, तव मुखाम्बुजे मयार्प्यमाणं ताम्बूलं व्रजाधीशसूनुर्माधवः आच्छिद्य बलाद्गृहीत्वा भोक्ष्यते एतद्विनोदवीक्षणरूपं सौभाग्यं मे कदा दास्यसि ॥

एतदतिभाग्यं मे कुतः स्यादेतावत्तु संपादयेत्याह—

व्रजराजकुमारवल्लभाकुलसीमन्तमणि प्रसीद मे।
परिवारगणस्य ते यथा पदवी मे न दवीयसी भवेत् ॥ २२ ॥

**व्रजेति**। व्रजराजकुमारस्य यावन्ति वल्लभाकुलानि प्रेयसीवृन्दानि तेषां सीमन्तमणिस्त्वमसि तत्संबोधने तथा। 'मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च' इति मेदिनी। त्वं मे प्रसीद एतावन्तं प्रसादं कुरु। ते तव परिवारगणस्य पदवी यथा मे मम दवीयसी दूरतरा न स्यात्, किंतु संनिहिता स्यादिति ॥

करुणां मुहुरर्थये परं तव वृन्दावनचक्रवर्तिनि।
अपि केशिरिपोर्यथा भवेत्स चटुप्रार्थनभाजनं जनः ॥ २३ ॥

**करुणामिति**। हे वृन्दावनचक्रवर्तिनि निखिलवृन्दावनराज्याभिषिक्तराधे, तव करुणां मुहुरहमर्थये परं केवलम्। यथा तव करुणया मानान्निराकृतस्य केशिरिपोरपि स चटुप्रार्थनभाजनं प्रियवचनसहितस्याभ्यर्थनस्य पात्रमयं जनो भवेत्। सखीषु किंकरीषु चालब्धप्रवेशः केशिरिपुर्हे दयावति सुन्दरि, मद्वेदनां त्वं वार्षभानव्यां प्रापयेति मां याचेतेत्यर्थः। पद्यद्वयेऽत्र सुन्दरीनामकमर्धसमं छन्दः। 'अयुजोर्यदि सौ जगौ युजोः सभरात्गौ यदि सुन्दरी मता' इति तल्लक्षणम् ॥

इमं वृन्दावनेश्वर्या जनो यः पठति स्तवम्।
चाटुपुष्पञ्जालिं नाम स स्यादस्याः कृपास्पदम् ॥ २४ ॥

**इममिति**। स्फुटार्थम्। अस्या वृन्दावनेश्वर्याः। कृपास्पदं दयापात्रम् ॥

इति चाटुपुष्पाञ्जलिर्व्याख्यातः।

---

गान्धर्वाप्रार्थनाष्टकम्।

श्रीगान्धर्विकायै नमः।

अथाष्टकेन गान्धर्वां प्रार्थयति—

वृन्दावने विहरतोरिह केलिकुञ्जे
मत्तद्विपप्रवरकौतुकविभ्रमेण।
संदर्शयस्व युवयोर्वदनारविन्द-
द्वन्द्वं विधेहि मयि देवि कृपां प्रसीद ॥ १ ॥

**वृन्दावन इति** । हे देवि राधे, मयि प्रसीद कृपां विधेहि । तामाह—युवयोर्वदनारविन्दद्वन्द्वं संदर्शयेति । तन्मुखदर्शनमपि त्वदधीनमिति भावः । युवयोः कथंभूतयोरित्याह—केलिकुञ्जे वृन्दावने मत्तद्विपप्रवरयोर्यः कौतुकविभ्रमो विनोदविलासस्तेन विहरतोः क्रीडतोः ॥

हा देवि काकुभरगद्गदयाद्य वाचा
याचे निपत्य भुवि दण्डवदुद्भटार्तिः ।
अस्य प्रसादमबुधस्य जनस्य कृत्वा
गान्धर्विके निजगणे गणनां विधेहि ॥ २ ॥

**हा देवीति** । हेति विषादे । 'हा शुग्दुःखविषादेषु' इति हैमः । हे देवि, भुवि दण्डवन्निपत्य काकुभरगद्गदया वाचया(चा) त्वां याचे । कीदृशोऽहमित्याह—उद्भटार्तिरिति । किं याचसे तत्राह—अस्येति । हे गान्धर्विके, अस्याबुधस्याज्ञस्य जनस्य मम निजगणे गणनां विधेहि कुर्विति ॥

श्यामे रमारमणसुन्दरतावरिष्ठ-
सौन्दर्यमोहितसमस्तजगज्जनस्य ।
श्यामस्य वामभुजबद्धतनुं कदाहं
त्वामिन्दिराविरलरूपभरां भजामि ॥ ३ ॥

**श्यामे इति** । हे श्यामे श्रीराधे, श्यामस्य नन्दसूनोर्वामभुजबद्धतनुं त्वामहं कदा भजामि सेविष्ये । अत्र कदायोगे भविष्यत्यर्थे लट् 'विभाषा कदाकर्ह्योः' इति सूत्रात् । श्यामस्य कथंभूतस्येत्याह—रमारमणस्य चतुर्भुजस्य देवाकारस्य नारायणस्य या सुन्दरता ततोऽपि वरिष्ठं नराकारपरब्रह्मनिष्ठं यत्सौन्दर्यं तेन मोहिताः समस्तजगज्जना येन तस्य । एवमुक्तं श्रीदशमे—'गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् । दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधामयशसः श्रिय ऐश्वरस्य ॥' इति । अनन्यसिद्धं तन्मात्रवर्ति । दुरापं तद्विलासस्वांशकलाभिः । त्वां कथंभूतामित्याह—इन्दिरया श्रीदेव्यापि विरलो दुर्लभो रूपभरो यस्यास्तामिति । विशेषतस्त्विन्दिरा मृग्यसौन्दर्येत्यत्र द्रष्टव्यः ॥

त्वां प्रच्छदेन मुदिरच्छविना पिधाय
मञ्जीरमुक्तचरणां च विधाय देवि ।
कुञ्जे व्रजेन्द्रतनयेन विराजमाने
नक्तं कदा प्रमुदितामभिसारयिष्ये ॥ ४ ॥

**त्वामिति** । हे देवि, व्रजेन्द्रतनयेन विराजमाने कुञ्जे त्वां कदा नक्तं निश्यभिसारयिष्ये नेष्यामि । किं कृत्वेत्याह—मुदिरच्छविना प्रच्छदेन पिधाय मञ्जीरमुक्तचरणां च विधायेति । यथा त्वामन्यः कोऽपि न जानीयादिति भावः ॥

कुञ्जे प्रसूनकुलकल्पितकेलितल्पे
संविष्टयोर्मधुरनर्मविलासभाजोः ।
लोकत्रयाभरणयोश्चरणाम्बुजानि
संवाहयिष्यति कदा युवयोर्जनोऽयम् ॥ ५ ॥

**कुञ्जे इति** । अयं जनस्तत्र कुञ्जे संविष्टयोर्युवयोश्चरणाम्बुजानि संवाहयिष्यति मर्दयिष्यति । स्फुटार्थमितरत् ॥

त्वत्कुण्डरोधसि विलासपरिश्रमेण
स्वेदाम्बुचुम्बिवदनाम्बुरुहश्रियौ वाम् ।
वृन्दावनेश्वरि कदा तरुमूलभाजौ
संवीजयामि चमरीचयचामरेण ॥ ६ ॥

**त्वदिति** । हे वृन्दावनेश्वरि, त्वत्कुण्डरोधसि तत्सरस्तटतरुमूलभाजौ कल्पवृक्षतलमणिकुट्टिमस्थितौ वां युवामहं चमरीचयचामरेण वल्लरीवृन्दरचितेन व्यजनेन कदा संवीजयामि । 'चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति मेदिनी । रत्नदण्डशोभितेन वालव्यजनेनेत्यन्ये । वां कथंभूतावित्याह—विलासपरिश्रमेण स्वेदाम्बुचुम्बिवदनाम्बुरुहश्रियौ ॥

लीनां निकुञ्जकुहरे भवतीं मुकुन्दे
चित्रैव सूचितवती रुचिराक्षि नाहम् ।
भुग्नां भ्रुवं न रचयेति मृषारुषं त्वा-
मग्रे व्रजेन्द्रतनयस्य कदानुनेष्ये ॥ ७ ॥

**लीनामिति** । कौतुकान्निकुञ्जे निलीना त्वं चित्रया सख्या कृष्णं प्रति सूचिता सती प्रमुदितचित्रापि मत्सूचनसंभावनया मयि कृतानृतकोपा कदा कृष्णाग्रेऽनुनेतव्येति वाक्यार्थः ॥

वाग्युद्धकेलिकुतुके व्रजराजसूनुं
जित्वोन्मदामधिकदर्पविकासिजल्पाम् ।
फुल्लाभिरालिभिरनल्पमुदीर्यमाण-
स्तोत्रां कदा नु भवतीमवलोकयिष्ये ॥ ८ ॥

**वागिति** । भवतीं कदाहमवलोकयिष्ये द्रक्ष्यामि । कथंभूतामित्याह—वाग्युद्धकेलिकुतुके वाक्योद्वाक्यक्रीडाविनोदेऽप्राप्तोत्तरं व्रजराजसूनुं प्रेष्ठं जित्वा उन्मदामतिहृष्टां अधिकदर्पविकासी जल्पो यस्यास्ताम् । तदा फुल्लाभिः स्वेश्वरीविजयात्प्रसन्नवदनाभिरालीभिरुदीर्यमाणं क्रियमाणं स्तोत्रं स्तुतिर्यस्यास्ताम् ॥

अथाष्टकाध्ययनफलमाह—

यः कोऽपि सुष्ठु वृषभानुकुमारिकायाः
संप्रार्थनाष्टकमिदं पठति प्रपन्नः ।
सा प्रेयसा सह समेत्य धृतप्रमोदा
तस्य प्रसादलहरीमुररीकरोति ॥ ९ ॥

**य इति** । यो जनः प्रपन्नः शरणागतः सन् वृषभानुकुमारिकाया इदं संप्रार्थनाष्टकं सुष्ठु पठति तस्य संबन्धिनीं प्रसादलहरीं सा तत्कुमारिका उररीकरोति स्वीकरोति । तत्र प्रसादं तनोतीत्यर्थः । प्रेयसा कृष्णेन सह समेत्य तदन्तिकमासाद्य । इति महान् प्रसादोऽस्य फलम् । वसन्ततिलकमत्र छन्दः—'ज्ञेयं वसन्ततिलकं तभजा जगौ गः' इति तल्लक्षणात् ॥

इति गान्धर्वाप्रार्थनाष्टकं व्याख्यातम् ।

---

## नामयुगाष्टकम् ।

श्रीराधाकृष्णाभ्यां नमः ।

एवं पृथक् श्रीकृष्णो राधिका च स्तुते । अथ तयोर्युगलं स्तोतुमुपक्रमते । तत्र तावद्युगलनामान्याह—

राधामाधवयोरेतद्वक्ष्ये नामयुगाष्टकम् ।
राधादामोदरौ पूर्वं राधिकामाधवौ ततः ॥ १ ॥

**राधेत्यादि** । पूर्वमादौ । ततस्तदनन्तरम् ॥

वृषभानुकुमारी च तथा गोपेन्द्रनन्दनः ।
गोविन्दस्य प्रियसखी गान्धर्वाबान्धवस्तथा ॥ २ ॥

**वृषेति** । स्फुटार्थम् ॥

निकुञ्जनागरौ गोष्ठकिशोरजनशेखरौ ।
वृन्दावनाधिपौ कृष्णवल्लभाराधिकाप्रियौ ॥ ३ ॥

**निकुञ्जेति** । निकुञ्जनागरी च निकुञ्जनागरश्च तौ । 'पुमान्स्त्रिया' इति सूत्रादेकशेषः । गोष्ठे व्रजे यावन्तः किशोरजनाः स्त्रीपुरुषलक्षणास्तेषां शेखरौ शिरोवतंसौ । स्फुटार्थमन्यत् ॥

इति नामयुगाष्टकं व्याख्यातम् ।

---

व्रजनवीनयुवद्वन्द्वाष्टकम् ।

श्रीराधाकृष्णौ जयतः ।

अथाष्टकेन तयोर्युगलं स्तौति—

अदुर्विधविदग्धतास्पदविमुग्धवेशश्रियो-
रमन्दशिखिकन्धराकनकनिन्दिवासस्त्विषोः ।
स्फुरत्पुरटकेतकीकुसुमविभ्रमाभ्रप्रभा-
निभाङ्गमहसोर्भजे व्रजनवीनयूनोर्युगम् ॥ १ ॥

**अदुर्विधेत्यादि** । व्रजनवीनयूनोर्युगं द्वन्द्वमहं भजे सेवे । युवतिश्च युवा च तौ युवानौ । पूर्वपदैकशेषः । नवीनौ च तौ युवानौ चेति कर्मधारयः । तयोः कथंभूतयोरित्याह— अदुर्विधा संपूर्णा या विदग्धता तस्या आस्पदं च विमुग्धा रम्या च वेशश्रीर्ययोस्तथा-भूतयोः । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । अमन्दशिखि-कन्धरा चामन्दकनकं च तयोर्निन्दिनी वाससोस्त्विड् ययोस्तथाभूतयोरिति क्रमान्नीलपीतवाससोरभिधानम् । स्फुरतः पुरटकेतकीकुसुमस्य यो विभ्रमः कान्तिर्या चाभ्रप्रभा तन्निभे क्रमादङ्गमहसी ययोस्तथाभूतयोः । 'लक्ष्मीश्रीकान्तिविभ्रमाः' इति हलायुधः । 'महश्चोत्सवतेजसोः' इत्यमरः ॥

तद्युगं पुनर्विशिनष्टि—

समृद्धविधुमाधुरीविधुरताविधानोद्धुरै-
र्नवाम्बुरुहरम्यतामदविडम्बनारम्भिभिः ।
विलिम्पदिव वर्णकावलिसहोदरैर्दिक्तटी-
र्मुखद्युतिभरैर्भजे व्रजनवीनयूनोर्युगम् ॥ २ ॥

**समृद्धेति** । मुखद्युतिभरैः प्रसमरैर्दिक्तटीर्विलिम्पदिव विलिप्ताः कुर्वदिव । तद्भरैः कथंभूतैरित्याह—वर्णकेति । वर्णकावलिः कुङ्कुमकस्तूर्याद्यनुलेपनश्रेणी तत्सहोदरैः । तत्तुल्यैरित्यर्थः । समृद्धा या विधुमाधुरी तस्या विधुरताविधाने कष्टकरणे उद्धुरैर्गर्वितैः । नवानामम्बुरुहाणां यो रम्यतामदस्तस्य विडम्बनामवज्ञामारभन्ते तच्छीलैः । विशेषणाभ्यामत्युज्ज्वलतातिप्रफुल्लते क्रमाद्वर्णिते ॥

पुनस्तयोर्युगं विशिनष्टि—

विलासकलहोद्धतिस्खलदमन्दसिन्दूरभा-
गखर्वमदनाङ्कुशप्रकरविभ्रमैरङ्कितम् ।
मदोद्धुरमिवेभयोर्मिथुनमुल्लसद्वल्लरी-
गृहोत्सवरतं भजे व्रजनवीनयूनोर्युगम् ॥ ३ ॥

**विलासेति** । मदेनोद्धुरं गार्वतमिभयोर्हस्तिनोर्मिथुनमिवोल्लसत् । इभमिथुनसादृश्यं संपादयति । विलासकलहेषु या उद्धतिस्तया स्खलन्ति यान्यमन्दानि सिन्दूराणि तानि भजतीति तथा । अखर्वाणां महतां मदनाङ्कुशप्रकराणां नखरूपाणां विभ्रमैर्विलासैरङ्कितं चिह्नितम् । वल्लरीगृहोत्सवे रतमासक्तम् । इभयोरपि युद्ध्यमानयोः सिन्दूरभाक्त्वाङ्कुशचिह्नयोः संभवात्तत्सादृश्यम् ॥

आनन्दाश्रुरोमाञ्चवत्तया तद्युगं विशिनष्टि—

घनप्रणयनिर्झरप्रसरलब्धपूर्तेर्मनो-
  ह्रदस्य परिवाहितामनुसरद्भिरस्रैः प्लुतम् ।
स्फुरत्तनुरुहाङ्कुरैर्नवकदम्बजृम्भश्रियं
  व्रजत्तदनिशं भजे व्रजनवीनयूनोर्युगम् ॥ ४ ॥

**घनेति** । अस्रैरानन्दाश्रुभिः प्लुतं व्याप्तम् । अस्रैः कीदृशैरित्याह—मनोह्रदस्य परिवाहितां प्रवाहमनुसरद्भिरनुगच्छद्भिः । मनोह्रदस्य कथंभूतस्येत्याह—घनो निबिडो यः प्रणयो मिथःस्नेहस्तस्य यो निर्झरप्रसरस्तेन लब्धा पूर्तिर्येन तस्य । प्रेमाम्बुपूर्णस्येत्यर्थः । 'निर्झरस्तु झरः सरित्' इति हैमः । स्फुरद्भिस्तनुरुहाङ्कुरै रोमाञ्चैर्नवकदम्बजृम्भश्रियं व्रजत् प्राप्नुवदिति युगविशेषणम् ॥

संभोगं वर्णयन्विशिनष्टि—

अनङ्गरणविभ्रमे किमपि बिभ्रदाचार्यकं
  मिथश्चलदृगञ्चलद्युतिशलाकया कीलितम् ।
जगत्यतुलधर्मभिर्मधुरनर्मभिस्तन्वतो-
  र्मिथो विजयितां भजे व्रजनवीनयूनोर्युगम् ॥ ५ ॥

**अनङ्गेति** । तयोर्युगं भजे इत्यन्वयः । तयोः कथंभूतयोरित्याह—मधुरनर्मभिर्मिथो विजयितां तन्वतोर्विस्तारयतोः । तैः कथंभूतैरित्याह—जगत्यां लोकेऽतुला धर्माः श्लिष्टव्यञ्जकपदयोजनात्मका येषां तैः । तयोर्युगं कथंभूतमित्याह—अनङ्गरणविभ्रमे स्मराहवविलासे किमप्यनिर्वाच्यमाचार्यकं मिथो गुरुतां बिभ्रत् । भावे वुञ् । 'योपधाद्गुरूपोत्तमाद्वुञ्' इति सूत्रात् । चलदृगञ्चलद्युतिशलाकया मिथः कीलितं विद्धम् ॥

वनविहारं वर्णयन्विशिनष्टि—

अदृष्टचरचातुरीचणचरित्रचित्रायितैः
  सह प्रणयिभिर्जनैर्विहरमाणयोः कानने ।
परस्परमनो मृगं श्रवणचारुणा चर्चरी-
  चयेन रजयद्भजे व्रजनवीनयूनोर्युगम् ॥ ६ ॥

**अदृष्टेति** । यूनोर्युगं भजे इत्यन्वयः । यूनोः कथंभूतयोः । प्रणयिभिर्जनैर्ललितादिभिः सह कानने विहरमाणयोः । जनैः कथंभूतैः । अदृष्टचरीभिः ख्यातानीत्यदृष्टचरचातुरीचणानि । 'तेन वित्तं चञ्चुप्चणपौ' इति सूत्राच्चणप् । तादृशैश्चरित्रैः कृत्वा चित्रायितैः । विस्मयं कुर्वद्भिरित्यर्थः । युगं कथंभूतम् । चर्चरीणां तदाख्यतालानां चयेन परस्परस्य मनोमृगं रजयद्रमयत् । 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' इति वार्तिकाद्रञ्जेरिह नलोपः । तेन मिथश्चित्तहरिणं रञ्जितं कुर्वदित्यर्थः ॥

जलविहारं वर्णयन्युवानौ विशिनष्टि—

मरन्दभरमन्दिरप्रतिनवारविन्दावली-
सुगन्धिनि विहारयोर्जलविहारविस्फूर्जितैः ।
तपे सरसि वल्लभे सलिलवाद्यविद्याविधौ
विदग्धभुजयोर्भजे व्रजनवीनयूनोर्युगम् ॥ ७ ॥

**मरन्देति** । तपे ग्रीष्मर्तौ वल्लभेऽतिप्रिये सरसि राधाकुण्डे जलविहारविस्फूर्जितैर्विहारयोस्त्रुटितमुक्तस्रजोः । सलिलवाद्यविद्याया विधौ विदग्धा भुजा ययोस्तयोः । कथंभूते सरसीत्याह—मरन्दभराणां मन्दिरैः प्रतिनवाभिररविन्दावलीभिः सुगन्धिनि सौरभ्यवति ॥

द्यु(द्यू)तकेलिं वर्णयन्युवानौ विशिनष्टि—

मृषाविजयकाशिभिः कलितचातुरीराशिभि-
र्ग्लहस्य हरणं हठात्प्रकटयद्भिरुच्चैर्गिरा ।
तदक्षकलिदक्षयोः कलितपक्षयोः साक्षिभिः
कुलैः स्वसुहृदां भजे व्रजनवीनयूनोर्युगम् ॥ ८ ॥

**मृषेति** । यूनोस्तद्युगं भजे इत्यन्वयः । कथंभूतयोरित्याह—अक्षकलिदक्षयोर्द्यूतकलहनिपुणयोः । तत्र साक्षिभिः स्वसुहृदां ललितादीनां मधुमङ्गलादीनां च कुलैः कलितपक्षयोः । कुलैः कथंभूतैः । मृषाविजयकाशिभिरनृतं जयमावहद्भिः । 'जितकाशी जयावहः' इत्यमरः । ग्लहस्य द्यूते स्थापितस्य पणस्य हारादेर्हठाद्धरणमुच्चैर्गिरा प्रकटयद्भिः ॥

अष्टकपाठफलमाह—

इदं वलिततुष्टयः परिपठन्ति पद्याष्टकं
द्वयोर्गुणविकासि ये व्रजनवीनयूनोर्जनाः ।
मुहुर्नवनवोदयां प्रणयमाधुरीमेतयो-
रवाप्य निवसन्ति ते पदसरोजयुग्मान्तिके ॥ ९ ॥

**इदमिति** । द्वयोर्व्रजनवीनयूनोर्गुणविकासीदं पद्याष्टकं ये जनाः पठन्तीत्यन्वयः । स्फुटार्थमन्यत् ॥

अथोक्ताष्टकार्थानुयायितयोर्ध्यानमेकेन पद्येनाह—

कोणेनाक्ष्णः पृथुरुचि मिथो हारिणा लिह्यमाना-
वेकैकेन प्रचुरपुलकेनोपगूढौ भुजेन ।
गौरीश्यामौ वसनयुगलं श्यामगौरं वसानौ
राधाकृष्णौ स्मरविलसितोद्दामतृष्णौ स्मरामि ॥ १० ॥

**कोणेनेति** । पृथुरुचि यथा स्यात्तथा अक्ष्णः कोणेन मिथो लिह्यमानौ रूपमनुभवन्तौ । वसानौ धारयन्तौ । 'वस आच्छादने' धातुरदादिः । स्फुटार्थमन्यत् ॥

इति व्रजनवीनयुवद्वन्द्वाष्टकं व्याख्यातम् ।

---

## कार्पण्यपञ्जिकास्तोत्रम् ।

श्रीवृन्दावनेशौ जयतः ।

नमो भावकभूपाय श्रीरूपाय दयालवे ।
कार्पण्यपञ्जिकादुःखभाञ्जिका लभ्यते यतः ॥

अथ कार्पण्यनिवेदनया स्वामिनौ प्रसादयति—

तिष्ठन्वृन्दाटवीकुञ्जे विज्ञप्तिं विदधात्यसौ ।
वृन्दाटवीशयोः पादपद्मेषु कृपणो जनः ॥ १ ॥

**तिष्ठन्नित्यादि** । असौ कृपणो दीनो जनो वृन्दाटवीकुञ्जे तिष्ठन् वृन्दाटवीशयोः पादपद्मेषु विज्ञप्तिं विदधाति । 'कीनाशः कृपणो लुब्धो गृध्रो दीनोऽभिलाषुकः' इति धनंजयः । तद्धामोपान्तस्थस्य दीनस्य मे विज्ञप्तिरीशाभ्यां ताभ्यां श्रोतव्यैव । स्वसौधोपान्ते फूत्कुरुतां दीनानां विज्ञप्तिमीश्वराः शृण्वन्तीति प्रसिद्धमिति भावः ॥

नवेन्दीवरसंदोहसौन्दर्यास्कन्दनप्रभम् ।
चारुगोरोचनागर्वगौरवग्रासिगौरभाम् ॥ २ ॥

**नव इति** । 'नवेन्दीवर–' इत्यादीनामष्टानां श्लोकानाम् 'त्वां च' इति नवमश्लोकेन संबन्धः । हे वृन्दावनाधीश हे वृन्दावनेश्वरि, अयं जनस्त्वां च त्वां च प्रार्थयते । तत्र त्वां च कथंभूतं त्वां च कथंभूतामित्यपेक्षायां क्रमादेकैकेन पदेन विज्ञाप्ययोस्तयोर्विशेषणदानम् । तथा हि—नवानामिन्दीवरसंदोहानां सौन्दर्याण्यास्कन्दति शोषयति सा प्रभा नीलकान्तिर्यस्य तम् । चारोर्मनोज्ञाया गोरोचनाया गर्वगौरवं ग्रसते तच्छीला गौरी भा यस्यास्ताम् ॥

शातकुम्भकदम्बश्रीविडम्बिस्फुरदम्बरम् ।
हरता किंशुकस्यांशूनंशुकेन विराजिताम् ॥ ३ ॥

**शातकुम्भेति ।** शातकुम्भं स्वर्णम् । अम्बरं वासः । हरतेति अंशुकेन वाससा विराजितां दीप्ताम् । कीदृशेन । किंशुकस्य पलाशकुसुमस्यांशून् किरणान् हरता स्वकिरणेन तिरस्कुर्वता । अत्यरुणेनेत्यर्थः ॥

सर्वकैशोरवद्वृन्दचूडारूढहरिन्मणिम् ।
गोष्ठाशेषकिशोरीणां धम्मिल्लोत्तंसमालिकम् ॥ ४ ॥

**सर्वेति ।** सर्वेषां गोष्ठवर्तिनां कैशोरवद्वृन्दानां तरुणपुरुषसमूहानां चूडासु शिखास्वारूढं हरिन्मणिं मरकतरत्नम् । गोष्ठेति स्फुटार्थम् ॥

श्रीशमुख्यात्मरूपाणां रूपातिशयिविग्रहम् ।
रमोज्ज्वलव्रजवधूव्रजविस्मापिसौष्ठवाम् ॥ ५ ॥

**श्रीशेति ।** श्रीशो नारायणश्चतुर्बाहुर्देवलीलो मुख्यो येषु तथाभूतानामात्मरूपाणां निजाविर्भावानां मध्ये रूपातिशयी सौन्दर्याधिको विग्रहो यस्य द्विभुजस्य नरलीलस्य तम् । गोप्यस्तपः किमचरन्नित्यादेः । रमाया अप्युज्ज्वलास्ततोऽप्यतिरूपिण्यो या व्रजवध्वश्चन्द्राद्यास्तासां व्रजान् विस्मापयति तथाभूतं सौष्ठवं रूपगुणाचरणशोभा यस्यास्ताम् ॥

सौरभ्यहृतगान्धर्वं गन्धोन्मादितमाधवाम् ।
राधारोधनवंशीकं महतीमोहिताच्युताम् ॥ ६ ॥

**सौरभ्येति ।** सौरभ्येण हृता गान्धर्वा राधिका येन तम् । गन्धेनोन्मादितो माधवो यया ताम् । राधारोधनी वंशी यस्य तम् । महत्या वीणया मोहितोऽच्युतो यया ताम् ॥

राधाधृतिधनस्तेनलोचनाञ्चलचापलम् ।
दृगञ्चलकलाभृङ्गीदष्टकृष्णहृदम्बुजाम् ॥ ७ ॥

**राधेति ।** राधाधृतिधनस्य स्तेनं चौरं लोचनाञ्चलचापलं यस्य तम् । दृगञ्चलकलैव भृङ्गी तया दष्टं कृष्णहृदम्बुजं यया ताम् । कटाक्षविद्धकृष्णचित्तामित्यर्थः ॥

राधागूढपरीहासप्रौढिनिर्वचनीकृतम् ।
व्रजेन्द्रसुतनर्मोक्तिरोमाञ्चिततनूलताम् ॥ ८ ॥

**राधेति ।** राधाया या गूढपरीहासेषु प्रौढिस्तया निर्वचनीकृतमलब्धोत्तरमिति दानकेलिकौमुद्यां द्रष्टव्यमेतत् । व्रजेन्द्रेति स्फुटार्थम् ॥

दिव्यसद्गुणमाणिक्यश्रेणिरोहणपर्वतम् ।
उमादिरमणीव्यूहस्पृहणीयगुणोत्कराम् ॥ ९ ॥

**दिव्येति ।** दिव्या प्राकृतगन्धशून्या या सद्गुणमाणिक्यश्रेणिस्तस्यारोहणपर्वतम् । रोहणनामा रत्नमयो गिरिरस्ति । मेघे गर्जति यत्र रत्नानि वर्धन्ते । एवमत्र भक्ते स्तुवति

गुणा वर्धन्त इति भावः । 'इमे चान्ये च भगवन्नित्या यत्र महागुणाः', 'अनन्तकल्याणगुणात्मकोऽसौ' इत्यादिस्मृतिभ्यः । उमा शिवपत्नी तदादीनां रमणीनां व्यूहैः स्पृहणीयो वाञ्छनीयो गुणोत्करो यस्यास्ताम् । 'दुर्गाराध्या रमाराध्या' इति 'सरस्वतीशा दुर्गेशा' इति, 'अनन्तगुणसंपन्ना' इति च नारदीये तन्नामस्तोत्रात् ॥

त्वां च वृन्दावनाधीश त्वां च वृन्दावनेश्वरि ।
काकुभिर्वन्दमानोऽयं मन्दः प्रार्थयते जनः ॥ १० ॥

**त्वां चेति** । हे वृन्दावनाधीश कृष्ण, हे वृन्दावनेश्वरि राधे, अयं मन्दोऽज्ञो जनस्त्वां च त्वां च वन्दमानः प्रणमन् काकुभिः शोकविकृतकण्ठध्वनिभिः प्रार्थयते । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः ॥

दशभिः कुलकम् ।

**दशभिः कुलकमिति** । 'द्वाभ्यां युग्मकमित्युक्तं त्रिभिस्तु स्याद्विशेषकम् । कलापकं चतुर्भिस्तु संदानितकमुच्यते । पञ्चभिः कुलकं तूक्तं पद्यैः पञ्चाधिकैर्बुधैः ॥' इति ॥

एवं दिव्यरूपगुणतुल्यतयेश्वरौ निर्वर्ण्य ताभ्यां प्रार्थ्यमाह—

योग्यता मे न काचिद्वां कृपालाभाय यद्यपि ।
महाकृपालुमौलित्वात्तथापि कुरुतं कृपाम् ॥ ११ ॥

**योग्यतेति** । वां युवयोः कृपालाभाय यद्यपि मे काचिद्योग्यता नास्ति, तथापि कृपां युवां कुरुतम् । तत्र हेतुः—महेति । महाकृपालवो ह्यतिधनिनोऽयोग्येऽपि पङ्गुबधिरादौ कृपयन्तो दृष्टाः किं पुनस्तन्मौलिभूतौ युवामित्यर्थः ॥

ननु त्वं न केवलमयोग्यः, अपि तु सापराधश्च । ततस्त्वयि कथमावयोः कृपा स्यात्तत्राह—

अयोग्येऽप्यपराधेऽपि दृश्यन्ते कृपयाकुलाः ।
महाकृपालवो हन्त लोके लोकेशवन्दितौ ॥ १२ ॥

**अयोग्य इति** । अयोग्येऽपि सापराधेऽपि जने महाकृपालवो लोकेशा भूपाः कृपयाकुला लोके दृश्यन्ते । हे लोकेशवन्दितौ युवामिति भावः ॥

ननु भक्त्यैवावयोः प्रसादो विश्रुतः, त्वयि भक्तिशून्ये स कथमिति चेत्तत्राह—

भक्तेर्वां करुणाहेतोर्लेशाभासोऽपि नास्ति मे ।
महालीलेश्वरतया तदप्यत्र प्रसीदतम् ॥ १३ ॥

**भक्तेरिति** । वां युवयोः करुणाहेतोर्भक्तेर्यो लेशः कणस्तस्याभासः प्रतिबिम्बोऽपि मे नास्तीति सत्यम्, तथापि युवामत्र मयि प्रसीदतम् । तत्र हेतुः—महालीलेति । महालीलाकर्तृत्वादित्यर्थः । सुहृद्युदासीने च पर्जन्यो वर्षन् दृष्ट इति भावः ॥

ननु धनिका नृपाश्चाज्ञा दण्ड्येऽपि दुष्टे सागसि प्रसीदन्ति, नैवं विज्ञा देवाः कुर्युरिति चेत्तत्राह—

जने दुष्टेऽप्यसक्तेऽपि प्रसीदन्तो विलोकिताः।
महालीला महेशाश्च हा नाथौ बहवो भुवि ॥ १४ ॥

**जने दुष्ट इति**। जने दुष्टेऽपीति स्फुटार्थम्। महालीला महेशाश्चेति। यथा वैजनाम्नि किराते नित्यं गण्डूषाम्बुनि क्षेपिणि प्रसीदन् शिवस्तस्मै महान्तं वरं ददौ तन्नाम्ना ख्यातिमवाप। यथा स्तेयाय शिवालयं प्रविष्टेऽर्थदर्शनायोत्तेजितदीपस्तेन प्रसीदन् शिवस्तस्मै कुबेरत्वान्तं वरं ददौ। यथा चासुरेषु प्रसीदन्ती शिवा कोपाग्निना तान् दग्ध्वा शराग्निना दहन्ती तेभ्यः स्वर्गं दत्तवतीति भुवि देवा महालीला दृष्टाः। किमुत देवदेवौ युवाम् ॥

ननु देवास्तेऽनुग्रहं चाशु कुर्वन्त्यप्रेक्ष्यकारिणः। आवां तु किंचिद्भक्तिमपेक्ष्यैवानुगृह्णाव एव, न तु कदाचिदपि गृह्णाव इत्यावयोः स्वभावः। तव तु भक्तिलेशोऽपि नास्तीति चेत्तत्र स्वापराधनिवेदनपूर्वकं स्वभक्तिं वदन् प्रसादं याचते द्वाभ्याम्—

अधमोऽप्युत्तमं मत्वा स्वमज्ञोऽपि मनीषिणम्।
शिष्टं दुष्टोऽप्ययं जन्तुर्मन्तुं व्यधित यद्यपि ॥ १५ ॥

**अधमोऽपीति**। अयं जन्तुः प्राणी अधमोऽपि स्वमात्मानमुत्तमं मत्वा, अज्ञोऽपि स्वं मनीषिणं विज्ञं मत्वा, दुष्टोऽपि स्वं शिष्टं मत्वा, यद्यपि मन्तुमपराधं व्यधित कृतवान्। सत्सभायामधमत्वादिधर्मणः स्वस्योत्तमत्वादिप्रकाशनं महानपराध इत्यर्थः ॥

तथाप्यस्मिन्कदाचिद्वामधीशौ नामजल्पिनि।
अवद्यवृन्दनिस्तारिनामभासौ प्रसीदतम् ॥ १६ ॥

**तथेति**। तथाप्यस्मिन् जन्तौ वां प्रसीदतम्। हे अधीशौ। किंभूतेऽस्मिन्। कदाचिद्वां युवयोर्नामजल्पिनि। वां किंभूतौ। अवद्यानामधमत्वादिदोषदुष्टानां वृन्दं निस्तारयति तथाभूतो नामभासोऽपि ययोस्तौ। 'कोटिमुक्तिसुखा सौम्या' इति, 'सर्वदुःखप्रशमनी' इति च नारदीये राधानामस्तोत्रात्, 'गोविन्देति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितैः। दहते सर्वपापानि युगान्ताग्निरिवोत्थितः॥' इत्यादि स्मृतिभ्यश्च। वां चावद्येत्यादिलक्षणाविल्यस्ति संगतिरिति भावः।

ननु तवापराधोऽस्ति, तस्य कः प्रतीकारस्तत्राह—

यदक्षम्यं नु युवयोः सकृद्भक्तिलवादपि।
तदागः कापि नास्त्येव कृत्वाशां प्रार्थये ततः ॥ १७ ॥

**यदिति**। युवयोः सकृद्भक्तिलवादपि यदागोमन्तुरक्षम्यं तत्कापि नास्ति। तत आशां कृत्वाहं प्रार्थये याचे ॥

ननु साधनसंपत्तिहीनस्त्वं कथमावां दुरालोकौ लिप्ससि भूस्थ इव चन्द्रतारके, इति चेत्तत्राह—

हन्त क्लीबोऽपि जीवोऽयं नीतः कष्टेन धृष्टताम् ।
मुहुः प्रार्थयते नाथौ प्रसादः कोऽप्युदञ्चतु ॥ १८ ॥

**हन्तेति** । हन्तेति विषादे । 'हन्त हर्षे विषादे च' इति विश्वः । अयं जीवः प्राणी क्लीबोऽपि साधनबलशून्योऽपि कष्टेन संसृतिदुःखगहनेन धृष्टतां नीतः सन् मुहुर्युवां प्रार्थयते मत्कष्टमपनयतमिति याचते । हे नाथौ स्वामिनौ । 'क्लीबोऽपौरुषषण्ढयोः' इति, 'कष्टं गहनकृच्छ्रयोः' इति च हैमः । कष्टनाशश्च प्रसादं विना न भवेत्, तस्माद्युवयोः कोऽपि प्रसादोऽस्मिन् जीवे उदञ्चतु भवतु ॥

अतिदैन्यमालम्ब्याह—

एष पापी रुदन्नुच्चैरादाय रदनैस्तृणम् ।
हा नाथौ नाथति प्राणी सीदत्यत्र प्रसीदतम् ॥ १९ ॥

**एष इति** । एष पापी प्राणी उच्चै रुदन् रदनैस्तृणमादाय नाथौ युवां नाथति । सीदति दुःखितेऽत्र प्राणिनि युवां प्रसीदतम् ॥

हाहारावमसौ कुर्वन्दुर्भगो भिक्षते जनः ।
एतां मे शृणुतं काकुं काकुं शृणुतमीश्वरौ ॥ २० ॥

**हाहेति** । असौ दुर्भगो जनो हाहारावं खेदबोधकं नादं कुर्वन् युवां भिक्षते याचते । 'हाहा खेदे' इति विश्वः । किं याचते तत्राह—एतामिति । काकौ श्रुतायां कृपा भाविनीति भावः । कष्टहेतुकेन संभ्रमेण प्रवृत्तेः शृणुतं शृणुतमिति द्विरुक्तिः । एवमग्रेऽपि । हे ईश्वरौ ॥

याचे फूत्कृत्य फूत्कृत्य हाहा काकुभिराकुलः ।
प्रसीदतमयोग्येऽपि जनेऽस्मिन्करुणार्णवौ ॥ २१ ॥

**याच इति** । आकुलो दुःखैर्व्याप्तोऽहं काकुभिः फूत्कृत्य फूत्कृत्य याचे । स्फुटार्थमन्यत् ॥

क्रोशत्यार्तस्वरैरास्ये न्यस्याङ्गुष्ठमसौ जनः ।
कुरुतं कुरुतं नाथौ करुणाकणिकामपि ॥ २२ ॥

**क्रोशतीति** । असौ जन आस्येऽङ्गुष्ठं न्यस्यार्पयित्वार्तस्वरैः क्रोशति । अन्यद्विस्फुटार्थम् ॥

वाचेह दीनया याचे साक्रन्दमतिमन्दधीः ।
किरतं करुणस्वान्तौ करुणोर्मिच्छटामपि ॥ २३ ॥

**वाचेहेति** । अतिमन्दधीरहं साक्रन्दं सरोदनं यथा स्यात्तथा दीनया वाचा युवां याचे । करुणोर्मिच्छटामपि मयि किरतं विक्षिपतम् । अर्पयतमिति यावत् । हे करुणस्वान्तौ सदयचित्तौ ॥

एवमीशाभ्यां सह स्वस्य संबन्धं न्यायत आपाद्य स्वाभीष्टां प्रेमसेवां याचते त्रिभिः। तत्रादौ प्रेमाणं याचते—मधुरा इत्येकेन।

मधुराः सन्ति यावन्तो भावाः सर्वत्र चेतसः।
तेभ्योऽपि मधुरं प्रेम प्रसादीकुरुतं निजम्॥ २४॥

**मधुरा इति।** प्रेम्णा खलु सेवकाय सेवा रोचते क्षुधेव भोज्यं भुञ्जानाय। सर्वत्र त्वन्नित्यधामनि यावन्तो भावाः सालोक्यादिलक्षणा दिव्यरसगन्धादिभोग्यलक्षणा वा पदार्थाश्चेतसो मधुराः प्रियाः सन्ति तेभ्योऽपि सर्वेभ्यो निजं भवद्विषयकं प्रेमैव मधुरं चेतसोऽतिप्रियम्। अतस्तदेव प्रसादीकुरुतम्। प्रसन्नौ सन्तौ ददतमित्यर्थः। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु॥' इति मेदिनी॥

ननु प्रसन्नाभ्यामस्मल्लोकसमृद्धीर्गृहाण किमस्मत्प्रेम्णेति चेत्तत्राह—

सेवामेवाद्य वां देवावीहे किंचन नापरम्।
प्रसादाभिमुखौ हन्त भवन्तौ भवतां मयि॥ २५॥

**सेवामेवेति।** हे देवौ राधिकामाधवौ, लब्धयुष्मत्प्रेमाहं वां सेवामेवेहे स्पृहयामि, अपरं किंचन न। सेवाप्रसाददानेऽभिमुखौ मयि भवन्तौ भवताम्। हन्त हर्षे॥

सेवायामत्यादरात्तामेव पुनरपि याचते—

नाथितं परमेवेदमनाथजनवत्सलौ।
स्वं साक्षाद्दास्यमेवास्मिन्प्रसादीकुरुतं जने॥ २६॥

**नाथितमिति।** हे अनाथजनवत्सलौ, यद्यपि युवां सर्वसमृद्धिप्रदाने समुत्सुकौ तथापि मया परं केवलमिदमेव नाथितम्। किं तदित्याह—स्वमिति। स्वकीयं साक्षाद्दास्यमङ्गसेवामेव अस्मिन् जने मयि प्रसादीकुरुतम्। प्रसादं दत्तमित्यर्थः। प्रेमसेवा खलु परमानन्दं युष्मदनुबन्धित्वात्परमः पुमर्थः, स एवात्युदाराभ्यां युवाभ्यां याचितो दातव्य इति॥

साक्षाद्दास्यात्फलविशेषान्स्फुटयिष्यन्नाह—

अञ्जलिं मूर्ध्नि विन्यस्य दीनोऽयं भिक्षते जनः।
अस्य सिद्धिरभीष्टस्य सकृदप्युपपाद्यताम्॥ २७॥

**अञ्जलिमिति।** अस्य जनस्याभीष्टस्य सिद्धिर्युवाभ्यामुपपाद्यताम्॥

अभीष्टमाह—अमल इत्यादिभिः पञ्चदशभिः।

अमलो वां परिमलः कदा परिमिलन्वने।
अनर्घेण प्रमोदेन घ्राणं मे घूर्णयिष्यति॥ २८॥

**अमल इति।** वां युवयोरमलः परिमलो वने परिमिलन्ननर्घेण प्रमोदेन मे घ्राणं कदा घूर्णयिष्यति। 'भवेत्परिमलश्चित्तहारिगन्धविमर्दयोः। रतामर्दसमुन्मीलदङ्गरागादिसौरभे॥' इति विश्वलोचनकारः॥

रञ्जयिष्यति कर्णौ मे हंसगुञ्जितगञ्जनम् ।
मञ्जुलं किं नु युवयोर्मञ्जीरकलसिञ्जितम् ॥ २९ ॥

**रञ्जयिष्यतीति** । युवयोर्मञ्जीरकलसिञ्जितं नूपुरमधुरध्वनिर्मे कर्णौ रञ्जयिष्यति किमिति प्रश्ने । स्फुटमन्यत् ॥

सौभाग्याङ्कुरथाङ्गादिलक्षितानि पदानि वाम् ।
कदा वृन्दावने पश्यन्नुन्मदिष्यत्ययं जनः ॥ ३० ॥

**सौभाग्येति** । वृन्दावने वां पदानि पश्यन्नयं जनः कदोन्मदिष्यति मत्तो भावी । पदानि किंभूतानीत्याह—सौभाग्येति । सौभाग्यचिह्नरूपैश्चक्रादिभिर्लक्षितानि ज्ञातानीत्यर्थः ॥

सर्वसौन्दर्यमर्यादानीराज्यपदनीरजौ ।
किमपूर्वाणि पर्वाणि हा ममाक्ष्णोर्विधास्यथ ॥ ३१ ॥

**सर्वेति** । सर्वेषां सौन्दर्याणां मर्यादाभिर्नीराज्ये निर्मञ्छनीये पदनीरजे चरणपद्मे ययोस्तौ तत्संबोधने हे तथाभूतौ । युवां ममाक्ष्णोरपूर्वाणि पूर्वमननुभूतानि पर्वाण्युत्सवान् विधास्यथ करिष्यथ । किमिति प्रश्ने ॥

सुचिराशाफलाभोगपदाम्भोजविलोकनौ ।
युवां साक्षाज्जनस्यास्य भवेतामिह किं भवे ॥ ३२ ॥

**सुचिरेति** । अस्य जनस्य ममास्मिन् भवे जन्मनि युवां साक्षात्प्रत्यक्षौ किं भवेताम् । 'साक्षात्प्रत्यक्षतुल्ययोः' इति हैमः । युवां किंभूतावित्याह—सुचिराज्जाताया आशायास्तृष्णाया यानि फलानि तेषामाभोगो यस्मात्तादृशं पदाम्भोजानां विलोकनं ययोस्तौ । 'आभोगः परिपूर्णता' इत्यमरः ॥

कदा वृन्दाटवीकुञ्जकन्दरे सुन्दरोदयौ ।
खेलन्तौ वां विलोकिष्ये सुरतौ नातिदूरतः ॥ ३३ ॥

**कदेति** । वृन्दाटव्यां ये कुञ्जा ये च कन्दरास्तेषु खेलन्तौ वां युवां कदा नातिदूरतः संनिधौ स्थित्वाहं विलोकिष्ये । कुञ्जाश्च कन्दराश्चेत्येकवद्भावः । किंभूतौ । सुरतौ दयावन्तौ । 'स्याद्दयालुः कारुणिकः कृपालुः सुरतः समाः' इत्यमरः ॥

गुर्वायत्ततया क्वापि दुर्लभान्योन्यवीक्षणौ ।
मिथः संदेशशीधुभ्यां नन्दयिष्यामि वां कदा ॥ ३४ ॥

**गुर्वायत्ततयेति** । कदा वां मिथः संदेशशीधुभ्यामहं नन्दयिष्यामि । वां किंभूतावित्याह—गुर्विति । हरेरपि कदाचिज्जन्मोत्सवादौ गुर्वायत्तता भवेत् ॥

गवेषयन्तावन्योन्यं कदा वृन्दावनान्तरे ।
संगमय्य युवां लप्स्ये हारिणं पारितोषिकम् ॥ ३५ ॥

**गवेषयन्ताविति**। वृन्दावनान्तरेऽन्योन्यं गवेषयन्तौ वां संगमय्य कदा हारिणं मनोहरं पारितोषिकं परितोषेण देयं हारपदकादिकं लप्स्ये प्राप्स्यामि॥

पणीकृतमिथोहारलुब्धनव्यग्रहस्तयोः।
कलिं द्यूते विलोकिष्ये कदा वां जितकाशिनोः॥ ३६॥

**पणीकृतेति**। द्यूते वां युवयोः कलिमहं कदा विलोकिष्ये। किंभूतयोरित्याह—जितेति। 'जितकाशी जयावहः' इत्यमरः। स्फुटमन्यत्॥

कुञ्जे कुसुमशय्यायां कदा वामर्पिताङ्गयोः।
पादसंवाहनं हन्त जनोऽयं रचयिष्यति॥ ३७॥

**कुञ्ज इति**। अर्पिताङ्गयोः शयितयोः। रचयिष्यति करिष्यति॥

कन्दर्पकलहोद्धट्टत्रुटितानां लतागृहे।
कदा गुम्फाय हाराणां भवन्तौ मां नियोक्ष्यतः॥ ३८॥

**कन्दर्पेति**। कन्दर्पकलहे य उद्धट्टश्चापलम्। 'घट्ट चलने' धातुः। तेन त्रुटितानां छिन्नानां हाराणां गुम्फाय ग्रथनाय भवन्तौ मां कदा नियोक्ष्यत आज्ञापयिष्यतः॥

केलिकल्लोलविस्रस्तान्हन्त वृन्दावनेश्वरौ।
कर्हि बर्हिपतत्रैर्वां मण्डयिष्यामि कुन्तलान्॥ ३९॥

**केलिकल्लोलेति**। हे वृन्दावनेश्वरौ केलिकल्लोलैः क्रीडामहातरङ्गैर्विस्रस्तान् स्खलितान्। वां युवयोः कुन्तलान् बर्हिपतत्रैः शिखिपिञ्छैः कर्हि कदा मण्डयिष्यामि॥

कन्दर्पकेलिपाण्डित्यखण्डिताकल्पयोरहम्।
कदा वामलिकद्वन्द्वं करिष्ये तिलकोज्ज्वलम्॥ ४०॥

**कन्दर्पेति**। वां युवयोरलिकद्वन्द्वं भालयुगलं कदा तिलकोज्ज्वलं करिष्ये। वां किंभूतयोरित्याह—कन्दर्पेति। आकल्पा वेशाः॥

देवोरस्ते वनस्रग्भिर्दृशौ ते देवि कज्जलैः।
अयं जनः कदा कुञ्जमण्डपे मण्डयिष्यति॥ ४१॥

**देवोरस्ते इति**। हे देव, ते उरो वक्षो वनस्रग्भिः। हे देवि, ते दृशौ कज्जलैः कदायं जनो मण्डयिष्यति॥

जाम्बूनदाभताम्बूलीपर्णान्यवदलय्य वाम्।
वदनाम्बुजयोरेष निधास्यति जनः कदा॥ ४२॥

**जाम्बूनदाभेति**। जाम्बूनदाभानि स्वर्णवर्णानि ताम्बूलीपर्णान्यवदलय्य विशिराणि कृत्वा। क्रमुकादियोजनया वीटीर्निर्मायेत्यर्थः। वां वदनाम्बुजयोरेष जनः कदा निधास्यति॥

एवमतिदुर्लभान्यभीष्टानि प्रार्थ्य तेषु स्वायोग्यतां पश्यन्नाह—

कासौ दुष्कृतकर्माहं क्व वामभ्यर्थनेदृशी।
किं वा कं वा न युवयोरुन्मादयति माधुरी ॥ ४३ ॥

**कासाविति**। असौ दुष्कृतकर्माहं क्व। वामीदृशी एतद्विशेषणविशिष्टा पूर्वोक्ताभ्यर्थ···-··· । दुर्घटो द्वयोः संबन्ध इत्यर्थः। तर्हि कथमर्थयसे तत्राह—किं वेति। अथवा युवयोर्माधुरी कं वा जनं नोन्मादयति। अपि तु सर्वमेवेत्यर्थः। तत्र मे को दोष इति भावः॥

माधुरीस्तुत्या सस्मितावालक्ष्याह—

यया वृन्दावने जन्तुरनर्होऽप्येष वास्यते।
तयैव कृपया नाथौ सिद्धिं कुरुतमीप्सितम् ॥ ४४ ॥

**ययेति**। नामजल्पनाज्ञातया यया कृपयानर्होऽप्येष जन्तुर्वृन्दावने वास्यते। हे नाथौ, तयैव ममेप्सितां सिद्धिं युवां कुरुतम् ॥

एतत्स्तोत्रपाठमात्रात् प्रेमसिद्धिर्भवेदित्याह—

कार्पण्यपञ्जिकामेतां सदा वृन्दाटवीनटौ।
गिरैव जल्पतोऽप्यस्य जन्तोः सिध्यतु वाञ्छितम् ॥ ४५ ॥

**कार्पण्येति**। कार्पण्यं दैन्यं पञ्च्यते विस्तीर्यतेऽनया कार्पण्यपञ्जिका। पृषोदरादिः। 'पञ्जिका पदभञ्जिका' इति हैमः। हे वृन्दाटवीनटौ। एतां गिरैव किं पुनर्मनसा च सदा जल्पतोऽपि किं पुनस्तदर्थं विचारयतोऽस्य जन्तोः प्राणिनो वाञ्छितं युष्मत्कारुण्यं सिध्यतु॥

'स्तोत्रे येऽस्मिन्नलंकाराः सन्ति धीपूर्वकानते।
कण्ठे स्थिता गिरां देवी तत्प्रकाशयतूद्यता ॥
कार्पण्यपञ्जिकाभाष्यं विद्याभूषणवर्णितम्।
संपश्यन्तो भविष्यन्ति वैष्णवा द्रुतचेतसः ॥'

इति कार्पण्यपञ्जिकास्तोत्रं व्याख्यातम्।

---

उत्कलिकावल्लरिः।

श्रीवृन्दाटवीनागराभ्यां नमः।

आसीद्यस्मादुत्कलिकावल्लरिरेषा कर्कशचित्तग्रावनितान्तद्रुतिहेतुः।
श्रीराधागोविन्दपदाब्जव्रतदायी स श्रीरूपो भावकभूपो दयतां नः ॥

अलब्धाभीष्टस्याभीष्टोत्कण्ठया विगलितचित्तस्य तल्लाभे स्वायोगत्वस्फूर्त्याभ्युदितदैन्यस्य भक्तस्य संक्रन्दोऽश्रुनिर्झरः पततीति स्तोत्रेणानेन संपाद्य तदिदं स्वस्मिन् वर्तयितुमादौ प्रतिजानीते—

प्रपद्य वृन्दावनमध्यमेकः क्रोशन्नसावुत्कलिकाकुलात्मा।
उद्घाटयामि ज्वलतः कठोरां बाष्पस्य मुद्रां हृदि मुद्रितस्य ॥ १ ॥

**प्रपद्येति** । उत्कलिकाकुलात्मोत्कण्ठाव्याप्तचित्त एकोऽसावहं वृन्दावनमध्यं प्रपद्य क्रोशन्नुच्चैरार्तरावं कुर्वन् हृदि मुद्रितस्य ज्वलतो बाष्पस्य कठोरां पिण्डीभूतां मुद्रामुद्घाटयामि । इयमवस्था खलु भक्तजनस्य पुरुषार्थदात्री । 'कथं विना रोमहर्षं द्रवता चेतसा विना । विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशय ॥' इत्यादिस्मृतिभ्यः । इतः परमनुदृष्टछन्दोलक्षणं ग्रन्थबाहुल्यभयान्न लेख्यम् ॥

तत्रादौ स्वशरणं वृन्दावनमर्थयति—

अये वृन्दारण्य त्वरितमिह ते सेवनपराः
परामापुः के वा न किल परमानन्दपदवीम् ।
अतो नीचैर्याचे स्वयमधिपयोरीक्षणविधे-
र्वरेण्यां मे चेतस्युपदिश दिशं हा कुरु कृपाम् ॥ २ ॥

**अये इति** । अये इति विषादे । 'अये क्रोधविषादयोः' इति हैमः । हे वृन्दारण्य, ते तव सेवनपराः के वा जनाः परमानन्दपदवीं त्वरितं नापुः । अपि तु सर्वे तेऽवापुरेव । अतो हेतोर्नीचैरतिनम्रः सन्नहं त्वां याचे । किं याचसे तत्राह—स्वयं त्वमेव मे चेतसि अधिपयो राधिकामाधवयोरीक्षणविधेर्वरेण्यां दिशमुपदिश । कृपां मयि कुरु ॥

अथ वृन्दारण्याधिष्ठात्रीं वृन्दामर्थयते—

तवारण्ये देवि ध्रुवमिह मुरारिर्विहरते
सदा प्रेयस्येति श्रुतिरपि विरौति स्मृतिरपि ।
इति ज्ञात्वा वृन्दे चरणमभिवन्दे तव कृपां
कुरुष्व क्षिप्रं मे फलतु नितरां तर्षविटपी ॥ ३ ॥

**तवेति** । हे देवि वृन्दे, तवारण्ये मुरारिः प्रेयस्या श्रीराधया सपरिकरया सह सदा विहरते, इति श्रुतिर्विरौति वदति—'राधया माधव' इत्याद्या, 'अथ गोकुलाख्ये माथुरमण्डले वृन्दावनमध्ये' इत्याद्या च । स्मृतिश्च विरौति—'अत्र या गोपकन्याश्च निवसन्ति ममालये । योगिन्यस्ता मया नित्यं मम सेवापरायणाः ॥ द्विभुजः सर्वदा सोऽस्ति न कदाचिच्चतुर्भुजः । गोप्यैकया युतस्तत्र परिक्रीडति नित्यदा ॥' इत्याद्या । एकया सर्वमुख्यया राधयेत्यर्थः । इति ज्ञात्वा निश्चित्य तव चरणमहमभिवन्दे । त्वं कृपां कुरुष्व । त्वत्कृपया मे मम तर्षविटपी तृष्णातरुः फलतु श्रीराधिकाकृष्णावाप्तिफलवान् भवतु ॥

एवं वनाधिपां वृन्दां प्रसाद्य प्रकृते तदनुमतिं प्रार्थयते—

हृदि चिरवसदाशामण्डलालम्बिपादौ
गुणवति तव नाथौ नाथितुं जन्तुरेषः ।
सपदि भवदनुज्ञां याचते देवि वृन्दे
मयि किर करुणार्द्रां दृष्टिमत्र प्रसीद ॥ ४ ॥

**हृदीति** । हे गुणवति कारुण्यगुणशालिनि वृन्दे देवि, तव नाथौ नाथितुमेष जन्तुः सपदि शीघ्रं भवदनुज्ञां याचते । 'द्राङ् मङ्क्षु सपदि द्रुतम्' इत्यमरः । त्वमत्र प्रार्थके मयि करुणार्द्रां दृष्टिं किरार्पय प्रसीद । त्वत्प्रसादेन विना त्वद्वशयोस्तयोः प्रसादो दुर्लभ इत्यर्थः । तव नाथौ कीदृशावित्याह—हृदि चिराद्वसत आशामण्डलस्याभिलाषवृन्दस्यालम्बा आश्रयाः पादा ययोस्तौ । यच्चरणेभ्यो ममाशाः फलिष्यन्तीति भावः ॥

दधतं वपुरंशुकन्दलीं दलदिन्दीवरवृन्दबन्धुराम् ।

कृतकाञ्चनकान्तिवञ्चनैः स्फुरितां चारुमरीचिसंचयैः ॥ ५ ॥

**दधतमिति** । 'दधतम्–' इत्यादीनां दशानां पद्यानाम् 'त्वां च' इति तदन्तिमेन पद्येनान्वयः । तत्र हे बल्लवपुरंदरात्मज, हे गोकुलवरेण्यनन्दिनि, एष जनस्त्वां च त्वां च नमन् किमपि भिक्षत इत्यस्ति । तत्र त्वां च कीदृशम्, त्वां च कीदृशीम्, इत्यपेक्षायां क्रमादेकैकपदकृतं तयोर्विशेषणदानम् । दलन्ति विकसन्ति यानीन्दीवरवृन्दानि तेभ्योऽपि बन्धुरां मनोज्ञां वपुष्यंशुकन्दलीं कान्तिसंहतिं दधतं कृष्णम् । 'कन्दलं तु कलापे स्यादुपरागे नवाङ्कुरे' इति विश्वः । कृतं काञ्चनकान्तीनां वञ्चनं यैस्तथाभूतैश्चारूणां मरीचीनां संचयैर्वृन्दैः स्फुरितां दीप्तां राधाम् ॥

निचितं घनचञ्चलाततेरनुकूलेन दुकूलरोचिषा ।

मृगनाभिरुचः सनाभिना महितां मोहनपट्टवाससा ॥ ६ ॥

**निचितमिति** । घनचञ्चलाततेर्निबिडविद्युच्छ्रेण्या अनुकूलेन सदृशेन दुकूलरोचिषा वसनकान्त्या निचितं व्याप्तं कृष्णम् । मृगनाभिरुचः कस्तूरीकान्तेः सनाभिना सदृशेन मोहनपट्टवाससा महितां राधाम् । 'सनाभिर्ज्ञातिसदृशोः' इति हैमः ॥

माधुरीं प्रकटयन्तमुज्ज्वलां श्रीपतेरपि वरिष्ठसौष्ठवाम् ।

इन्दिरामधुरगोष्ठसुन्दरीवृन्दविस्मयकरप्रभोन्नताम् ॥ ७ ॥

**माधुरीमिति** । श्रीपतेरपि सकाशाद्वरिष्ठं सौष्ठवं प्रशंसा यस्यास्तामुज्ज्वलां माधुरीं प्रकटयन्तं त्वां कृष्णम् । इन्दिरायाः श्रियोऽपि सकाशान्मधुरस्य गोष्ठसुन्दरीवृन्दस्य विस्मयं करोति तथाभूता या प्रभा तयोन्नतां त्वां राधाम् ॥

इतरजनसुदुर्घटोदयस्य स्थिरगुणरत्नचयस्य रोहणाद्रिम् ।

अखिलगुणवतीकदम्बचेतःप्रचुरचमत्कृतिकारिसद्गुणाढ्याम् ॥ ८ ॥

**इतरजनेति** । इतरेषु पार्षदभिन्नेषु जनेष्विन्द्रादिष्वपि दुर्घट उदयो यस्य तथाभूतस्य स्थिरगुणरत्नचयस्य सार्वज्ञसौहार्दकारुण्यादिगुणमणिवृन्दस्य रोहणाद्रिं त्वां कृष्णम् । अखिलानां गुणवतीकदम्बानां स्नेहसौन्दर्याद्याचितस्त्रीवृन्दानां चेतःसु प्रचुरां चमत्कृतिं कुर्वन्ति तच्छीलैः सद्गुणैः स्नेहसौन्दर्यसौहार्दादिभिराढ्यां त्वां राधाम् ॥

निस्तुलव्रजकिशोरमण्डलीमौलिमण्डनहरिन्मणीश्वरम् ।
विश्वविस्फुरितगोकुलोल्लसन्नव्ययौवतवतंसमालिकाम् ॥ ९ ॥

**निस्तुलेति** । निस्तुलानां निरुपमानां व्रजकिशोराणां श्रीदामसुबलादीनां या मण्डली तस्या मौलिमण्डनं हरिन्मणीश्वरं मरकतश्रेष्ठं त्वां कृष्णम् । विश्वस्मिन् विस्फुरितं यद्गोकुलं तत्रोल्लसन्नव्यं यौवतं युवतिवृन्दं श्यामलापालिकादि तस्यावतंसमालिकां त्वां राधाम् ॥

अथ मिथो मानसिकान् गुणान् दर्शयन् विशिनष्टि—

स्वान्तसिन्धुमकरीकृतराधं हृन्निशाकरकुरङ्गितकृष्णाम् ।
प्रेयसीपरिमलोन्मदचित्तं प्रेष्ठसौरभहृतेन्द्रियवर्गाम् ॥ १० ॥

**स्वान्तेति** । स्वान्तसिन्धौ मकरीकृता राधा येन तम् । हृन्निशाकरे चित्तचन्द्रे कुरङ्गितां मृगतां नीतः कृष्णो यया ताम् । इति पदाभ्यामुभयोरन्योन्यमत्यासक्तिर्व्यज्यते । प्रेयस्याः परिमलेनोन्मदं चित्तं यस्य तम् । प्रेष्ठस्य सौरभेण हृत इन्द्रियवर्गो यस्यास्ताम् ॥

प्रेममूर्तिवरकार्तिकदेवीकीर्तिगानमुखरीकृतवंशम् ।
विश्वनन्दनमुकुन्दसमज्ञावृन्दकीर्तनरसज्ञरसज्ञाम् ॥ ११ ॥

**प्रेममूर्तीति** । प्रेममूर्तिषु ललिताद्यासु वरा श्रेष्ठा या कार्तिकदेवी श्रीराधा तस्याः कीर्तिगानाय मुखरीकृतो वंशो येन तम् । विश्वनन्दनं सर्वाह्लादकं यन्मुकुन्दस्य समज्ञावृन्दं कीर्तिकुलं तत्कीर्तनरसं जानाति तथाभूता रसज्ञा जिह्वा यस्यास्ताम् । 'यशः कीर्तिः समज्ञा च' इत्यमरः ॥

नयनकमलमाधुरीनिरुद्धव्रजनवयौवतमौलिहृन्मरालम् ।
व्रजपतिसुतचित्तमीनराजग्रहणपटिष्ठविलोचनान्तजालाम् ॥ १२ ॥

**नयनकमलेति** । नयनकमलमाधुर्या निरुद्धो वशीकृतो व्रजनवयौवतमौलेः श्रीराधाया हृन्मरालश्चित्तहंसो येन तम् । व्रजपतिसुतस्य चित्तमेव मीनराजस्तस्य ग्रहणे पटिष्ठमतिनिपुणं विलोचनान्तजालं यस्यास्ताम् । 'आनायः पुंसि जालं स्यात्' इत्यमरः । अत्र मिथो नेत्रसौन्दर्यासक्तिनिर्भरो व्यङ्ग्यः ॥

गोपेन्द्रमित्रतनयाध्रुवधैर्यसिन्धु-
पानक्रियाकलशसंभववेणुनादम् ।
विद्यामहिष्ठमहतीमहनीयगान-
संमोहिताखिलविमोहनहृत्कुरङ्गाम् ॥ १३ ॥

**गोपेन्द्रेति** । गोपेन्द्रमित्रस्य वृषभानोस्तनया श्रीराधा तस्या ध्रुवो यो धैर्यसिन्धुस्तस्य पानक्रियायां कलशसंभवोऽगस्त्यो वेणुनादो यस्य तम् । विद्यासु महिष्ठायाः श्रेष्ठाया म-

हृत्या वीणाया यन्महनीयमर्चनीयं गानं तेन संमोहितोऽखिलविमोहनस्य कृष्णस्य हृत्कुरङ्गश्चित्तहरिणो यया ताम् । इति सर्वोर्ध्वया गानविद्यया मिथोऽनुरञ्जकता व्यज्यते ॥

क्वाप्यानुषङ्गिकतयोदितराधिकाख्या-
विस्मारिताखिलविलासकलाकलापम् ।
कृष्णेति वर्णयुगलश्रवणानुबन्ध-
प्रादुर्भवज्जडिमडम्बरसंवृताङ्गीम् ॥ १४ ॥

**कापीति** । क्वापि समये आनुषङ्गिकतयोदितयोच्चारितया राधिकाख्यया विस्मारिता अखिलानां विलासकलानां कलापाः समूहा यस्य तम् । कृष्णेत्येतस्य वर्णयुगलस्य यः श्रवणानुबन्धस्तेन प्रादुर्भवन् यो जडिमडम्बरो जाड्यविस्तारस्तेन संवृतानि व्याप्तान्यङ्गानि यस्यास्ताम् । इति नाममाधुर्येण मिथो वश्यता व्यज्यते ॥

त्वां च बल्लवपुरंदरात्मज त्वां च गोकुलवरेण्यनन्दिनि ।
एष मूर्ध्नि रचिताञ्जलिर्नमन्भिक्षते किमपि दुर्भगो जनः ॥ १५ ॥

**त्वां चेति** । बल्लवपुरंदरो गोपराजः श्रीनन्दः । गोकुलवरेण्यः श्रीवृषभानुः ॥

किं भिक्षसे तत्राह—

हन्त सान्द्रकरुणासुधाझरीपूर्णमानसहृदौ प्रसीदतम् ।
दुर्जनेऽत्र दिशतं रतेर्निजप्रेक्षणप्रतिभुवश्छटामपि ॥ १६ ॥

**हन्तेति** । हन्तेति हर्षे । सान्द्राभिः करुणासुधाझरीभिः कृपामृतनिर्झरैः पूर्णौ मानसहृदौ ययोस्तौ तत्संबोधने तथा । अत्र दुर्जने मयि प्रसीदतम् । युवां रतेश्छटामपि दिशतं दत्तम् । रतेः कीदृश्या इत्याह—निजेति । युष्मद्दर्शनलग्नकभावेन गीताया इत्यर्थः । 'प्रतिभूर्लग्नकः स्मृतः' इति हलायुधः ॥

रतिकार्यमाह—

श्यामयोर्नववयःसुषमाभ्यां गौरयोरमलकान्तियशोभ्याम् ।
कापि वामखिलवल्गुवतंसौ माधुरी हृदि सदा स्फुरतान्मे ॥ १७ ॥

**श्यामयोरिति** । हे अखिलवल्गुवतंसौ सर्वजनमनोज्ञशिरोभूषणभूतौ, वां युवयोः कापि माधुरी सुन्दरता मे हृदि स्फुरतात् । वां कीदृशयोरित्याह—नववयःसुषमाभ्यां श्यामयोरिति । नवे स्तुत्ये च ते वयःसुषमे चेति । 'सुषमा परमा शोभा' इत्यमरः । श्यामा च श्यामश्चेति 'पुमान्स्त्रिया' इत्येकशेषः । एवं गौरयोरित्यत्र च । नववयसा श्यामा षोडशवार्षिकी राधा । नवसुषमया श्यामो मरकतमणिप्रख्यः कृष्ण इत्यर्थः । पुनर्वां कीदृशयोरित्याह—अमलकान्तियशोभ्यां गौरयोरिति । गौरी च गौरश्च तयोः । अमलकान्त्या गौरी कनकप्रख्या राधा । अमलयशसा गौरः शुभ्रः कृष्णः । 'गौरः पीतेऽरुणे श्वेते' इति विश्वः ॥

माधुरीमग्नेन त्वया किं कार्यं तत्राह—

सर्वबल्लववरेण्यकुमारौ प्रार्थये बत युवां प्रणिपत्य।
लीलया वितरतं निजदास्यं लीलया वितरतं निजदास्यम् ॥ १८ ॥

**सर्वेति**। सर्वेषां बल्लवानां गोपानां वरेण्यौ वरणीयौ श्रीवृषभानुनन्दराजौ तयोः कुमारी च कुमारश्च तौ तत्संबोधने तथा। स्फुटमन्यत्। तथा च तादृशेन मया युवयोर्दास्यमेव कार्यमिति ॥

अथ प्रसन्नाभ्यां सकाशात्क्रमात्तयोः करुणां याचते—प्रणिपत्येति द्वाभ्याम्।

प्रणिपत्य भवन्तमर्थये पशुपालेन्द्रकुमार काकुभिः।
व्रजयौवतमौलिमालिकाकरुणापात्रमिमं जनं कुरु ॥ १९ ॥

**प्रणिपत्येति**। हे पशुपालेन्द्रकुमार, भवन्तं प्रणिपत्य काकुभिरहमर्थये। किमर्थयसे तत्राह—व्रजेति। गोकुलयुवतिवृन्दशिरःस्रग्भूतायाः श्रीराधाया दयाभाजनमिमं मल्लक्षणं जनं कुर्विति ॥

भवतीमभिवाद्य चाटुभिर्वरमुर्जेश्वरि वर्यमर्थये।
भवदीयतया कृपां यथा मयि कुर्यादधिकां बकान्तकः ॥ २० ॥

**भवतीमिति**। हे उर्जेश्वरि कार्तिकाधिष्ठात्रि राधे, भवतीमभिवाद्य नत्वा चाटुभिर्वाक्यैर्वर्यं श्रेष्ठं वरमर्थये याचे। वरमाह—भवदीयतया त्वदीयभावेन मयि बकान्तकः कृष्णो यथाधिकां कृपां कुर्यादिति ॥

अथ तत्पार्षदवर्गाभ्यां सकाशाद्दयां याचते—

दिशि विदिशि विहारमाचरन्तः सह पशुपालवरेण्यनन्दनाभ्याम्।
प्रणयिजनगणास्तयोः कुरुध्वं मयि करुणां बत काकुमाकलय्य ॥ २१ ॥

**दिशीति**। हे तयोः प्रणयिजनगणाः। राधायाः सख्यः कृष्णस्य सखायश्चेत्यर्थः। मत्काकुमाकलय्य श्रुत्वा मयि करुणां कुरुध्वम्। यूयं कीदृशाः। पशुपालवरेण्यनन्दनाभ्यां सह दिशि विदिशि विहारमाचरन्तः कुर्वाणाः। तयोर्लीलापरिकरकरा इत्यर्थः ॥

सामान्यतोऽभ्यर्थनामग्राहं तद्वर्गावभ्यर्थयते—गिरीति त्रिभिः।

गिरिकुञ्जकुटीरनागरौ ललिते देवि सदा तवाश्रवौ।
इति ते किल नास्ति दुष्करं कृपयाङ्गीकुरु मामतः स्वयम् ॥ २२ ॥

**गिरिकुञ्जेति**। हे देवि ललिते, गिरिकुञ्जकुटीरेषु नागरौ क्रीडाविदग्धौ श्रीराधिकामाधवौ सदा तवाश्रवौ वचनस्थौ भवतः। 'वचनेस्थित आश्रवः' इत्यमरः। इति हेतोस्ते किमपि दुष्करं नास्ति। अतः स्वयं स्वातन्त्र्येण मामङ्गीकुरु ॥

भाजनं वरमिहासि विशाखे गौरनीलवपुषोः प्रणयानाम्।
त्वं निजप्रणयिनोर्मयि तेन प्रापयस्व करुणार्द्रकटाक्षम्॥ २३॥

**भाजनमिति**। हे विशाखे, त्वमिह गोकुले गौरनीलवपुषो राधिकामाधवयोः प्रणयानां वरं श्रेष्ठं भाजनं पात्रमसि। तेन हेतुना निजप्रणयिनोस्तयोः करुणार्द्रकटाक्षं मयि प्रापयस्व॥

सुबल बल्लववर्यकुमारयोर्दयितनर्मसखस्त्वमसि व्रजे।
इति तयोः पुरतो विधुरं जनं क्षणममुं कृपयाद्य निवेदय॥ २४॥

**सुबलेति**। हे सुबल, व्रजेऽस्मिन् बल्लववर्यकुमारयो राधामुकुन्दयोस्त्वं प्रियनर्मसखोऽसि भवसि। इति हेतोस्तयोस्तत्कुमारयोः पुरतोऽग्रेऽमुं मल्लक्षणं जनं विधुरं दुःखितं निवेदय कृपया दयालुभावेन॥

अथ तयोः किंकरीरुद्दिश्याह—

श्रृणुत कृपया हन्त प्राणेशयोः प्रणयोद्धुराः
किमपि यदयं दीनः प्राणी निवेदयति क्षणम्।
प्रवणितमनाः किं युष्माभिः समं तिलमप्यसौ
युगपदनयोः सेवां प्रेम्णा कदापि विधास्यति॥ २५॥

**श्रृणुतेति**। हे प्राणेशयोस्तयोः प्रणयोद्धुराः प्रेमदक्षाः किंकर्यः, कृपया शृणुत यूयम्। किं श्रृणुम इति चेत्तत्राह—अयं दीनः प्राणी यत् किमपि निवेदयति। तच्च किमिति चेत्तत्राह—असौ प्राणी प्रवणितमना विनमितचित्तः सन् युष्माभिः समं तिलमपि युगपदेकस्मिन् कालेऽनयोः प्राणेशयोः सेवां प्रेम्णा कदापि विधास्यतीति॥

अथात्मनो दौष्ठ्यमनुसंदधदाह—

क्व जनोऽयमतीव पामरः क्व दुरापं रतिभाग्भिरप्यदः।
इयमुल्ललयत्यजर्जरा गुरुरुत्तर्षधुरा तथापि माम्॥ २६॥

**क्वेति**। अयमतीव अतिशयेन पामरो जनः क्व। रतिभाग्भिर्जातभावैरपि भक्तैर्दुरापमिदं सेवासौभाग्यं क्व। दुर्घटोऽनेन मे संबन्ध इत्यर्थः। यद्यप्येवं तथापीयमुत्तर्षधुरातितृष्णा मामुल्ललयति चपलयति। कीदृशीयमित्याह—अजर्जरा नवीना। 'जर्जरो वाच्यवज्जीर्णे' इति विश्वः। गुरुर्महतीत्यर्थः॥

स्वस्य योग्यतां ज्ञात्वापि पुनरप्यतितृष्णया प्रार्थयति—

ध्वस्तब्रह्ममरालकूजितभरैरुर्जेश्वरीनूपुर-
क्वाणैरूर्जितवैभवस्तव विभो वंशीप्रसूतः कलः।

लब्धः शस्तसमस्तनादनगरीसाम्राज्यलक्ष्मीं परा-
मारध्यः प्रमदात्कदा श्रवणयोर्द्वन्द्वेन मन्देन मे ॥ २७ ॥

**ध्वस्तेति** । हे विभो भगवन्, वंशीप्रसूतः कलो मधुरध्वनिर्मे श्रवणयोर्द्वन्द्वेन कदाराध्यः स्यात् । स कीदृशः । उर्जेश्वरीनूपुरक्वाणैः श्रीराधामञ्जीरध्वनिभिरूर्जितवैभवः समृद्धः । तत्क्वाणैः कीदृशैः । ध्वस्तोऽधः कृतो ब्रह्ममरालस्य चतुरास्यहंसस्य कूजितभरो यैस्तैः । पुनः स कीदृशः । शस्ता श्लाघ्या या समस्ता नादरूपा नगरी तस्यां या साम्राज्यलक्ष्मीरधिकारसंपत्तां परां लब्धः । राधिकानूपुरझणत्कारैः सह रासे तव वेणुनादं कदा श्रोष्यामीत्यर्थः ॥

स्तम्भं प्रपञ्चयति यः शिखिपिञ्छमौलि-
वेणोरपि प्रवलयन्स्वरभङ्गमुच्चैः ।
नादः कदा क्षणमवाप्स्यति ते महत्या
वृन्दावनेश्वरि स मे श्रवणातिथित्वम् ॥ २८ ॥

**स्तम्भमिति** । हे वृन्दावनेश्वरि, ते तव महत्या वीणायाः स नादो मे श्रवणातिथित्वं कर्णगोचरतां कदावाप्स्यति । स कीदृगित्याह—यः शिखिपिञ्छमौलिवेणोः स्वरभङ्गं प्रवलयन् कुर्वन् स्तम्भं प्रपञ्चयति । यन्नादश्रवणमोहितस्य कृष्णस्य वेणोर्वैस्वर्यं लभते, ततः स्तम्भते चेत्यर्थः ॥

अथोभयोः संभूय गानं श्रोतुमर्थयते—

कस्य संभवति हा तदहर्वा यत्र वां प्रभुवरौ कलगीतिः ।
उन्नमन्मधुरिमोर्मिसमृद्धा दुष्कृतं श्रवणयोर्विधुनोति ॥ २९ ॥

**कस्येति** । हे प्रभुवरौ, कस्य जनस्य तदहः स दिवसः संभवति घटते । वेति वाक्यालंकारे । यत्राह्नि वां युवयोः कलगीतिर्युगपदभ्युदिता श्रवणयोर्दुष्कृतं विधुनोति नाशयति । सा किंभूता । उन्नमता उच्चीभवता मधुरिमोर्मिणा माधुर्यतरङ्गेन समृद्धा ॥

अथोभयोरङ्गसौरभ्यानुभवायाभ्यर्थयते—

परिमलसरणिर्वां गौरनीलाङ्गराज-
न्मृगमदघुसृणानुग्राहिणी नागरेशौ ।
स्वमहिमपरमाणुप्रावृताशेषगन्धा
किमिह मम भवित्री घ्राणभृङ्गोत्सवाय ॥ ३० ॥

**परिमलेति** । हे नागरेशौ, वां युवयोः परिमलसरणिः सौरभ्यपरम्परा मम घ्राणभृङ्गोत्सवाय भवित्री । 'सरणिः श्रेणिवर्त्मनोः' इति विश्वलोचनकारः । कीदृशीत्याह—गौरनी-

लयोरङ्गयोः क्रमाद्राजतीये मृगमदघुसृणे कस्तूरीकुङ्कुमे तयोरनुग्राहिणी विचित्रसौरभ्यदात्रीत्यर्थः । पुनः कीदृशीत्याह—स्वेति स्फुटार्थम् ॥

अतिसांनिध्यभाग्यमिदं मम दुर्घटं दूरादेव वां साक्षात्कारो भवतादित्याह—

**प्रदेशिनीं मुखकुहरे विनिक्षिपञ्जनो मुहुर्वनभुवि फूत्करोत्यसौ ।**
**प्रसीदतं क्षणमधिपौ प्रसीदतं दृशोः पुरः स्फुरतु तडिद्धनच्छविः ॥ ३१ ॥**

**प्रदेशिनीमिति ।** अङ्गुष्ठानन्तराङ्गुली प्रदेशिनी तर्जनी चोच्यते । 'तर्जनी स्यात्प्रदेशिनी' इत्यमरः । तां मुखमध्ये विनिक्षिपन्नर्पयन्नयं जनः फूत्करोति । स्फुटार्थमन्यत् । तडिद्धनयोरिव युवयोः छविः कान्तिः ॥

पादनखरान्दिदृक्षुः प्रार्थयते—

**व्रजमधुरजनव्रजावतंसौ किमपि युवामभियाचते जनोऽयम् ।**
**मम नयनचमत्कृतिं करोतु क्षणमपि पादनखेन्दुकौमुदी वाम् ॥ ३२ ॥**

**व्रजेति ।** स्फुटार्थम् ॥

अकस्मान्मिलितौ तौ स्वामिनौ दिदृक्षुः प्रार्थयते—

**अतर्कितसमीक्षणोल्लसितया मुदाश्लिष्यतो-**
**निकुञ्जभवनाङ्गणे स्फुरितगौरनीलाङ्गयोः ।**
**रुचः प्रचुरयन्तु वां पुरटयूथिकामञ्जरी-**
**विराजदलिरम्ययोर्मम चमत्कृतिं चक्षुषः ॥ ३३ ॥**

**अतर्कितेति ।** वां युवयोः रुचः प्रभाः मम चक्षुषश्चमत्कृतिं प्रचुरयन्तु प्रचुरां कुर्वन्तु । क्केत्याह—निकुञ्जभवनाङ्गणे कुञ्जमन्दिरचत्वरे इत्यर्थः । वां कीदृशयोः । अतर्कितमाकस्मिकं यन्मिथः समीक्षणं तस्मात्समुल्लसितया प्रवृद्धया मुदा प्रीत्याश्लिष्यतोरालिङ्गतोः । पुनः कीदृशयोः । स्फुरितगौरनीलाङ्गयोः । तावुपमिन्वन्विशिनष्टि—पुरटयूथिकामञ्जरी च तस्यां विराजन्नलिश्च तयोरिव रम्ययोः ॥

स्वायोग्यतामनुभवन्ननुतपति—

**साक्षात्कृतिं बत ययोर्न महत्तमोऽपि**
**कर्तुं मनस्यपि मनाक्प्रभुतामुपैति ।**
**इच्छन्नयं नयनयोः पथि तौ भवन्तौ**
**जन्तुर्विजित्य निजगार भियं ह्रियं च ॥ ३४ ॥**

**साक्षादिति ।** बतेति विस्मये । महत्तमः सर्वसाधनसंपन्नोऽपि साधुवर्यो मनस्यपि ययोर्ह्लादिनीविज्ञानघटनयोः सर्वेश्वरयोर्मनागल्पां साक्षात्कृतिं कर्तुं प्रभुतां नोपैति समर्थो न भवति । तौ भवन्तौ नयनयोः पथि इच्छन् नेत्रगोचरौ चिकीर्षन्नयं प्राकृतकरणकले-

वरोऽतिदुर्वासनो मन्दधीर्मल्लक्षणो जन्तुर्भियं ह्रियं च विजित्य निजगार गिलितवान्। निर्भयो निर्लज्जश्चाहमित्यर्थः॥

ईदृक्प्रार्थने स्वस्यातिमूर्खतामुक्त्वाप्यथ तत्र तन्माधुर्याः कारणतामाह—

अथवा मम किं नु दूषणं बत वृन्दावनचक्रवर्तिनौ।
युवयोर्गुणमाधुरी नवा जनमुन्मादयतीह कं न वा॥ ३५॥

**अथवेति**। गुणमाधुरी दीनोद्धारकतापतितपावनतादीनां गुणानां रुचिरता, नवा नित्यनूतना कं वा जनं नोन्मादयति। रम्ये वस्तुनि रङ्कस्य लोभो वस्तुरम्यत्वहेतुक इति भावः॥

प्रियजनकृतपार्ष्णिग्राहचर्योन्नताभिः
सुगहनघटनाभिर्वक्रिमाडम्बरेण।
प्रणयकलहकेलिक्ष्वेलिभिर्वामधीशौ
किमिह रचयितव्यः कर्णयोर्विस्मयो मे॥ ३६॥

**प्रियजनेति**। हे अधीशौ, वां युवयोः प्रणयकलहकेलिक्ष्वेलिभिर्मे कर्णयोर्विस्मयः किं रचयितव्यः। किमिति प्रश्ने। प्रेमकलहरूपायाः केलिषु क्ष्वेलयः कौतुकानि ताभिरित्यर्थः। कीदृशीभिः। परिजनैः कृता या पार्ष्णिग्राहचर्या साहाय्यक्रिया तयोन्नताभिः प्रवृद्धाभिः। पुनः कीदृशीभिः। वक्रिमाडम्बरेण सुगहनघटनाभिर्नैबिड्यं नीताभिरित्यर्थः॥

निभृतमपहृतायामेतया वंशिकायां
दिशि दिशि दृशमुक्तां प्रेर्य संपृच्छमानः।
स्मितशबलमुखीभिर्विप्रलब्धः सखीभि-
स्त्वमघहर कदा मे तुष्टिमक्ष्णोर्विधत्से॥ ३७॥

**निभृतमिति**। हे अघहर, त्वं मेऽक्ष्णोस्तुष्टिं कदा विधत्से करिष्यसि। कीदृशः सन्नित्यपेक्ष्याह—निभृतं यथा स्यात्तथा। एतया श्रीराधया वंशिकायामपहृतायां सत्यां दिशि दिशि प्रतिदिशमुक्तां दृशं प्रेर्य कया मे वंशी हृतेति संपृच्छमानः परिपृच्छन् तत्र यया वंशी न हृता तां सूचयतीभिः सखीभिर्विप्रलब्धो वञ्चितः। कीदृशीभिः। स्मितेन शबलानि चित्राणि मुखानि यासां ताभिः। धूर्तराजोऽयमाभिः सम्यग्वञ्चित इति त्वद्दर्शनान्मदक्ष्णोः परितोषः॥

क्षतमधरदलस्य स्वस्य कृत्वा त्वदाली-
कृतमिति ललितायां देवि कृष्णे ब्रुवाणे।
स्मितशबलदृगन्ता किंचिदुत्तम्भितभ्रू-
र्मम मुदमुपधास्यत्यास्यलक्ष्मीः कदा ते॥ ३८॥

**क्षतमिति** । हे देवि श्रीराधे, स्वस्याधरदलस्य स्वदशनाभ्यां क्षतं कृत्वा ललितायां त्वदाल्यां राधयैतत्क्षतं कृतमिति कृष्णे ब्रुवाणे कथयति सति ते तवास्यलक्ष्मीर्मुखशोभा मम मुदं कदोप समीपे आधास्यति । मयि तामर्पयिष्यतीत्यर्थः । कीदृशी सा । स्मितेन शबलश्चित्रो दृगन्तो यस्याः सेति कृष्णे महाविदूषकत्वं किंचिदुत्तम्भितभ्रूरिति मृषाभाषिणि तस्मिन् कोपश्च व्यज्यते ॥

दैन्यमालम्ब्य पुनराह—

कथमिदमपि वाञ्छितुं निकृष्टः स्फुटमयमर्हति जन्तुरुत्तमार्हम् ।
गुरुलघुगणनोक्तितार्तनाथौ जयतितरामथवा कृपाद्युतिर्वाम् ॥ ३९ ॥

**कथमिति** । हे आर्तनाथौ, अयं निकृष्टो जन्तुरिदमीदृशं सेवाभाग्यमपि कथं वाञ्छितुमर्हति । कीदृशमिदम् । उत्तमार्हं परमभागवतानां वाञ्छनीयम् । अथवा वां युवयोः कृपाद्युतिर्जयतितरां निखिलोत्कृष्टा विराजते । कीदृशी सेत्याह—गुर्विति । उत्कृष्टापकृष्टगणनारहितेत्यर्थः । यद्यप्ययमधमस्तथापि तव कृपयैवेवं(?) प्रवर्त्येत इत्यर्थः ॥

तत्कृपाफलं प्रार्थयति—

वृत्ते दैवाद्व्रजपतिसुहृन्नन्दिनीविप्रलम्भे
　संरम्भेणोल्लसितललिताशङ्कयोद्भ्रान्तनेत्रः ।
त्वं शारीभिः समयपटुभिर्द्रागुपालभ्यमानः
　कामं दामोदर मम कदा मोदमक्ष्णोर्विधाता ॥ ४० ॥

**वृत्ते इति** । हे दामोदर, त्वं कदा ममाक्ष्णोर्मोदं विधाता कर्ता । कामं यथेच्छम् । कीदृशः सन् । व्रजपतिसुहृन्नन्दिन्याः श्रीराधिकाया विप्रलम्भे दैवाद्वृत्ते सति । राधायां विप्रलब्धायां सत्यामित्यर्थः । उज्ज्वलाख्यः कृष्णसखः स्मरो देवस्तस्येदं कर्म दैवं तस्मात् । तदिच्छात इत्यर्थः । लीलाविस्तारार्था खलु तदिच्छैवं प्रवर्तते । संरम्भेण क्रोधेनोल्लसिता जाज्वल्यमाना या ललिता तस्याः शङ्कया भीत्या उद्भ्रान्ते त्रस्ते नेत्रे यस्य सः । समयपटुभिरवसरज्ञाभिः शारीभिर्गौराटीभिर्द्राक् शीघ्रमुपालभ्यमानः । परमसुन्दररूपस्य ते राजपुत्रस्यापि धीसौन्दर्यं नास्ति यदेतामनुपमरूपगुणां त्वदेकतानां राजपुत्रीं वञ्चयसीति निर्भर्त्स्यमानः सन्नित्यर्थः । मोदविधानाभ्यर्थनयैवं व्यज्यते । रूक्षास्ताः सर्वाः केनचिच्चातुर्येण त्वय्यनुकूलां विधाय मोदिष्ये यदि मामङ्गीकरोषीति ॥

रासारम्भे विलसति परित्यज्य गोष्ठाम्बुजाक्षी-
　वृन्दं वृन्दावनभुवि रहः केशवेनोपनीय ।
त्वां स्वाधीनप्रियतमपदप्रापणेनार्चिताङ्गीं
　दूरे दृष्ट्वा हृदि किमचिरादर्पयिष्यामि दर्पम् ॥ ४१ ॥

**रासारम्भे इति** । हे राधे, वृन्दावनभुवि त्वां दूराद्दृष्ट्वाचिराच्छीघ्रं हृदि किं दर्प-

मर्पयिष्यामि । त्वां कीदृशीम् । विलसति रासारम्भे गोष्ठाम्बुजाक्षीवृन्दं परित्यज्य सर्वाः कान्ता विहाय रहो निर्जनमुपनीय केशवेन कर्त्रार्चिताङ्गीं कृतसर्वाङ्गकुसुमवेशाम् । केशवेन कीदृशेनेत्याह—स्वेति । स्वाधीनस्य प्रियतमस्य यत्पदं कुसुमालंकारनिर्माणादिरूपो व्यवसायस्तत्प्राप्नोतीति तेन । त्वदाज्ञानुवर्तिनेत्यर्थः ॥

रम्या शोणद्युतिभिरलकैर्यावकेनोर्जदेव्याः
सद्यस्तन्द्रीमुकुलदलसक्लान्तनेत्रा व्रजेश ।
प्रातश्चन्द्रावलिपरिजनैः साचि दृष्टा विवर्णै-
रास्यश्रीस्ते प्रणयति कदा संमदं मे मुदं च ॥ ४२ ॥

**रम्येति** । हे व्रजेश, ते तवास्यश्रीर्मुखशोभा कदा मे संमदमतिदर्पं मुदं हर्षं च प्रणयति करिष्यति । 'दर्पो मदोऽवलेपः' इति हलायुधः । कीदृशी सा । उर्जदेव्याः श्रीराधाया यावकेन पादालक्तकेन प्रसादनप्रणतिलग्नेन शोणद्युतिभिरलकै रम्या । पुनः कीदृशी । सद्यस्तत्क्षणम् । 'सद्यः सपदि तत्क्षणे' इत्यमरः । तन्द्र्या किंचिन्निद्रया मुकुलन्ती मुकुलायमाने अलसे क्लान्ते च नेत्रे यस्यां सा । पुनः कीदृशी । विवर्णैश्चन्द्रावलिपरिजनैः प्रातः साचि वक्रं दृष्टा ॥

व्यात्युक्षीरभसोत्सवेऽधरसुधापानग्लहे प्रस्तुते
जित्वा पातुमथोत्सुकेन हरिणा कण्ठे धृतायाः पुरः ।
ईषच्छोणिममीलिताक्षमनृजुभ्रूवल्लिहेलोन्नतं
प्रेक्षिष्ये तव सस्मितं सरुदितं तद्देवि वक्त्रं कदा ॥ ४३ ॥

**व्यात्युक्षीति** । हे देवि, व्यात्युक्षीरभसोत्सवे तव तद्वक्त्रं कदाहं प्रेक्षिष्ये । यन्त्रादिना मिथोऽम्बुसेको व्यात्युक्षी । 'कर्मव्यतिहारेण च स्त्रियाम्' इति सूत्रात्पदसिद्धिः । तस्यां यो रभसो वेगस्तद्युक्ते उत्सवे इत्यर्थः । तस्मिन्कीदृशे । अधरसुधापानमेव ग्लहः पणो यस्मिंस्तादृशे । तव कीदृश्याः । तदुत्सवे जित्वा विजयमासाद्य पुरः सखीनामग्रे त्वदधरसुधां पातुमुत्सुकेन हरिणा कण्ठे धृताया गृहीतायाः । तद्वक्त्रं कीदृशम् । ईषदल्पः शोणिमा यस्मिंस्तत् मीलिते मुद्रिते अक्षिणी यत्र तत् । अनृजू कुटिले भ्रूवल्ल्यौ यत्र तत् हेलयानादरेणोन्नतम् । अत्र किलकिञ्चितकुट्टमितबिब्बोकास्त्रयो भावा वर्णिताः । एषां लक्षणानि यथा—'गर्वस्मिताभिलाषादेर्भीकोपादेश्च मिश्रणम् । प्रमोदात्प्रेयसः सङ्गे कथ्यते किलकिञ्चितम् ॥ दयिते कुचसंस्पर्शमुखचुम्बादि कुर्वति । हृद्यानन्दो बहिः कोपः स्मृतं कुट्टमितं बुधैः ॥ बिब्बोकः कथ्यते गर्वादिष्टे वस्तुन्यनादरे ॥' इति । एतानि लक्ष्येषु योज्यानि ॥

आलीभिः सममभ्युपेत्य शनकैर्गान्धर्विकायां मुदा
गोष्ठाधीशकुमार हन्त कुसुमश्रेणीं हरन्त्यां तव ।

प्रेक्षिष्ये पुरतः प्रविश्य सहसा गूढस्मितास्यं बला-
दाच्छिन्दानमिहोत्तरीयमुरसस्त्वां भानुमत्याः कदा ॥ ४४ ॥

**आलीभिरिति**। हे गोष्ठाधीशकुमार, आलीभिर्ललितादिभिः समं गान्धर्विकायां शनकैस्तव पुष्पवाटीमुपेत्य कुसुमश्रेणीं हरन्त्यां सत्यां सहसा पुरतः प्रविश्य भानुमत्या गान्धर्विकासहचर्या उरस उत्तरीयं बलादाच्छिन्दानं त्वामहं कदा प्रेक्षिष्ये। 'अतर्किते तु सहसा' इत्यमरः। त्वां कीदृशम्। गूढस्मितास्यम् ॥

उदञ्चति मधूत्सवे सहचरीकुलेनाकुले
कदा त्वमवलोक्यसे व्रजपुरंदरस्यात्मज ।
स्मितोज्ज्वलमदीश्वरीचलदृगञ्चलप्रेरणा-
न्निलीनगुणमञ्जरीवदनमत्र चुम्बन्मया ॥ ४५ ॥

**उदञ्चतीति**। हे व्रजपुरंदरस्यात्मज, सहचरीकुलेन सखीवृन्देनाकुले व्याप्ते मधूत्सवे वसन्तमहसि उदञ्चति सति त्वं मया कदावलोक्यसेऽवलोकितो भविष्यसि। कीदृशस्त्वम्। स्मितोज्ज्वलेन मदीश्वर्योः श्रीराधायाश्चलदृगञ्चलेन प्रेरणात्प्रवर्तनाद्धेतोः। निलीनायाः क्वचिन्निलीय स्थिताया गुणमञ्जर्यास्तदाख्यायाः सख्या वदनं चुम्बन् ॥

एवं विनोददर्शनं संप्रार्थ्य पुनः सेवां प्रार्थयते—

कलिन्दतनयातटीवनविहारतः श्रान्तयोः
स्फुरन्मधुरमाधवीसदनसीम्नि विश्राम्यतोः ।
विमुच्य रचयिष्यते स्वकचवृन्दमत्रामुना
जनेन युवयोः कदा पदसरोजसंमार्जनम् ॥ ४६ ॥

**कलिन्देति**। हे अधीशौ, अमुना मल्लक्षणेन जनेन स्वकचवृन्दमात्मकेशजूटमुन्मुच्य युवयोः पदसरोजसंमार्जनं पादेभ्यो रजसामपनयनं कदा करिष्यते इत्यन्वयः। युवयोः कथंभूतयोरित्यपेक्षायां कलिन्देत्यादिकं विशदार्थम् ॥

परिमिलदुपबर्हं पल्लवश्रेणिभिर्वां
मदनसमरचर्याभारपर्याप्तमत्र ।
मृदुभिरमलपुष्पैः कल्पयिष्यामि तल्पं
भ्रमरयुजि निकुञ्जे हा कदा कुञ्जराजौ ॥ ४७ ॥

**परिमिलदिति**। हे कुञ्जराजौ, अत्र निकुञ्जे मृदुभिः कोमलैरमलपुष्पैर्वां युवयोस्तल्पं शय्यां कदा रचयिष्यामि। निकुञ्जे कीदृशि। भ्रमराणां युक् योगो यत्र तादृशि। तल्पं कीदृशम्। पल्लवश्रेणिभिः परिमिलदुपबर्हम्। उपबर्हं उपधानम्। पुनः कीदृशम्। मदनसमरचर्याया भारे पर्याप्तम्। तद्भारसहनक्षममित्यर्थः ॥

अलिद्युतिभिराहृतैर्मिहिरनन्दिनीनिर्झरा-
त्पुरः पुरटझर्झरीपरिभृतैः पयोभिर्मया ।
निजप्रणयिभिर्जनैः सह विधास्यते वां कदा
विलासशयनस्थयोरिह पदाम्बुजक्षालनम् ॥ ४८ ॥

**अलिद्युतिभिरिति** । निजप्रणयिभिर्जनैः सह मया वां युवयोः पदाम्बुजक्षालनं पयोभिर्जलैः कदा विधास्यते करिष्यते । मुखाम्बुजक्षालनस्याप्युपलक्षणमिदम् । वां कीदृशयोरित्याह—विलासेति । पयोभिः कीदृशैः । अलिद्युतिभिः श्यामकान्तिभिः । 'कालिन्दी कालसलिला' इति स्मरणात् । मिहिरनन्दिनीनिर्झरात्कालिन्दीप्रवाहादाहृतैरानीतैः पुरटझर्झरीषु स्वर्णभृङ्गारकेषु परिभृतैः ॥

लीलातल्पे कलितवपुषोर्व्यावहासीमनल्पां
स्मित्वा स्मित्वा जयकलनया कुर्वतोः कौतुकाय ।
मध्येकुञ्जं किमिह युवयोः कल्पयिष्याम्यधीशौ
संध्यारम्भे लघुलघु पदाम्भोजसंवाहनानि ॥ ४९ ॥

**लीलातल्प इति** । हे अधीशौ, कृतद्यूतकलहयोर्वां युवयोः संध्यारम्भे मिलनोपक्रमे जाते मध्येकुञ्जमहं पदाम्भोजसंवाहनानि किं कल्पयिष्यामि करिष्यामि । कुञ्जस्य मध्ये मध्येकुञ्जमित्यव्ययीभावः । 'पारे मध्ये षष्ठ्या वा' इति सूत्रात् । युवयोः कीदृशयोः । जयकलनया विजयेच्छयानल्पां व्यावहासीं मिथः परिहासं कुर्वतोः । व्यात्युक्षीवत्पदसिद्धिः । स्फुटमन्यत् ॥

प्रमदमदनयुद्धारम्भसंभावुकाभ्यां
प्रमुदितहृदयाभ्यां हन्त वृन्दावनेशौ ।
किमहमिह युवाभ्यां पानलीलोन्मुखाभ्यां
चषकमुपहरिष्ये साधुमाध्वीकपूर्णम् ॥ ५० ॥

**प्रमदेति** । हे वृन्दावनेशौ, पानलीलोन्मुखाभ्यां युवाभ्यामहं साधुमाध्वीकपूर्णं चषकमुपहरिष्ये दास्यामि । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । प्रकृष्टो मदो यत्र तस्य मदनयुद्धस्यारम्भे संभावुकाभ्यामतिकुशलाभ्याम् ॥

कदाहं सेविष्ये व्रततिचमरीचामरमरु-
द्विनोदेन क्रीडाकुसुमशयने न्यस्तवपुषौ ।
दरोन्मीलन्नेत्रौ श्रमजलकणक्लिद्यदलकौ
ब्रुवाणावन्योन्यं व्रजनवयुवानाविह युवाम् ॥ ५१ ॥

**कदेति** । हे व्रजनवयुवानौ, व्रततिचमरीचामरमरुद्विनोदेन युवामहं कदा सेविष्ये । व्रततीनां लतानां याश्चमर्यो मञ्जर्यस्ताभिर्निर्मितस्य चामरस्य व्यजनस्य यो मरुत्पवनस्तस्य विनोदेन । चालनेनेत्यर्थः । स्फुटार्थमन्यत् ॥

च्युतशिखरशिखण्डां किंचिदुत्स्रंसमानां
विलुठदमलपुष्पश्रेणिमुन्मुच्य चूडाम् ।
दनुजदमन देव्याः शिक्षया ते कदाहं
कमलकलितकोटिं कल्पयिष्यामि वेणीम् ॥ ९२ ॥

**च्युतशिखरेति** । हे दनुजदमन, देव्याः श्रीराधायाः शिक्षयोपदेशेन ते चूडामुन्मुच्य कदाहं वेणीं कल्पयिष्यामि रचयिष्यामि । चूडां कीदृशीम् । च्युतशिखरादग्राच्छिखण्डश्चन्द्रको यस्यास्ताम् । किंचिदल्पं उत्स्रंसमानां श्रमबन्धाम् । अतएव विलुठत्यधःपतन्ती अमलपुष्पश्रेणिर्यस्यास्ताम् । वेणीं कीदृशीम् । कमलेन पद्मेन कलिता युक्ता कोटिरग्रं यस्यास्ताम् । 'स्यात्कोटिरस्त्रे चाग्रेऽपि संख्याभेदप्रकर्षयोः' इति विश्वः ॥

कमलमुखि विलासैरंसयोः स्रंसितानां
तुलितशिखिकलापं कुन्तलानां कलापम् ।
तव कबरतयाविर्भाव्य मोदात्कदाहं
विकचविचकिलानां मालयालंकरिष्ये ॥ ९३ ॥

**कमलमुखीति** । हे कमलमुखि श्रीराधिके, कदा तव कुन्तलानां कलापं वृन्दं कबरतयाविर्भाव्य । तस्य बन्धविशेषं निर्मायेत्यर्थः । विकचविचकिलानां विकसितमल्लीनां मालयाहमलंकरिष्ये । 'तद्बन्धविशेषाः स्युर्वेणी धम्मिल्लकुन्तलकबर्यः' इति, 'मल्लिका विचकिलम्' इति च हलायुधः । कुन्तलानां कीदृशानाम् । विलासैर्हेतुभिरंसयोः स्कन्धयोः स्रंसितानां सुवलितानाम् । तेषां कलापं कीदृशम् । तुलिताः स्वसादृश्यं नीताः शिखिकलापाः केकिपुच्छा येन तम् ॥

मिथःस्पर्धाबद्धे बलवति वलत्यक्षकलहे
व्रजेश त्वां जित्वा व्रजयुवतिधम्मिल्लमणिना ।
दृगन्तेन क्षिप्ताः पणमिह कुरङ्गं तव कदा
ग्रहीष्यामो बद्ध्वा कलयति वयं त्वत्प्रियगणे ॥ ९४ ॥

**मिथ इति** । हे व्रजेश, व्रजयुवतिधम्मिल्लमणिनास्मत्स्वामिन्या श्रीराधयाक्षकलहे त्वां जित्वा दृगन्तेन क्षिप्ताः प्रेरिता वयमिहाक्षकलहे पणं तव कुरङ्गं हरिणं वध्वा कदा ग्रहीष्यामस्त्वत्प्रियगणे मधुमङ्गलादिके कलयति पश्यति सति । अक्षकलहे कीदृशे । मिथः स्पर्धयेर्ष्यया बद्धे बलवति प्रबले वलति वर्धमाने ॥

किं भविष्यति शुभः स वासरो यत्र देवि नयनाञ्चलेन माम्।
गर्वितं विहसितुं नियोक्ष्यसे द्यूतसंसदि विजित्य माधवम् ॥ ९५ ॥

**किं भविष्यतीति**। हे देवि श्रीराधे स्वामिनि, स शुभो वासरो दिवसः किं मे भविष्यति। यत्र वासरे द्यूतसंसदि भुजबलेन गर्वितं माधवं विजित्य तं विहसितुं त्वं मां नियोक्ष्यसे प्रवर्तयिष्यसि। क्व गतोऽधुना भवतो गर्वः। द्यूतं खलु धीबलेन साध्यं न तु बाहुबलेन। येनासुरान्निहत्य भगवान् गर्वितोऽस्तीति भवन्तमहं परिहसिष्यामीति ॥

किं जनस्य भवितास्य तद्दिनं यत्र नाथ मुहुरेनमादृतः।
त्वं व्रजेश्वरवयस्यनन्दिनीमानभङ्गविधिमर्थयिष्यसे ॥ ९६ ॥

**किं जनस्येति**। हे नाथ स्वामिन्, अस्य जनस्य तद्दिनं किं भविता भावि। यत्र दिने त्वमादृतः कृतमत्सत्कारः सन् व्रजेश्वरवयस्यस्य वृषभानोर्नन्दिन्याः श्रीराधाया मानिन्या मानभङ्गविधिमेनं मल्लक्षणं जनमर्थयिष्यसे। हे सुन्दरि, सौहार्दादिगुणवति मदेकहिते श्रीराधाप्रतिक्षणाङ्गसेवया त्वयानुरक्ता त्वद्वाचमङ्गीकुर्यादेवेति तद्विधिं भिक्षिष्यस इत्यर्थः ॥

त्वदादेश्यं शारीकथितमहमाकर्ण्य मुदितो
वसामि त्वत्कुण्डोपरि सखि विलम्बस्तव कथम्।
इतीदं श्रीदामस्वसरि मम संदेशकुसुमं
हरेति त्वं दामोदर जनममुं नोत्स्यसि कदा ॥ ९७ ॥

**त्वदादेश्यमिति**। हे दामोदर, इत्येवंविधं मम संदेशकुसुमं श्रीदाम्नः स्वसरि भगिन्यां श्रीराधायां हर प्रापयेति वचसा त्वममुं मल्लक्षणं जनं कदा नोत्स्यसि प्रेरयिष्यसि। किंविधं तदिति चेत्तत्राह—त्वदित्यर्धकं विशदार्थम् ॥

शठोऽयं नावेक्ष्यः पुनरिह मया मानधनया
विशन्तं स्त्रीवेशं सुबलसुहृदं वारय गिरा।
इदं ते साकूतं वचनमवधार्योच्छलितधी-
श्छलाटोपैर्गोपप्रवरमवरोत्स्यामि किमहम् ॥ ९८ ॥

**शठोऽयमिति**। हे राधिके स्वामिनि, ते साकूतं साभिप्रायं वचनमवधार्य निश्चित्योच्छलितधीर्विवृद्धमतिरहं छलाटोपैर्वञ्चनाडम्बरैर्गोपप्रवरं गोपालचूडामणिं कृष्णं किमवरोत्स्यामि। किं तद्वचनं तदाह—शठोऽयमिति। चाटुवचनैर्बहिरनुरञ्जयन्नप्यन्तरप्रियकारित्वात् कृष्णः शठः। ततोऽयं मानधनया मया नावेक्ष्यः। मद्वीक्षायै स्त्रीवेशं सन्तं मन्मन्दिरे विशन्तं सुबलसुहृदं तं छलगिरा त्वं वारय निषेध। सुबलो हि स्त्रीवेशेनास्मद्गुरून् प्रतारयेत्। तत इयं विघातेनापि लब्धा ततो रूक्षवचसा निरस्यमानः स शाठ्यं

विहास्यतीति तदाकूतं दैत्यविमोहनाय भवतः स्त्रीवेशः पुराभून्न चात्र कश्चिद्दैत्योऽस्तीति किं च प्रसूस्त्वरया भवन्तमाकारयतीति । मत्स्वामिनीमभितः स्थिताभिरतिचतुराभिः प्रतिवेशिनीभिः स्त्रीवेशोऽपि भवान् परिचीयेत । तस्मान्नास्त्यत्र प्रवेशावसरः स्वशाठ्यं ध्यायन् स्ववेश्मैव स्वामी प्रतियात्विति छलाटोपाः ॥

अघहर बलीवर्दः प्रेयान्नवस्तव यो व्रजे
वृषभवपुषा दैत्येनासौ बलादभियुज्यते ।
इति किल मृषा गीर्भिश्चन्द्रावलीनिलयस्थितं
वनभुवि कदा नेष्यामि त्वां मुकुन्द मदीश्वरीम् ॥ ५९ ॥

**अघहरेति** । हे मुकुन्द, चन्द्रावलीनिलयस्थितं त्वामहमिति मृषा गीर्भिर्वनभुवि स्थितां मदीश्वरीं कदा नेष्यामि । कास्ता मृषा गिरस्तत्राह—हे अघहर, तव प्रेयान् यो नवो बलीवर्दो वृषभः । असौ वृषभवपुषा दैत्येन बलादभियुज्यते इत्येवंविधाः । तथा चानृतोक्तिवैमुख्यभागप्यहमनृतवाक्येनापि त्वां सुखयामि मां चेत्स्वीकरोषीति ॥

निगिरति जगदुच्चैः सूचिभेद्ये तमिस्रे
भ्रमररुचिनिचोलेनाङ्गमावृत्य दीप्रम् ।
परिहृतमणिकाञ्चीनूपुरायाः कदाहं
तव नवमभिसारं कारयिष्यामि देवि ॥ ६० ॥

**निगिरतीति** । हे देवि, सूचिभेद्येऽतिनिबिडे तमिस्रेऽन्धकारे उच्चैर्जगन्निगिरति सति भ्रमररुचिना निचोलेन प्रच्छदेन दीप्रं विद्युत्प्रभं तवाङ्गमावृत्य नवमभिसारं कदाहं कारयिष्यामि । 'निचोलः प्रच्छदपटः' इत्यमरः । तव किंभूतायाः । सिञ्जितभयात्परिहृतानि त्यक्तानि मणिकाञ्चीनूपुराणि यया तस्याः ॥

आस्ये देव्याः कथमपि मुदा न्यस्तमास्यात्त्वयेश
क्षिप्तं पर्णे प्रणयजनिताद्देवि वाम्यात्त्वयाग्रे ।
आकूतज्ञस्तदतिनिभृतं चर्वितं खर्विताङ्ग-
स्ताम्बूलीयं रसयति जनः फुल्लरोमा कदायम् ॥ ६१ ॥

**आस्ये देव्या इति** । हे नाथौ, तत्ताम्बूलीयं चर्वितं कदायं जनो रसयति आस्वादयिष्यति निभृतं गुप्तं यथा स्यात्तथा । किंभूतो जनः । खर्विताङ्गो ह्रस्वीकृतावयवः । आकूतज्ञः । उभयप्रसादरूपमेतन्मत्कृपापात्रीयं भुङ्क्ष्वामि (?) ति त्वद्भावज्ञ इत्यर्थः । फुल्लरोमा महाप्रसादमास्वाद्य रोमाञ्चः । कीदृशं ताम्बूलीयं चर्वितमित्यपेक्षायामाह—हे ईश व्रजनाथ, आस्यान्निजमुखाद्देव्याः श्रीराधाया आस्ये मुखे त्वया मुदा प्रीत्या कथमप्यत्या-

ग्रहेण न्यस्तमर्पितम् । हे देवि श्रीराधे, त्वया तु नाहं त्वदुच्छिष्टमश्नीति प्रणयजनिताद्वाम्याद्धेतोरास्यात्स्वमुखात्पर्णे क्षिप्तमिति ॥

परस्परमपश्यतोः प्रणयमानिनोर्वां कदा
धृतोत्कलिकयोरपि स्वमभिरक्षतोराग्रहम् ।
द्वयोः स्मितमुदञ्चये नुदसि किं मुकुन्दामुना
दृगन्तनटनेन मामुपरमेत्यलीकोक्तिभिः ॥ ६२ ॥

**परस्परेति** । हे स्वामिनौ, वां युवयोर्द्वयोः कदाहं स्मितमुदञ्चये जनयिष्यामि । द्वयोः कीदृशयोः । प्रणयमानिनोर्निर्हेतुकमानवतोरतो धृतोत्कलिकयोर्दर्शनाय सोत्कण्ठयोरपि परस्परमपश्यतोः । यतः स्वं स्वकीयमाग्रहं रक्षतोः पालयतोः । ननु केनोपायेन नौ स्मितमुदञ्चयिष्यसीति चेत्तत्राह—हे मुकुन्द, अमुना दृगन्तनटनेन किं मां नुदसि प्रेरयसि, मानिनीयं तव प्रार्थनां न स्वीकरोतीति तस्मात्त्वं विरमेत्यलीकोक्तिभिर्मृषावाग्भिः । अयं भावः—नुदसि किमित्यादिवाचमाचम्यादौ विमानो हरिरिति स्वामिन्याः स्मितोदयः । मदन्तिके स्वसखीप्रेषणाद्राधादौ विमानेति स्वामिनश्च स इति ॥

कदाप्यवसरः स मे किमु भविष्यति स्वामिनौ
जनोऽयमनुरागतः पृथुनि यत्र कुञ्जोदरे ।
त्वया सह तवालिके विविधवर्णगन्धद्रवै-
श्चिरं विरचयिष्यति प्रकटपत्रवल्लीश्रियम् ॥ ६३ ॥

**कदेति** । हे स्वामिनौ, सोऽवसरः प्रस्तावः किं मे कदापि भविष्यति । 'भवेदवसरः पुंसि मत्तः प्रस्ताववर्षयोः' इति विश्वलोचनकारः । क्षण इति वा । 'अवसरो वत्सरे क्षणे' इति हैमः । जनो विविधवर्णैर्गन्धद्रवैः करणैस्त्वया सह तवालिके प्रकटपत्रवल्लीश्रियमनुरागतः करिष्यति रचयिष्यति । त्वया सह तवेति द्वौ प्रत्युक्तम् । त्वया स्वामिन्या सह स्वामिनस्तवालिके । त्वया स्वामिना सह स्वामिन्यास्तवालिक इत्यर्थः । विविधवर्णैः पीतनीलरक्तश्वेतैः गन्धद्रवैश्चतुःसमकर्दमैरित्यर्थः ॥

यद्यप्यस्मिन् सेवाभ्यर्थने नाहं योग्यः, तथापि व्रजनिवासलाभात्प्रत्याशा मे भवतीति निवेदयति—

इदं सेवाभाग्यं भवति सुलभं येन युवयो-
श्छटाप्यस्य प्रेम्णः स्फुरति नहि सुप्तावपि मम ।
पदार्थेऽस्मिन्युष्मद्व्रजमनुनिवासेन जनित-
स्तथाप्याशाबन्धः परिवृढवरौ मां द्रढयति ॥ ६४ ॥

**इदमिति** । हे परिवृढवरौ प्रभुश्रेष्ठौ । 'आर्यः परिवृढः स्वामी प्रभुर्नेता च नायकः'

इति हलायुधः । युवयोरिदं सेवाभाग्यं येन सुलभं भवति । अस्य प्रेम्णश्छटापि सुप्तौ स्वप्नेऽपि मम न स्फुरत्युदयति । तर्हि निराशो भवेति चेत्तत्राह—यद्यप्येवं तथापि युष्मद्व्रजमनुनिवासेन हेतुनास्मिन्सेवाभाग्ये पदार्थे वस्तुनि जनित आशाबन्धो मां द्रढयति॥

मम व्रजनिवासोऽपि युष्मत्कृपैकसाध्य इति मयानुमितं ततः सेवाभाग्यमपि तत्साध्यं भावीति व्यञ्जयन्नाह—

प्रपद्य भवदीयतां कलितनिर्मलप्रेमभि-
　　र्महद्भिरपि काम्यते किमपि यत्र तार्णं जनुः ।
कृतात्र कुजनेरपि व्रजवने स्थितिर्मे यया
　　कृपां कृपणगामिनीं सदसि नौमि तामेव वाम् ॥ ६५ ॥

**प्रपद्येति** । भवदीयतां युष्मत्सेवकतां प्रपद्य प्राप्य कलितनिर्मलप्रेमभिर्जातभावैर्महद्भिरुद्धवादिभिरपि तार्णं तृणसंबन्धि किमपि जनुर्जन्म काम्यते वाञ्छयते । 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्' इत्यादि तद्वाक्यात् । तत्र व्रजवने कुजने निन्द्यजन्मनोऽपि मे स्थितिर्यया कृता, तां वां युवयोः कृपामहं सदसि नौमि । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः । कीदृशीम् । कृपणगामिनीं दीनविषयाम् ॥

अथ भक्तिप्रभावावबोधलब्धेन विश्रम्भेण बलमासाद्याह—माधव्येति द्वाभ्याम् ।

माधव्या मधुराङ्ग काननपदप्राप्ताधिराज्यश्रिया
　　वृन्दारण्यविकासिसौरभतते तापिच्छकल्पद्रुम ।
नोत्तापं जगदेव यस्य भजते कीर्तिच्छटाच्छायया
　　चित्रा तस्य तवाङ्घ्रिसंनिधिजुषां किंवा फलाप्तिर्नृणाम् ॥ ६६ ॥

**माधव्येति** । हे माधव्या मधुराङ्ग । आपादशिखमाश्लिष्यन्त्या माधव्या लतया मधुराणि रुचिराण्यङ्गानि स्कन्धशाखादीनि यस्य हे तादृशेत्यर्थः । माधव्या कीदृश्येत्याह—काननपदे वनराजधान्यां प्राप्ताधिराज्यश्रीरधिकारसंपद्यया तयेत्यर्थः । वृन्दारण्ये विकासिनी प्रसृत्वरी सौरभततिर्यस्य हे तादृश । हे तापिच्छकल्पद्रुम तमालसुरतरो । यस्य कीर्तिच्छटाच्छायया जगद्विश्वमपि नोत्तापं भजते, तस्य तवाङ्घ्रिसंनिधिजुषां नृणां फलाप्तिः किं चित्रा । न चित्रेत्यर्थः । 'अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया । कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ॥ तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥' इति तल्लक्षणात् । इह तुल्ये प्रस्तुते तुल्यस्योक्तिः श्लेषच्छायया बोध्या । माधव्यादिपदानां द्व्यर्थकत्वाच्छ्लेषच्छाया ॥

त्वल्लीलामधुकुल्ययोल्लसितया कृष्णाम्बुदस्यामृतैः
　　श्रीवृन्दावनकल्पवल्लि परितः सौरभ्यविस्फारया ।

माधुर्येण समस्तमेव पृथुना ब्रह्माण्डमाप्यायितं
नाश्चर्यं भुवि लब्धपादरजसां पर्वोन्नतिर्वीरुधाम् ॥ ६७ ॥

**त्वल्लीलेति** । हे वृन्दावनकल्पवल्लि, त्वल्लीलामधुकुल्यया कर्त्र्या समस्तमेव ब्रह्माण्डं पृथुना माधुर्येणाप्यायितं तर्पितमतो लब्धपादरजसां वीरुधां लतानां पर्वोन्नतिर्भवेदिति नाश्चर्यम् । लब्धेति त्वत्पादमूलाश्रितानामित्यर्थः । पर्वणो ग्रन्थेरुत्सवस्य चोन्नतिर्महत्त्वम् । तत्कुल्यया कीदृश्या । कृष्णाम्बुदस्य श्यामाभ्रस्यामृतैरम्बुभिरुल्लसितयोच्छलितया । पक्षे हरिबलाहकस्यामृतैर्लीलासुधाभिः । अत्रापि सैवालंकृतिः । अन्ये त्वाहुः—रूपकाङ्गिका प्रथमातिशयोक्तिः पूर्वत्र श्लेषाङ्गिका सा तूत्तरत्रेति । तदिदं विचार्यम् ॥

पूर्वमर्थितं सेवाभाग्यं मेऽतिदुर्लभमेव, किंतु यत्र क्वापि जातस्य भवत्पदाब्जभक्तिरस्त्विति प्रार्थयति—

पशुपालवरेण्यनन्दनौ वरमेतं मुहुरर्थये युवाम् ।
भवतु प्रणयो भवे भवे भवतोरेव पदाम्बुजेषु मे ॥ ६८ ॥

**पशुपालेति** । पशुपालानां वरेण्यौ तेषां राजानौ श्रीमद्वृषभानुनन्दौ तयोर्नन्दिनी च नन्दनश्च तौ तत्संबोधने तथा । भवे भवे जन्मनि जन्मनि । शिष्टं स्पष्टम् ॥

स्तोत्रपाठाद्वाञ्छितलाभं याचते—

उद्गीर्णाभूदुत्कलिकावल्लरिरग्रे वृन्दाटव्यां नित्यविलासा व्रतयोर्वाम् ।
वाङ्मात्रेण व्याहरतोऽप्युल्ललमेतामाकर्ण्येशौ कामितसिद्धिं कुरुतं मे ॥ ६९ ॥

**उदिति** । हे ईशौ, वां युवयोरग्रे उत्कलिकावल्लरिरुत्कण्ठालता उद्गीर्णाभूदुदिता जाता । 'व्रततिर्वल्लरी लता' इति धनंजयः । एतां वाङ्मात्रेण किं पुनर्मनसापि व्याहरतः पठतो मे कामितसिद्धिं युवां कुरुतम् । किं कृत्वेत्याह—आकर्ण्येति । तां श्रुत्वेत्यर्थः । वां कीदृशयोरित्याह—वृन्दाटव्यामित्यादि ॥

स्तोत्रस्य जन्मकालं जन्मस्थानं चाह—

चन्द्राश्वभुवने शाके पौषे गोकुलवासिना ।
इयमुत्कलिकापूर्वा वल्लरी निर्मिता मया ॥ ७० ॥

**चन्द्रेति** । अङ्कानां वामगत्या स्थापनादेकसप्तत्युत्तरचतुर्दशशतीगणिते शालिवाहनस्य (१४७१) शाकेऽस्य स्तोत्रस्य निष्पत्तिः । षडशीत्युत्तरषोडशशतीगणिते तस्य (१६८६) शाके तु टीकाया निष्पत्तिः । शालिवाहनस्य संवत्सरगणनेन विक्रमादित्यस्यापि तद्बोध्यम् । 'विक्रमादित्यराज्यस्य पञ्चविंशोत्तरं शतम् । पातयित्वा भवेच्छाकः स नृपः शालिवाहनः ॥' इति वचनात् ॥

इयमुत्कलिकावल्लरिरुदग्रभावा विमृष्टकाव्यकला ।
विद्याभूषणविवृता शश्वद्भावकविभूतये भूयात् ॥

इत्युत्कलिकावल्लरी व्याख्याता ॥

---

प्रिययोर्विभाते कुञ्जाद्वेश्मन्यागमनं काचिद्वेश्मस्था कांचिदाह द्वाभ्याम् । तत्र प्रियायास्तदाह—

स्रस्तं स्रस्तमुदञ्चयन्त्यधिशिरः श्यामं निचोलाञ्चलं
हस्तेन श्लथदुर्बलेन लुलिताकल्पां वहन्ती तनुम् ।
मुक्तार्धामवरुध्य वेणिमलसस्पन्दे क्षिपन्ती दृशौ
कुञ्जात्पश्य गृहं प्रविश्य निभृतं शेते सखी राधिका ॥ १ ॥

**स्रस्तमिति**। राधिका मम सखी कुञ्जाद्गृहं प्रविश्य निभृतं यथा स्यात्तथा शेते त्वं पश्य । कीदृशी सतीत्याह—स्रस्तं स्रस्तं पुनः पुनः स्खलितं श्यामं निचोलाञ्चलं श्लथदुर्बलेन हस्तेनाधिशिरः शिरसि उदञ्चयन्ती । लुलिताकल्पां विगलितवेशां तनुं वहन्ती । मुक्तार्धामर्धमुक्तां वेणीं कबरीं हस्तेनावरुध्यालसस्पन्दे दृशावितस्ततः क्षिपन्ती ॥

अथ प्रियस्य च तदाह—

म्लानामुत्क्षिप्य मालां त्रुटितमणिसरः कज्जलं बिभ्रदोष्ठे
संकीर्णाङ्गो नखाङ्कैर्दिशि दिशि विकिरन्घूर्णिते नेत्रपद्मे ।
पश्य म्लानाङ्गयष्टिः स्फुटमपरिचितो गोपगोष्ठीभिरग्रे
गोष्ठं गोष्ठेन्द्रसूनुः प्रविशति रजनौ ध्वंसमासादयन्त्याम् ॥ २ ॥

**म्लानामिति**। गोष्ठेन्द्रसूनुः कृष्णः कुञ्जाद्गोष्ठं व्रजं प्रविशति । अग्रे जनोत्थानात्पूर्वम् । हे सखि, त्वं पश्य । कदेत्यपेक्षायामाह—रजनौ रात्र्यां ध्वंसमवसानमासादयन्त्यां गच्छन्त्यां सत्याम् । किं कृत्वा । कान्ताकुचविमर्दनान्म्लानां मालां वैजयन्तीमुत्क्षिप्योर्ध्वप्रदेशे निधाय । कीदृशः । त्रुटितश्छिन्नो मणिसरो रत्नहारो यस्य सः । कान्तापाङ्गविचुम्बनात् कज्जलमोष्ठे बिभ्रत् । कान्तानखाङ्कैः संकीर्णाङ्गो व्याप्तवक्षाः । घूर्णिते निद्राकुले नेत्रपद्मे कोऽपि मा द्राक्षीन्मामिति दिशि दिशि विकिरन् विक्षिपन् । म्लाना विहारश्रमात्कान्ताङ्गकुङ्कुमसंपर्काच्च खिन्ना कर्बुरिता चाङ्गयष्टिर्यस्य सः । इषुवेगेन प्रवेशाज्जाग्रद्भिरपि गोपगोष्ठीभिर्बल्लवसभाभिः स्फुटमपरिचितोऽज्ञातः । न चात्र म्लानपदावृत्तेः कथितपदत्वं स्यादिति वाच्यम् । उद्देश्यप्रतिनिर्देश्यवद्विषयत्वात् । एवमन्यत्र च बोध्यम् ॥

---

श्रीगोविन्दविरुदावलिः ।

ॐ नमः कृष्णाय ।

गौडोदयमुपयातस्तमः समस्तं निहन्ति यो युगपत् ।
ज्योतिश्च योऽतिशीतः पीतस्तमुपास्महे कृताञ्जलयः ॥
सत्काव्यसद्मसु य एव हरिप्रियेषु शब्दार्थरत्ननिकरैस्तनुतेऽतिभव्यैः ।
शिल्पक्रियां बहुविधां कविविश्वकर्मा रूपाभिधो रसिकचित्तहरः स जीयात् ॥

अधीत्य बिरुदावल्या लक्षणं ग्रन्थकृत्कृतम् ।
एतां चेत्पठति प्राज्ञस्तदा बोधोऽस्य पुष्कलः ॥
सामान्यबिरुदावल्या गोविन्दबिरुदावली ।
योऽभ्यधायि विशेषस्तैः स तावदिह लिख्यते ॥

कलिका श्लोकबिरुदैर्युता विविधलक्षणैः ।
कीर्तिप्रतापशौटीर्यसौन्दर्योन्मेषशालिनी ॥
कलिकाद्यन्तसंसर्गिपद्या दोषविवर्जिता ।
शब्दाडम्बरसंबद्धा कर्तव्या बिरुदावली ॥

स्युर्महाकलिकारम्भे श्लोकास्तु युगशः स्मृताः ।
अन्यासां कलिकानां तु भवन्त्येकैकशो हि ते ।
पूर्तौ द्वौ कलिकाभिस्तु बिरुदास्तुल्यसंख्यकाः ॥

कलिकालक्षणम्—

कला नाम भवेत्तालनियता पदसंततिः ।
कलाभिः कलिका प्रोक्ता तद्भेदाः षट् समीरिताः ॥

कलिका चण्डवृत्ताख्या द्विगादिगणवृत्तका ।
तथा त्रिभङ्गीवृत्ताख्या मध्या मिश्रा च केवला ॥ इति ।

चण्डवृत्ते दशधा संयुक्तवर्णाः—

अत्र संयुक्तवर्णानां नियमो दशधा च ते ।
मधुरश्लिष्टविश्लिष्टशिथिलह्रादिनस्त्वमी ॥
भिद्यन्ते ह्रस्वदीर्घाभ्यां ते दर्श्यन्ते स्फुटं यथा ।
ह्रस्वान्मधुरसंयोगाः शङ्कराङ्कुशकिंकराः ॥
तस्मात्तु श्लिष्टसंयुक्ता दर्पकर्परसर्पवत् ।
ततो विश्लिष्टसंयुक्ता भल्लकल्याणचिल्लयः ॥
तथा शिथिलसंयुक्ताः पश्यकश्यपवश्यवत् ।
प्रोक्ता ह्रादियुता मह्यंसह्यंगुह्यंप्रसह्यवत् ॥
गर्ह्यादीन्ह्रादिसंयुक्तभेदान्केचित्समूचिरे ।
दीर्घात्तु गाङ्गं कार्पासं बाल्यवैश्यश्च वाद्यकम् ॥ इति ।

कलापरिमाणमुक्तम्—

अधिकाश्चेच्चतुःषष्टिर्न्यूना द्वादश ताः कलाः ।
एताभ्यो नाधिका कार्या न्यूनाश्चापि न पण्डितैः ॥ इति ।

तत्र तावच्चण्डवृत्तकलिका द्विविधा—नखो विशिखश्चेति भेदात् । तत्र रणादिर्विंशतिप्रभेदस्य नखस्येह वर्धितादयो नव भेदा गृहीताः ।

'वर्धितं वीरभद्रश्च समग्रो च्युत उत्पलम्।
तरङ्गः श्रीगुणरतिस्तथा मातङ्गखेलितम्॥
तिलकश्चेति कलिका नखस्येहोदिता नव॥' इत्युक्तेः।

अथ विशिखः—पद्मकुन्दचम्पकवञ्जुलबकुलभेदात्पञ्चविधः। तेष्वादिमं पद्मं पङ्केरुहसितकञ्जपाण्डूत्पलेन्दीवरारुणाम्भोरुहकह्लारभेदात्षड्विधम्। अन्तिमं बकुलं तु भासुरमङ्गलभेदाद्द्विविधम्। इत्येकादशभेदो विशिखः।

'पङ्केरुहं सितकञ्जं तथा पाण्डूत्पलं परम्।
इन्दीवरारुणाम्भोजे कह्लारं चेति षड्विधम्॥
ईषद्भेदेन कथितं पद्ममेव मनीषिभिः।
चम्पकं वञ्जुलं कुन्दं बकुलं द्विविधं तथा।
इति पञ्चविधस्यापि विशिखस्येशसंख्यकाः॥' इत्युक्तेः।

एवं चण्डवृत्तकलिका विंशतिधा गृहीताः।

अथ पञ्चधा द्विगादिगणवृत्तका कलिका मञ्जरीत्यभिहिता क्रमात्कोरकगुच्छकसंफुल्लकुसुमगन्धाख्या। तस्याश्चात्र कोरक गुच्छकुसुमानि गृहीतानि।

'कोरको गुच्छकुसुमे मञ्जरी त्रिविधात्र तु।' इत्युक्तेः।

त्रिभङ्गी कलिका तु शिखरिण्यादिपूर्वा षोढा। तस्याश्चात्र दण्डकपूर्वा विदग्धपूर्वा च गृहीता।

'दण्डकाख्या विदग्धाख्या त्रिभङ्गीह द्विधा मता।' इत्युक्तेः।

अथ मिश्रकलिका तु—कलिका गद्यसंपृक्ता सप्तविभक्तिका वा, अक्षमयी सर्वलघ्वी चेति द्विभेदा केवला चेत्यष्टौ। तदेवं षड्भ्यो महाकलिकाभ्योऽष्टाविंशतिरिह कलिका गृहीताः। रणादय एकादश नखभेदाः संफुल्लगन्धौ मञ्जरीभेदौ शिखरिण्यादयस्त्रिभङ्गीभेदा मध्यकलिका च त्यक्ताश्चारुताधिक्यविरहात्। श्लोकाः प्रसिद्धाः। बिरुदाश्च द्विचतुःषड्दशकलिकाः। संयुक्तनियमस्तेषु पूर्ववत्। ते च गुणोत्कर्षादिवर्णनमयाः। यदुक्तम्—

'वाशिकः कल्पितश्चेति बिरुदो द्विविधो मतः।
संयुक्तनियमो ह्यत्र वर्णितः पूर्ववद्बुधैः॥
द्विचतुःषड्दशश्चात्र कलास्तु बिरुदे मताः।
दशभ्यो नाधिकाः कार्याः कलास्तु बिरुदे बुधैः॥
कलिकाभ्यस्तु बिरुदे भिधासावेव कीर्तिता।
बिरुदं कवयः प्राहुर्गुणोत्कर्षादिवर्णनम्॥' इति।
'बिरुदः कलिका चान्ते धीरवीरादिशब्दभाक्।'

इत्युपोद्घातः।

---

श्रोतृरुच्युत्पत्तये ग्रन्थस्वरूपं तत्पाठफलं चाह—

इयं मङ्गलरूपा स्याद्गोविन्दबिरुदावली ।
यस्याः पठनमात्रेण श्रीगोविन्दः प्रसीदति ॥ १ ॥

**इयमिति** । स्फुटार्थं पद्यम् । इहैतिह्यमस्ति—दाक्षिणात्येन कविना पठिताया देवबिरुदावल्याः पदार्थलालित्यात्प्रसन्नः श्रीगोविन्दस्तस्मै स्वकण्ठात्स्रजं ददौ । देवबिरुदैरेष सर्वेश्वरः कथं प्रसन्नो भवेदिति संदिहानतया शयितं श्रीरूपं प्रभुरवोचत्—'त्वमेवंलक्षणां मद्बिरुदावलीं कुरु' इति । ततः स एनां रचयांचकारेति ॥

षण्णां कलिकानामादिमायाश्चण्डवृत्तमहाकलिकायाः प्रारम्भे श्लोकयुग्मं वर्णयति—

ब्रह्मा ब्रह्माण्डभाण्डे सरसिजनयन स्रष्टुमाक्रीडनानि
स्थाणुर्भङ्क्तुं च खेलाखुरलितमतिना तानि येन न्ययोजि ।
तादृक्क्रीडाण्डकोटीवृतजलकुडवा यस्य वैकुण्ठकुल्या
कर्तव्या तस्य का ते स्तुतिरिह कृतिभिः प्रोज्झ्य लीलायितानि ॥२॥

**ब्रह्मेति** । हे सरसिजनयन श्रीगोविन्द, येन त्वया ब्रह्माण्डभाण्डे आक्रीडनानि क्रीडास्थानानि भुवनानि स्रष्टुं ब्रह्मा चतुर्मुखो न्ययोजि स्थापितः । तानि भङ्क्तुं संहर्तुं स्थाणुः शिवो न्ययोजि । 'सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः' इति स्मरणात् । कुत एवं करोमीति चेत्तत्र येन कीदृशेति विशिनष्टि—खेलायां खुरलिताभ्यासवती मतिर्यस्य तेन । क्रीडानिरतेनेत्यर्थः । यस्य ते वैकुण्ठकुल्या संव्योमपुरपरिखाम्भोविरजाख्या कुल्या सरित् । तादृक् क्रीडाण्डकोटीभिर्वृतं जलकुडवं यस्यास्तादृशी वर्तते । यज्जलाञ्जलौ ब्रह्माण्डकोटयो वहन्तीत्यर्थः । 'अञ्जलिं कुडवं विद्यात्' इति विश्वः । तस्य ते लीलायितानि चरितानि प्रोज्झ्य त्यक्त्वा कृतिभिः पण्डितैः का स्तुतिर्विभूतिपारमैश्वर्यप्रशंसालक्षणा कर्तव्या । तत्रासमर्थैर्लीला एव गेया इति भावः ॥

लीलामेव वर्णयति—

निबिडतरतुराषाहन्तरीणोष्मसंप-
द्विघटनपटुखेलाडम्बरोर्मिच्छटस्य ।
सगरिमगिरिराजच्छत्रदण्डायितश्री-
र्जगदिदमघशत्रोः सव्यबाहुर्धिनोतु ॥ ३ ॥

**निबिडेति** । अघशत्रोः कृष्णस्य सव्यबाहुर्वामभुज इदं जगद्धिनोतु प्रीणयतु । कीदृशस्य । निबिडतरातिसान्द्रा या तुराषाह इन्द्रस्यान्तरीणा चित्तभवा ऊष्मसंपद्गर्वसंततिस्तस्या विघटने दूरीकरणे पटुर्निपुणा खेलाडम्बरोर्मीणां क्रीडाविस्तारतरङ्गाणां छटा यस्य तस्य । वामबाहुः कीदृक् । सगरिमात्युच्चोऽतिविस्तीर्णश्च यो गिरिराजस्तदेवेन्द्रकृताशनिकर-

काम्बुनिवारकत्वाच्छत्रं तस्य दण्डायितेन दण्डतुल्याचरणेन श्रीः शोभा यस्य सः । तस्य दण्डायितं श्रयतीत्येके ॥

अथ कलिकया लीलां वर्णयन् तस्या नामोद्दिशति—

चण्डवृत्तस्य नखे वर्धितम् ।

चण्डवृत्तस्येति । चण्डवृत्तमहाकलिकाया नखो विशिखश्चेति भेदद्वयम् । तत्तत्र नख- भेदे नखे वर्धितनामा भेदो वर्णनीयः । तस्य लक्षणं च—

'भनजैर्जेन लघुना बद्धैरंशैः समन्वितम् ।
एकाष्टैकादशस्थाने श्लिष्टसंयोगशालिभिः ।
चण्डवृत्तमिदं नाम्ना वर्धितं कवयो विदुः ॥' इति ।
'समासविग्रहं कृत्वा संबुध्यन्ता क्वचिन्मया ।
संक्षेपसिद्ध्यै न कृताः कल्प्यास्तेऽत्र सुबुद्धिभिः ॥'

**अभ्रमुपतिमदमर्दिपदक्रम विभ्रमपरिमललुप्तसुहृच्छ्रम ।**
**दुष्टदनुजबलदर्पविमर्दन तुष्टहृदयसुरपक्षविवर्धन ।**
**दर्पकविलसितसर्गनिरर्गल सर्पतुलितभुज कर्णगकुड्मल ।**
**निर्मलमलयजचर्चितविग्रह नर्मललितकृतसर्पविनिग्रह ।**
**दुष्करकृतिभरलक्षणविस्मितपुष्करभवभयमर्दनसुस्मित ।**
**वत्सलहलधरतर्कितलक्षण वत्सरविरहितवत्ससुहृद्गण ।**
**गर्जितविजयिविशुद्धतरस्वर तर्जितखलगणदुर्जनमत्सर वीर ॥**

**अभ्रमुपतिमदेति** । अभ्रमुपतिरैरावतो हस्ती तस्य मदं गतिगर्वं मर्दयति तादृशः पदक्रमश्चरणसंचारो यस्य । विभ्रमपरिमलाभ्यां कान्तिसौरभाभ्यां लुप्तः सुहृदां श्रमो यस्मात् । दुष्टानां दनुजानां बलदर्पान् विमर्दयतीति तथा । तुष्टहृदयानां सुराणां पक्षं बलं वर्धयतीति तथा । 'पक्षः केशात्परो वृन्दे पक्षो मासार्धपार्श्वयोः । गृहभित्तौ ग्रहे भृत्ये सख्यौ राजगजे बले । साध्ये गरुति देहाङ्गे चुल्लिरन्ध्रविरोधयोः ॥' इति विश्वलोचनकोषः । दर्पके स्मरेण विलसिते सर्गे शृङ्गारक्रीडालक्षणे निरर्गल स्वतन्त्र । वर्तुलत्वप्रलम्बत्वाभ्यां सर्पतुलितौ भुजौ यस्य । हे कर्णगकुड्मल । निर्मलेति पदद्वयं स्फुटार्थम् । कृतः सर्पस्याघासुरस्य विनिग्रहो विनाशो येन । दुष्करेणावमोक्षदानेन कृतिभरेण लक्षणमघमोचन इति नाम यस्य । 'लक्षणं नामचिह्नयोः' इति हैमः । 'दृष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम्' इति श्रीशुकोक्तेरघमोक्षणेन विस्मितस्यैश्वर्यपरीक्षणाय वत्सादिहरणेन सापराधस्य पुष्करभवस्य ब्रह्मणो यत्तत्परीक्षणलक्षणप्रातिकूल्याचरणजातं भयं तन्मर्दनं भञ्जनं सुस्मितं यस्य । प्रभोः स्मितेन प्रसादं विज्ञाय निर्भयोऽसावभूदित्यर्थः । ब्रह्मकृतवत्सादिहरणानन्तरं तत्तद्वपुषा व्रजे वने च भगवति कृतविहारे सति वत्सलेन

हलधरेण तेषु वत्सादिषु तर्कितमनुमितं लक्षणं विभुवितानानन्दत्वरूपं चिह्नं यस्य। वत्सरं व्याप्य विरहिता ब्रह्मणा मायापर्यङ्के शायितत्वाद्वियुक्ता वत्सगणाः सुहृद्गणाश्च यस्य। गर्जितं मेघनिर्घोषं विजेतुं शीलं यस्य तादृशो विशुद्धतरश्च स्वरो यस्य। हे मेघगम्भीरकण्ठस्वने-त्यर्थः। स्फुटमन्यत्॥

कलिकान्ते श्लोकमेकं रचयति—

तव मुरलीध्वनिरमरीकामाम्बुधिवृद्धिशुभ्रांशुः।

श्लोकान्ते बिरुदं रचयति—

अचटुलगोकुलकुलजाधैर्याम्बुधिपानकुम्भजो जयति॥ ४॥

**तवेति**। हे कृष्ण, तव मुरलीध्वनिर्जयति। कीदृशः। अमरीणां देवस्त्रीणां कामाम्बुधिवृद्धौ शुभ्रांशुश्चन्द्रः। 'देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः' इति वेणुगीतेऽभिधानात्। अचटुलानां धीराणां गोकुलकुलजानां व्रजकुलीनयुवतीनां धैर्याम्बुधिपाने कुम्भजोऽगस्त्यः। अम्भोधिवर्धकस्यैवाम्भोधिशोषकत्ववर्णनाद्विरोधाभासः॥

धृतगोवर्धन सुरभीवर्धन पशुपालप्रिय रचितोपक्रिय धीर॥

**धृतेति**। स्फुटार्थम्। रचिता भक्तानामुपक्रिया साहाय्यं येन॥

अथ वीरभद्रकलिकारम्भे श्लोकः—

भुजङ्गरिपुचन्द्रकस्फुरदखण्डचूडाङ्कुरे
निरङ्कुशदृगञ्चलभ्रमिनिबद्धभृङ्गभ्रमे।
पतङ्गदुहितुस्तटीवनकुटीरकेलिप्रिये
परिस्फुरतु मे मुहुस्त्वयि मुकुन्द शुद्धा रतिः॥ ५॥

**भुजङ्गेति**। हे मुकुन्द, त्वयि मे शुद्धा निष्कामा रतिः परिस्फुरतु। त्वयि कीदृशे। भुजङ्गरिपोर्मयूरस्य चन्द्रकेण स्फुरन्नखण्डचूडाङ्कुरः केशपाशाग्रं यस्य तस्मिन्। निरङ्कुशो यो दृगञ्चलभ्रमिस्तेन निबद्धः स्तम्भितो भृङ्गाणां भ्रमश्चलनं येन तस्मिन्। पतङ्गदुहितुर्यमुनायास्तटीवनेषु ये कुटीरास्तेषु याः केलयस्ताः प्रिया यस्य तस्मिन्। 'पतङ्गौ शलभादित्यौ' इत्यनेकार्थध्वनिमञ्जरी॥

वीरभद्रः।

वीरभद्र इति। चण्डवृत्तभेदे नखे वीरभद्राख्यः प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणं च—
'मभनैर्नैन बद्धाभिश्चतुःश्लिष्ट्युतादिभिः।
अष्टमात्राछिदाभिस्तु कलाभिरुपकल्पितम्।
वीरभद्रतया ख्यातं चण्डवृत्तं प्रचक्षते॥' इति।

उद्यद्विद्युद्द्युतिपरिचितपट सर्पत्सर्पस्फुरदुरुभुजतट।
स्वस्थस्वस्थत्रिदशयुवतिनुत रक्षद्दक्षप्रियसुहृदनुसृत।
मुग्धस्निग्धव्रजजनकृतसुख नव्यश्रव्यस्वरविलसितमुख।
हस्तन्यस्तस्फुटसरसिजवर सर्जद्गर्जत्खलवृषमदहर।
युद्धक्रुद्धप्रतिभटलयकर वर्णस्वर्णप्रतिमतिलकधर।
रुष्यत्तुष्यद्युवतिषु कृतरस भक्तव्यक्तप्रणयमनसि वस वीर॥

**उद्यदिति**। उद्यत्या विद्युतो द्युत्या परिचितो ज्ञातः पटो यस्य। हे विद्युत्पीताम्बरेत्यर्थः। सर्पन्तावृजूभूय गच्छन्तौ यौ सर्पौ ताविव स्फुरन्तावुरू श्रेष्ठौ भुजतटौ भुजौ यस्य। स्वस्था नभोवर्तिन्यः स्वस्थाः प्रसन्नाश्च यास्त्रिदशयुवतयो देव्यस्ताभिर्नुत कृतस्तोत्र हे। रक्षन्तो रक्षका दक्षाश्चतुराश्च ये प्रियसुहृदः श्रीदामादयस्तैरनुसृत कृतानुगतिक हे। मुग्धैः सुन्दरैः स्निग्धैश्च व्रजजनैः कृतं प्रकाशितं सुखं लीलारसो यस्य। नव्येन नूतनेन श्रव्येण कर्णसुखदेन च स्वरेण विलसितं मुखं यस्य। हस्तेति स्फुटार्थम्। सर्जन् कोपमुत्पादयन् गर्जंश्च यः खलो वृषस्तस्य मदं हरतीति हे वृषदानवनाशिन्। 'षर्ज सर्जार्जने' इति कविकल्पद्रुमः। युद्धेषु क्रुद्धानां प्रतिभटानां रिपूणां लयं करोतीति तथा। वर्णेन रूपेण स्वर्णप्रतिममतिगौरं यत्तिलकमूर्ध्वं पुण्ड्रं तद्धारयतीति तथा। रुष्यन्तीषु सत्कारेण तुष्यन्तीषु च युवतिषु कृतो रसो रागो येन। 'रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः' इति मेदिनीकारः। भक्तानां व्यक्तप्रणये मनसि त्वं वस रे हे वीर॥

अथ कलिकान्ते श्लोकः—

प्रचुरपरमहंसैः काममाचम्यमाने
प्रणतमकरचक्रैः शश्वदाक्रान्तकुक्षौ।
अघहर जगदण्डाहिण्डिहिन्दोलहासे
स्फुरतु तव गभीरे केलिसिन्धौ रतिर्नः॥ ६॥

**प्रचुरेति**। हे अघहर, तव केलिसिन्धौ रतिर्नोऽस्माकं स्फुरतु। कीदृशि। प्रचुरा ये परमहंसा ज्ञानिभक्ताः, पक्षे श्रेष्ठकादम्बास्तैस्तटस्थैः कामं यथाभीष्टमाचम्यमाने पीयमाने। प्रणताः प्रपन्ना ये दासभक्तास्त एव मकरा मत्स्यविशेषास्तेषां चक्रैर्वृन्दैः शश्वत् सदाक्रान्तः कुक्षिर्मध्यं यस्य तस्मिन्। जगदण्डान्याहिण्डयितुं चालयितुं शीलं यस्य तथाभूतो हिन्दोलतुल्यो हासो यत्र तस्मिन्। हिन्दोलस्तरङ्गः। रूपकमलंकारः॥

श्लोकान्ते बिरुदः—

उद्गीर्णतारुण्य विस्तीर्णकारुण्य
गुञ्जालतापिञ्छपुञ्जाढ्यतापिञ्छ धीर॥

**उद्गीर्णेति**। उद्गीर्णमभ्युदितं तारुण्यं यस्य। विस्तीर्णं कारुण्यं कृपा यस्य। गुञ्जानां लतानां माधवीनां पिञ्छानां च पुञ्जेनाढ्यस्तापिञ्छस्तमालस्तत्संबोधने तथा। 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता'। 'कालस्कन्धस्तमालः स्यात्तापिञ्छः' इत्यमरः॥

समग्रकलिकारम्भे श्लोकः—

उचितः पशुपत्यलंक्रियायै नितरां नन्दितरोहिणीयशोदः।
तव गोकुलकेलिसिन्धुजन्मा जगदुद्दीपयति स्म कीर्तिचन्द्रः॥ ७॥

**उचित इति**। हे कृष्ण, तव कीर्तिचन्द्रो जगदुद्दीपयति प्रकाशयति। कीदृशः। गोकुले या केलिः स एव सिन्धुस्तस्माज्जन्म यस्य सः। पशुपतीनां गोपानामलंक्रियायै उचितः। तान् शोभयन्नित्यर्थः। नन्दिता रोहिणी यशोदा च येन सः। चन्द्रः खलु पशुपते रुद्रस्यालंक्रियायै उचितो भवति नन्दितायै रोहिण्यै तारायै यशो ददातीति श्लेषेण प्रतिपादनात् श्लेषाङ्गकं रूपकमेतत्॥

समग्रः।

समग्र इति। चण्डवृत्तभेदे नखे समग्राख्यः प्रभेदो वर्णनीय इत्यर्थः। तल्लक्षणं च—
'जराभ्यां कल्पितैरंशैस्तुर्यान्मधुरशालिभिः।
श्लिष्टैरन्त्याद्द्वितीयाच्च सर्वान्ते लघुशालिभिः॥
बद्धः समग्रनामायं चण्डो माधववल्लभः॥' इति।

अरिष्टखण्डन स्वभक्तमण्डन प्रयुक्तचन्दन प्रपन्ननन्दन।
प्रसन्नचञ्चल स्फुरद्दृगञ्चल श्रुतिप्रलम्बकभ्रमत्कदम्बक।
प्रकृष्टकन्दरप्रविष्ट सुन्दरस्थविष्ठसिन्धुरप्रसर्पबन्धुर देव॥

**अरिष्टेति**। अरिष्टं वृषासुरं खण्डयतीति तथा। स्वभक्तेत्यादिपदचतुष्टयं विशदार्थम्। श्रुत्योः कर्णयोः प्रलम्बेते इति तथाभूतौ भ्रमन्तौ च कदम्बकौ नीपकोरकौ यस्य। हे प्रकृष्टे कन्दरे प्रविष्ट। सुन्दरस्य स्थविष्ठस्यातिस्थूलस्य सिन्धुरस्य गजस्येव यः प्रसर्पः श्लाघ्या गतिस्तेन बन्धुर मनोज्ञ हे देव॥

कलिकान्ते श्लोकः—

वृन्दारकतरुवीते वृन्दावनमण्डले वीर।
नन्दितबान्धववृन्द सुन्दर वृन्दारिका रमय॥ ८॥

**वृन्देति**। हे सुन्दर हे वीर, वृन्दावनमण्डले वृन्दारिका रम्या व्रजयुवतीस्त्वं रमय। 'वृन्दारकः सुरज्येष्ठे मनोज्ञे पुनरन्यवत्' इति विश्वः। तरवस्तैर्वीते गहने। अत्र शब्दशक्त्या वृन्दावनमण्डलस्य नन्दनवनतुल्यत्वं गोपीनां देवाङ्गनातुल्यत्वं व्यज्यते। तेन कृष्णस्येन्द्रतुल्यत्वं चेति बोध्यम्॥

श्लोकान्ते बिरुदः—

खलिनीडुम्बक मुरलीचुम्बक जननीवन्दकपशुपीनन्दक वीर॥

**खलिनीति** । खलानां समूहः खलिनी तां डुम्बयत्यर्दयतीति तथा । 'डुबि छेदने' धातुः कल्प्यः । जननीं यशोदां वन्दते तत्समाः पशुपीर्गोपीर्नन्दयति तत्संबोधने तथा ॥

अथाच्युतकलिकारम्भे श्लोकः—

अनुदिनमनुरक्तः पद्मिनीचक्रवाले
नवपरिमलमाद्यच्चञ्चरीकानुकर्षी ।
कलितमधुरपद्मः कोऽपि गम्भीरवेदी
जयति मिहिरकन्याकूलवन्याकरीन्द्रः ॥ ९ ॥

**अन्वेति** । कोऽप्यनिर्वाच्यगुणरूपो मिहिरकन्याया यमुनायाः कूलवन्यासु करीन्द्रो गजराजो जयति । कीदृशः । पद्मिनीनां स्त्रीविशेषाणाम्, पक्षे कमलिनीनां चक्रवाले वृन्दे-ऽनुदिनं प्रत्यहमनुरक्तः । तनोर्दानाम्भसश्च नवेन परिमलेन माद्यतो मत्तान् चञ्चरीकान् भृङ्गानाकर्षति तच्छीलः । कलिता मधुरा पद्मा लक्ष्मी रेखा येन, कलितं मधुरं पद्मं च येन सः । गम्भीरवेदी गूढार्थवित्, पक्षेऽवज्ञातशृणिः । 'व्यालो दुष्टो गजो गम्भीरवेद्यवमताङ्कुशः' इति हैमः । समासोक्तिरलंकारः । 'समासोक्तिर्यदि श्लिष्टैः परोक्तिः स्याद्विशेषणैः ।' इति तल्लक्षणात् । ततश्च कृष्णोऽत्र लभ्यते ॥

अच्युतः ।

अच्युत इति । चण्डवृत्तभेदे नखेऽच्युताख्यः प्रभेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—
'नजाभ्यां कल्पितैरंशैः पञ्चमे दीर्घशालिभिः ।
अन्त्याच्छ्लिष्टयुतोपेतैश्चण्डमच्युतमूचिरे ॥' इति ।

जय जय वीर स्मररसधीर द्विजजितहीर प्रतिभटवीर ।
स्फुरदुरुहारप्रियपरिवारच्छुरितविहार स्थिरमणिहार ।
प्रकटितरास स्तबकितहास स्फुटपटवासस्फुरितविलास ।
ध्वनदलिजालस्तुतवनमाल व्रजकुलपाल प्रणयविशाल ।
प्रविलसदंसभ्रमदवतंस क्वणदुरुवंशस्वनहृतहंस ।
प्रशमितदाव प्रणयिषु तावद्विलसितभाव स्तनितविराव ।
स्तनघनरागश्रितपरभाग क्षतहरियाग त्वरितधृताग वीर ॥

**जयेति** । हे वीर विशिष्टवाणीक, हे स्मररसधीर, त्वं जय जय । हे द्विजजितहीर वज्रोज्ज्वलदन्त । हे प्रतिभटेषु वीर विक्रमिन् । स्फुरदुरुहारेषु प्रियपरिवारेषु छुरितो विहारो यस्य । हे स्थिरमणिहार । हे प्रकटितरास । हे स्तबकितहास । स्फुटपटवासेन व्यक्तपिष्टताख्येन गन्धचूर्णेन स्फुरितो विलासः क्रीडा यस्य । 'पिष्टातः पटवासकः' इत्यमरः । ध्वनतालिजालेन भृङ्गवृन्देन स्तुता वनमाला यस्य । व्रजेति पदद्वयं स्फुटार्थम् । प्रविलसतोः

कान्तिमतोरंसयोः स्कन्धयोर्भ्रमन्ताववतंसौ कुण्डले यस्य। क्वणन्त उरुवंशस्य स्वनेन हृता आकृष्य हंसा येन। प्रशमितो दावो मुञ्जारण्याग्निर्येन। हे प्रणयिषु मित्रेषु विलसितभाव। तावत्पदं वाक्यालंकारार्थः। मित्रप्रेम्णा दावाग्निपानमिति भावः। स्तनितं मेघगर्जितं तदिव विरावः स्वरो यस्य। 'स्तनितं गर्जितं मेघनिर्घोषे रशितादि च' इत्यमरः। स्तनघनरागे[ण] बल्लवीसान्द्रकुचकुङ्कुमेन श्रितः परभाग ऊर्ध्वकायो यस्य। क्षतो विध्वस्तो हरेरिन्द्रस्य यागो येन। इन्द्रकृतोपद्रवशान्तये त्वरितं धृतोऽगो गिरिर्येन। हे वीर विशिष्टप्रेरण।

कलिकान्ते श्लोकः—

स्थितिनियतिमतीते धीरताहारिगीते
प्रियजनपरिवीते कुङ्कुमालेपपीते।
कलितनवकुटीरे काञ्च्युदञ्चत्कटीरे
स्फुरतु रसगभीरे गोष्ठवीरे रतिर्नः॥ १०॥

**स्थितीति**। गोष्ठवीरे कृष्णे रतिर्नः स्फुरतु। कीदृशि। स्थितिनियतिं वेदमर्यादां नियममतीतेऽतिक्रम्यवर्तमाने। गोपपत्नीभिः सह विहारात्। ताभिः सह विहाराय कलितनवकुटीरे। काञ्च्या स्वर्णमेखलया उदञ्चत्सुन्दरं कटीरं यस्य तस्मिन्। स्फुटार्थमन्यत्॥

श्लोकान्ते बिरुदः—

अम्बाविनिहितचुम्बामलतरबिम्बाधरमुखलम्बालक जय देव॥

**अम्बेति**। अम्बया मात्रा विनिहितो विरचितश्चुम्बो यस्मिंस्तथाभूतोऽमलतरोऽतिस्वच्छो बिम्बतुल्योऽधरो यत्र तथाभूते मुखे लम्बा अलका यस्य। हे देव, त्वं जय॥

अथोत्पलकलिकारम्भे श्लोकः—

दृष्ट्वा ते पदनखकोटिकान्तिपूरं
पूर्णानामपि शशिनां शतैर्दुरापम्।
निर्विण्णो मुरहर मुक्तरूपदर्पः
कन्दर्पः स्फुटमशरीरतामयासीत्॥ ११॥

**दृष्ट्वेति**। हे मुरहर, कन्दर्पस्ते पदनखकोटीनां चरणनखराग्राणां कान्तिपूरं छविप्रवाहं दृष्ट्वा मुक्तरूपदर्पो निर्विण्णश्च सन्नशरीरतामयासीत् प्राप्तः। स्फुटार्थमन्यत्। तथा च तव रूपं केन कविना कवितायां बद्धुं शक्यमिति भावः॥

उत्पलम्।

उत्पलमिति। चण्डवृत्तभेदे नखे उत्पलाख्यः प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणम्—

'भाभ्यां विनिर्मितैरंशैराद्यात्तु श्लिष्टयोगतः।
चतुर्थाच्च तथा धीरा उत्पलाख्यं प्रचक्षते॥' इति।

नर्तितशर्करचर्कृतकर्करवृद्धमरुद्धरतर्दन निर्भर- ।
दुष्टविमर्दन शिष्टविवर्धन सर्वविलक्षण मित्रकृतक्षण ।
सद्भुजलक्षितपर्वतरक्षितनिष्ठुरगर्जनखिन्नसुहृज्जन ।
रुष्टदिवस्पतिगर्वसमुन्नतितर्जनविभ्रम निर्गलितभ्रम- ।
शक्रकृतस्तव विस्फुरदुत्सव वीर ॥

**नर्तितेति**। नर्तिताः शर्कराः सूक्ष्मकर्परा येन तादृशश्च चर्कृताः कर्करास्तीक्ष्णदृढमृदंशा येन तादृशश्च यो वृद्धो मरुद्धरस्तृणावर्तलक्षणः पवनातिशयोऽतिरूक्षस्तं तर्दयति हिनस्ति विनाशयतीति तथा। 'शर्करा खण्डविकृतावुपलाकर्परांशयोः' इति, 'कर्करो दर्पणे दृढे' इति च विश्वः। चर्कृतेत्यनुकरणशब्दोऽयम्। निर्भरेणातिशयेन दुष्टान् वेदबाह्यान् विमर्दयति, शिष्टान् वैदिकान् विवर्धयति तत्तत्संबोधने तथा। सर्वेभ्यो बद्धमुक्तनित्यमुक्तेभ्यो विरुद्धानि लक्षणानि चिह्नानि यस्य हे सर्वेश्वर। सर्वकारणेत्यर्थः। मित्रैः कृतः क्षण उत्सवो यस्य। सद्भुजेन लक्षितो धृतो यः पर्वतस्तेन रक्षिता निष्ठुराद्गर्जनान्मेघशब्दात्खिन्नाः सुहृज्जना येन। रुष्टस्य दिवस्पतेरिन्द्रस्य गर्वसमुन्नतिं तर्जयति तादृशो विभ्रमो विलासो यस्य। निर्गलितो भ्रमः कृष्णे प्राकृतमनुष्यत्वधीर्यस्य तादृशेन शक्रेण कृतः सर्वेश्वरोऽस्मत्स्वामी त्वमस्मान् भृत्यान् रक्षेत्येवंलक्षणः स्तवो यस्य। ततो विस्फुरन्नुत्सवः शक्रादिकृतो गोविन्दाभिषेको यस्य ॥

कलिकान्ते श्लोकः—

बुद्धीनां परिमोहनः किल ह्रियामुच्चाटनः स्तम्भनो
धर्मोदग्रभियां मनःकरटिनां वश्यत्वनिष्पादनः ।
कालिन्दीकलहंस हन्त वपुषामाकर्षणः सुभ्रुवां
जीयाद्वैणवपञ्चमध्वनिमयो मन्त्राधिराजस्तव ॥ १२ ॥

**बुद्धीनामिति**। हे कालिन्दीकलहंस यमुनाविहारिन्, तव वैणवपञ्चमध्वनिमयो वेणुनादात्मा मन्त्राधिराजो जीयात्। मन्त्रगुणान् दर्शयन् विशिनष्टि—स कीदृक्। सुभ्रुवां बुद्धीनां 'पतिभक्तिरेव परमो धर्मः' इति निश्चयात्मकान्तःकरणवृत्तीनां परिमोहनः। कथमहि तं यास्याम इत्यभ्युदितानां ह्रियामुच्चाटनः। धर्मादुदग्राणामुत्कृष्टानां भियां स्तम्भनः। मनःकरटिनां चित्तहस्तिनां वश्यत्वनिष्पादनः स्वाधीनत्वकरः। तासां वपुषामाकर्षणश्चेति मोहनोच्चाटनवशीकरणस्तम्भनानि मन्त्रकार्याणि क्रमादुक्तानि ॥

अथ श्लोकान्ते बिरुदः—

काननारब्धकाकलीशब्दपाटवाकृष्टगोपिकादृष्ट ।

१. 'क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे' इति हैमः.

चातुरीजुष्टराधिकातुष्ट कामिनीलक्ष्मोदने दक्ष।
भाविनीपक्ष माममुं रक्ष देव॥

**काननेति**। कानने वृन्दाटव्यामारब्धस्य वेणुनोच्चारितस्य काकलीशब्दस्य पाटवेन नैपुण्येनाकृष्टाभिर्गोपिकाभिर्दृष्ट साक्षात्कृत हे। 'काकली तु कले सूक्ष्मे' इत्यमरः। तासु चातुरीजुष्टया राधिकया तुष्ट परितोषित हे। हे भाविनीपक्ष स्त्रीसव। स्फुटमन्यत्॥

अथ तुरङ्गकलिकारम्भे श्लोकः—

अजर्जरपतिव्रताहृदयवज्रभेदोद्धुराः
कठोरवरवर्णिनीनिकरमानवर्मच्छिदः।
अनङ्गधनुरुद्धतप्रचलचिल्लिचापच्युताः
क्रियासुरघविद्विषस्तव मुदं कटाक्षेषवः॥ १३॥

**अजर्जरेति**। अघविद्विषः कृष्णस्य कटाक्षेषवस्तव मुदं क्रियासुः। आशिषि लिङ्। कीदृशास्ते। अनङ्गधनुषोऽप्युद्धतो दृप्तो यः प्रचलश्चिल्लिचापो भ्रूधनुस्तस्माच्युताः। अजर्जराणि नवीनानि पतिव्रतानां यानि हृदयवज्राणि तेषां भेद उद्धुरा सगर्वाः। कठोराणि दृढानि यानि वरवर्णिनीनिकराणामुत्तमयुवतिवृन्दानां मानवर्माणि तानि छिन्दति विदारयन्ती[ति] तथा॥

तुरङ्गः।

तुरङ्ग इति। चण्डवृत्तभेदे नखे तुरङ्गाख्यः प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणं च—

'भनजैर्लैन संबद्धैरादेरष्टमतस्तथा।
स्फुरन्मधुरसंयुक्तैरंशैर्बद्धस्तुरङ्गकः॥' इति।

संचलविचकिलकुण्डल मण्डितवरतनुमण्डल।
कुण्डलिपतिकृतसंगर खण्डितभुवनभयंकर।
शंकरकमलजवन्दित किंकरनुतिलवनन्दित।
गञ्जितसमदपुरंदर चञ्चलदमनधुरंधर।
बन्धुरगतिजितसिन्धुर चन्दनसुरभितकन्धर।
सुन्दरभुजलसदङ्गद सङ्गदसखिगणरङ्गद।
झंकृतिकरमणिकङ्कण कुन्तलतुठदुरुरङ्गण।
कुङ्कुमरुचिलसदम्बर लङ्घिमपरिमलडम्बर।
नन्दभवनवरमङ्गल मञ्जुलघुसृणसुपिङ्गल।

हिङ्गुलरुचिपदपङ्कज संचितयुवतिसदङ्गज ।
संततमृगमदपङ्किल संतनु मयि कुशलं किल ॥

**संचलेति** । संचले विचकिलकुण्डले मल्लिनिर्मितकर्णभूषणे यस्य । मण्डितो वरतनूनां मण्डलो येन सः । कुण्डलिपतिना कालियेन कृतः संगरो येन । खण्डितो भुवनभयंकरः कालियो येन । इतः परं पदत्रयं स्फुटार्थम् । चञ्चलानां गोविप्रविद्रोहिणां दमने धुरंधरातिसमर्थ हे । इतः परं पदत्रयं वि[श]दार्थम् । सङ्गमन्यासर्क्ति यति खण्डयति ध्यातः सन्निति तथा । सखिगणेभ्यः स्वसौन्दर्यादिना रङ्गमद्भुतज्ञानं ददाती[ति] तथा । झंकृतिकरे लघुपदकावलियोगादन्तः कलायवत्त्वाद्वा झणितिध्वनिकारिणि जटिते कङ्कणे वलये यस्य । कुन्तलेषु लुठन्त्यूरूणि रङ्गणनामकानि पुष्पाणि यस्य । कुङ्कुमरुचि पीतं लसदम्बरं वासो यस्य । लङ्गिमोऽतिरम्यः परिमलमण्डलः सौरभ्यविस्तारो यस्य । इतः परं पदद्वयं स्फुटार्थम् । हिङ्गुलरुचि शोणवर्णं पदपङ्कजं पादाब्जतलं यस्य । संचितो वर्धितो युवतिषु सन् प्रेमात्मकोऽङ्गजः कामो येन । 'प्रेमैव गोपरामाणां काम इत्यगमत्प्रथाम्' इति स्मृतेः। इतः परं प्रकटार्थम् । संतनु विस्तारय ॥

कलिकान्ते श्लोकः—

गिरितटीकुनटीकुलपिङ्गले खलतृणावलिसंज्वलदिङ्गले ।
प्रखरसंगरसिन्धुतिमिङ्गिले मम रतिर्वलतां व्रजमङ्गले ॥ १४ ॥

**गिरीति** । व्रजमङ्गले कृष्णे मम रतिर्भावो वलतामस्तु । कीदृशे । गिरितटीषु याः कुनट्यो धातुभेदास्तासां कुलेन पिङ्गले पिशङ्गे । 'नेपाली कुनटी गोला' इत्यमरः । खलतृणावलिषु संज्वलदिङ्गले दीप्यमानाङ्गारे । प्रखरस्तीक्ष्णो यः संगरसिन्धुस्तस्मिंस्तिमिङ्गिले तन्नाम्नि महामत्स्यविशेषे। तद्वत्तत्र निर्भयतया क्रीडतीत्यर्थः । अवरमत्स्यानां तिमिङ्गिल इव रिपूणां यो नाशकृदित्यर्थः ॥

श्लोकान्ते बिरुदः—

जय चारुदामललनाभिराम जगतीललाम रुचिहृतवाम वीर ॥

**जयेति** । चारुदामभिर्धृतोत्तममुक्तादिहाराभिर्ललनाभिः स्त्रीभिरभिराम रुचिर हे । हे जगतीललाम विश्वभूषण । 'ललामं लाञ्छने ध्वजे । शृङ्गे प्रधाने भूषायाम्' इति मेदिनी । रुच्या कान्त्या हृता वामा येन हे तथाभूत ॥

अथ गुणरतिकलिकाप्रारम्भे श्लोकः—

उन्दितहृदयेन्दुमणिः पूर्णकलः कुवलयोल्लासी ।
परितः शार्वरमथनो विलसति वृन्दाटवीचन्द्रः ॥ १५ ॥

**उन्दित इति** । वृन्दाटव्यां चन्द्रो विलसति । चन्द्रतां प्रतिपादयितुं विशिनष्टि—स कीदृशः । उन्दित आर्द्रीकृतो हृदयेन्दुमणिर्भक्तचित्तचन्द्रकान्तो येन सः । पूर्णाः कला-

श्चतु:षष्टिः षोडश च यत्र सः । कुवलयानि नीलाम्बुजानि चोल्लासयति तच्छीलः । शार्वरान् हिंस्रान् शार्वरमन्धतमसं च मथ्नातीति सः । 'शार्वरं त्वन्धतमसे शार्वरो घातकेऽन्यवत्' इति विश्वः । रूपकश्लेषाङ्गिका प्रथमातिशयोक्तिरियम् । उपमानेन चन्द्रेणोपमेयस्य कृष्णस्यान्तर्निगीर्णस्याध्यवसानात् । तत्रोन्दितेति रूपकम् । पूर्णेत्यादित्रये तु श्लेषः ॥

गुणरतिः ।

गुणरतिरिति । चण्डवृत्तभेदे नखे गुणरतिनामा प्रभेदो वर्णनीय इत्यर्थः । तल्लक्षणम्—

'सनलैः कल्पितैरंशैस्तृतीये दीर्घशालिभिः ।
बद्धं गुणरतिनाम्ना चण्डवृत्तं प्रचक्षते ॥' इति ।

प्रकटीकृतगुण शकटीविघटन निकटीकृतनवलकुटीवर वन-
पटलीतटचर नटलील मधुर सुरभीकृतवन सुरभीहितकर
मुरलीविलसितखुरलीहृतजगदरुणाधर नवतरुणायतभुज
वरुणालयसमकरुणापरिमल कलभायितबलशलभायितखल
धवलाधृतिहरगवलाश्रितकर सरसीरुहधर सरसीकृतनर
कलसी(शी)दधिहर कलशीलितमुख ललितारतिकर ललितावलिपर धीर॥

**प्रकटीकृतेति** । प्रकटीकृता गुणाः कारुण्यवात्सल्यादयो येन । शकटीमसुराविष्टां विघटयति प्रवालमृदुपादचालनेन भनक्तीति तथा । निकटीकृतां संनिधापितां नवलकुटीं वृणोति पाणौ स्वीकरोतीति । वनपटलीषु विपिनसमूहेषु चरतीति तथा । हे नटलील । हे मधुर । अङ्गसौरभ्येण सुरभीकृतानि वनानि येन । हे सुरभीणां गवां हितकर । मुरल्या विलसितया खुरल्या वादनाभ्यासेन हृतं वशीकृतं जगद्येन । हे अरुणाधर । हे नवतरुण । हे आयतभुज । वरुणालयसमः समुद्रतुल्यः करुणापरिमलः कृपाविस्तारो यस्य । कलभायितेन करिशावकसमेन बलेन रामेण शलभायितः पतङ्गसमतां नीतः खलः प्रलम्बासुरो येन । धवलानां गवां धृतिं हरति तादृशेन गवलेन महिषशृङ्गेणाश्रितः करो यस्य । इतः पदत्रयं स्फुटार्थम् । कलेन डिम्भाह्वानलक्षणेन मधुरध्वनिना शीलितं सेवितं मुखं यस्य । ललितायां रतिं भावं करोति जनयतीति तथा । ललितानां मनोज्ञानां युवतीनामावलिः श्रेणिस्तत्पर तदासक्त हे । हे धीर ॥

कलिकान्ते श्लोकः—

हरिणीनयनावृत प्रभो करिणीवल्लभकेलिविभ्रम ।
तुलसीप्रिय दानवाङ्गनाकुलसीमन्तहर प्रसीद मे ॥ १६ ॥

**हरिणीति**। हे हरिणीनयनाभिः प्रियाभिरावृत। हे प्रभो ताभिः क्रीडायां समर्थ। करिणीवल्लभस्य गजराजस्येव केलिविभ्रमः क्रीडाछविर्यस्य हे तथाभूत। हे तुलसीप्रिय। दानवाङ्गनाकुलस्य सीमन्तं केशवेशं हरत्यपनयतीति हे तथाभूत। पतिवधेन वैधव्यात्ताः सीमन्तं न रचयन्तीत्यर्थः। 'येन दानवनारीणां सीमन्तोन्नयनं कृतम्' इति हरिवंशात्। त्वं मे प्रसीद॥

श्लोकान्ते बिरुदः—

चन्दनचर्चित गन्धसमर्चित गण्डविवर्तनकुण्डलनर्तन
संदलदुज्ज्वलकुन्दलसद्गल वञ्जुलकुड्मलमञ्जुल कज्जल-
सुन्दरविग्रह नन्दलसद्ग्रह वीर॥

**चन्दनेति**। चन्दनेति द्वयं स्फुटार्थम्। गण्डविवर्तनेन कपोलचापलेन कुण्डलनर्तनं यस्य। संदलद्भिर्विकसद्भिरुज्ज्वलैः कुन्दैः। तन्मालयेत्यर्थः। लसन् गलः कण्ठो यस्य। वञ्जुलस्याशोकस्य कुड्मलेन मञ्जुल हे। 'वञ्जुलोऽशोके' इत्यमरः। हे कज्जलसुन्दरविग्रह दलिताञ्जनचिक्कण। हे नन्दलसद्ग्रह पितृविषयकदीप्यमानभक्तिनिर्बन्ध॥

अथ मातङ्गखेलितकलिकारम्भे श्लोकः—

रतिमनुबध्य गृहेभ्यः कर्षति राधां वनाय या निपुणा।
सा जयति निसृष्टार्था तव वरवंशजकाकली दूती॥ १७॥

**रतिमिति**। हे कृष्ण, तव वरवंशजकाकली निसृष्टार्था सा दूती जयति। कीदृशी। निपुणा उभयकार्यसाधने प्रवीणा। नैपुण्यमाह—या रतिमनुबध्य भावं निर्बन्धेनापाद्य गृहेभ्यो वनाय राधां कर्षति। गमयतीत्यर्थः। लक्षणमुक्तम्—'द्वयोरिङ्गितमादाय स्वयमुत्तरदायिका। सुश्लिष्टं कुरुते कार्यं निसृष्टार्था तु सा मता॥'

मातङ्गखेलितम्।

मातङ्गेति। चण्डवृत्तभेदे नखे मातङ्गखेलिताख्यः प्रभेदो वर्णनीय इत्यर्थः। तल्लक्षणं च—

'रगलैः कल्पितैरंशैः प्रथमे च तृतीयके।
दीर्घयुक्तैश्चतुर्थात्तु मधुरश्लिष्टयोगिभिः।
निबद्धं चण्डवृत्तं तु नाम्ना मातङ्गखेलितम्॥' इति।

नाथ हे नन्दगेहिनीशंद पूतनापिण्डपातने चण्ड दानवे दण्डकारकाखण्डसारपौगण्डलीलयोद्दण्ड गोकुलालिन्दगूढ गोविन्द पूरितामन्दराधिकानन्द वेतसीकुञ्जमाधवीपुञ्जलोकनारम्भजातसंरम्भदीपितानङ्गकेलिभागङ्ग गोपसारङ्गलोचनारङ्गकारिमातङ्गखेलितासङ्गसौहृदाशङ्कयोषितामङ्कपालिका-

लम्ब चारुरोलम्बमालिकाकण्ठ कौतुकाकुण्ठ पाटलीकुन्दमाधवीवृन्दसेवितोत्तुङ्गशेखरोत्सङ्ग मां सदा हन्त पालयानन्त वीर ॥

**नाथ हे इति।** नाथ हे स्वामिन्, नन्दगेहिन्यै यशोदायै स्वजन्मना शं कल्याणं ददातीति तथा। पूतनाया राक्षस्याः पिण्डो देहस्तस्य पातने बृहद्वनखराजधानीतो बहिर्निक्षेपणे चण्ड सकोप हे। 'संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे' इति नानार्थवर्गः। हे दानवे बकादौ दण्डकारक। अखण्डः सारो बलं यत्र तथाभूतायां पौगण्डलीलायां दशमवर्षावसानायां क्रीडायामुद्दण्डातिचपल हे। हे गोकुलालिन्दगूढ। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। अथ कैशोरचरितेन संबोधयति—पूरितोऽमन्द उत्तमो राधिकानन्दो येन। वेतसीकुञ्जस्य माधवीपुञ्जस्य च यो लोकनारम्भः। 'वानीरो वञ्जुलः शीतो विदुलो वेतसः स्मृतः' इति हलायुधः। तेन तत्कुञ्जतत्पुञ्जलोकनेन जातसंरम्भः सकोप इषुवर्षितया दीपितश्च योऽनङ्गस्तेन केलिं भजन्त्यङ्गानि यस्य। गोपसारङ्गलोचनानां गोपीनां रङ्गमद्भुतज्ञानं करोति तादृशं मातङ्गखेलितं मत्तहस्तिवत् क्रीडनं यस्य। 'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' इति विश्वः। असङ्गे फलाभिलाषशून्ये कान्तसुखैकफलके सौहृदे मित्रभावेऽशङ्कानां निर्भयानां योषितां व्रजसुभ्रुवामङ्कपालिकामाश्लेषमालम्बत आश्रयतीति तथा। 'शङ्का सा(स्या)त्संशये' इति हैमः। 'आश्लेषमङ्कपालिम्' इति हलायुधः। चारुभी रोलम्बैर्युक्ता मालिका स्रक् कण्ठे यस्य। कौतुकेषु विनोदेष्वकुण्ठानलस हे। पाटलीकुन्दमाधवीनां पुष्पाणां वृन्देन सेवित उत्तुङ्गस्य शेखरस्योत्सङ्गो मध्यभागो यस्य। हे अनन्त, सदा मां पालय हे वीर॥

कलिकान्ते श्लोकः—

स्फुरदिन्दीवरसुन्दर सान्द्रतरानन्दकन्दलीकन्द।
मां तव पदारविन्दे नन्दय गन्धेन गोविन्द॥ १८॥

**स्फुरदिति।** हे गोविन्द, तव पदारविन्दे यो गन्धस्तेन मां नन्दय। सान्द्रतरा यानन्दकन्दली सुखनवाङ्कुरस्तस्याः कन्द हे। 'कन्दोऽब्दे शरणे सस्यमूले' इति हैमः॥

श्लोकान्ते बिरुदः—

कुन्ददशन बद्धरसन रुक्मवसन रम्यहसन देव॥

**कुन्देति।** बद्धा श्रोणिबिम्बे धृता रसना मेखला येन। रुक्ममिव पीतं वसनं यस्य। स्फुटार्थमन्यत्॥

अथ तिलककलिकारम्भे श्लोकः—

प्रपन्नजनतातमःक्षपणशारदेन्दुप्रभा-
व्रजाव्रजविलोचना स्मरसमृद्धिसिद्धौषधिः।

विडम्बितसुधाम्बुधिप्रबलमाधुरीडम्बरा
　　बिभर्तु तव माधव स्मितकडम्बकान्तिर्मुदम् ॥ १९ ॥

**प्रपन्नेति**। हे माधव, तव स्मितकडम्बकान्तिर्मन्दहासनवाङ्कुरद्युतिर्मुदं मे बिभर्तु पुष्णातु। कडम्बशब्दः शाकनालिंकायां पठ्यते। डम्बरो विस्तारः। स्फुटार्थमितरत् ॥

तिलकम्।

तिलकमिति। चण्डवृत्तभेदे नखे तिलकाख्यः प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणं च—
'ननस्तनैः कृतैरंशैर्नवमान्मधुरोज्ज्वलैः।
निबद्धं चण्डवृत्तं तु तिलकाख्यमथोचिरे ॥' इति।

अमलकमलरुचिखण्डनपटुपद नटनपटिमहृतकुण्डलिपतिमद।
नवकुवलयकुलसुन्दररुचिभर घनतडिदुपमितबन्धुरपटधर।
तरणिदुहितृतटमञ्जुलनटवर नयननटनजितखञ्जनपरिकर।
भुजतटगतहरिचन्दनपरिमल पशुपयुवतिगणनन्दनवरकल।
नवमदमधुरदृगञ्चलविलसित मुखपरिमलभरसंचलदलिवृत।
शरदुपचितशशिमण्डलवरमुख कनकमकरमयकुण्डलकृतसुख।
युवतिहृदयशुकपञ्जरनिजभुज परिहितविचकिलमञ्जुलशिरसिज।
सुतनुवदनविधुचुम्बनपटुतर दनुजनिबिडमदडुम्बनरणखर वीर ॥

**अमलेत्यादि**। अमलेत्यादिका कलिका प्रायो विस्फुटार्था। नटनपटिमा दाक्षिणात्योद्दण्डनृत्यप्रावीण्यम्। घना निबिडा या तडित्तदुपमितस्तनुसदृशः। परिकरः समूहः। 'भवेत्परिकरः सङ्घे पर्ज(र्य)ङ्कपरिवारयोः' इति मेदिनी। उपचितो वृद्धः। पूर्ण इत्यर्थः। तादृशाभ्यां कुण्डलाभ्यां कृतं पश्यतां सुखं येन। परिहितान्यर्पितानि विचकिलानि मल्लिका येषु तादृशाः शिरसिजाः केशा यस्य। डुम्बनं खण्डनम्। खरस्तीक्ष्णः ॥

कलिकान्ते श्लोकः—

रणति हरे तव वेणौ नार्यो दनुजाश्च कम्पिताः खिन्नाः।
वनमनपेक्षितदयिताः करवालान्प्रोज्झ्य धावन्ति ॥ २० ॥

**रणतीति**। हे हरे, तव वेणौ रणति ध्वनति सति नार्यो गोपाङ्गना दनुजाश्च करवालान् प्रोज्झ्य वने धावन्ति। कबरीनिर्माणाय पाणौ गृहीतान् केशान् हित्वा वने स्थितं त्वां प्रत्याद्रवन्ति नार्यः। युद्धाय करे गृहीतान् करवालान् खड्गान् हित्वा वनं गह्वरं प्रविशन्ति दैत्या इत्यर्थः। तास्ते च कीदृशाः। कम्पिताः खिन्नाः। रत्युत्थेन कम्पेन स्वेदेन च सात्विकेन भूषिता नार्यः। मरणभयोत्थेन च तेन तेन दनुजाः। अनपेक्षितदयिताः प्र(प,त्यपेक्षारहिता नार्यः। पत्न्यपेक्षारहिता दैत्याः। अत्र श्लेषालंकारः। शृङ्गारभया-

नकौ व्यङ्गयौ तयोर्भिन्नाधारत्वाच्च विरोधः । युगपद्विरुद्धकार्योत्पादनाद्द्रोणोरद्भुतत्वं च व्यङ्ग्यम् ॥

श्लोकान्ते बिरुदः—

कुङ्कुमपुण्ड्रक गुम्फितपुण्ड्रक संकुलकङ्कण कण्ठगरङ्गण देव ॥

**कुङ्कुमेति** । कुङ्कुमनिर्मितं पुण्ड्रकं तिलकं यस्य । गुम्फितेन पुण्ड्रकेन माधवीपुष्पेण संकुले व्याप्ते कङ्कणे यस्य । हे माधवीपुष्पकङ्कणसहकृतकनककङ्कणेत्यर्थः ॥

एवं नखभेदा नव वर्णिताः ।

अथ विशिखप्रभेदपङ्केरुहकलिकारम्भे श्लोकः—

सारङ्गाक्षीलोचनभृङ्गावलिपानचारुभृङ्गार ।
त्वां मङ्गलशृङ्गारं शृङ्गाराधीश्वर स्तौमि ॥ २१ ॥

**सारङ्गेति** । सारङ्गाक्षीणां मृगनयनानां या लोचनभृङ्गावलयस्तासां सौन्दर्यमधुपानाय चारुभृङ्गारो रम्यकनकालुका तत्संबोधने तथा । 'भृङ्गारः कनकालुका' इत्यमरः । हे शृङ्गाराधीश्वर उज्ज्वलरसदैवत । त्वामहं स्तौमि । कीदृशम् । मङ्गलशृङ्गारं शुभवेशम् ॥

चण्डवृत्तस्य विशिखे पङ्केरुहम् ।

चण्डेति । चण्डवृत्तस्य द्वितीये भेदे विशिखे पङ्केरुहाख्यः प्रभेदो वर्ण्यत इत्यर्थः । तल्लक्षणं च—

'सा(स्या)त्पञ्चधा स विशिखः पद्मं कुन्दं च चम्पकम् ।
वञ्जुलं बकुलं चेति कामस्वामी शरा मताः ॥' इति ।

तत्र पद्मम्—'अच्युतस्तु भवेत्पद्म पञ्चमाद्युक्तसंयुतम् ।' इत्युक्तम् । अच्युतस्तु—'नयाभ्यां कल्पितैरंशैः पञ्चमे दीर्घशालिभिः । अन्त्याच्छ्लिष्टयुतोपेतैश्चण्डमच्युतमूचिरे ॥' इति प्रागुक्तः । तच्च पद्मं पङ्केरुहादिभेदात् षड्विधमुक्तं प्राक् । तत्र पङ्केरुहम्—

'स्याच्चेत्कवर्ग्यमधुरं पूर्वपञ्चमवर्णकम् ।
पद्मं पङ्केरुहं प्रोक्तं कलिकावेदिभिर्बुधैः ॥' इति ।

पञ्चमवर्णाद्यत्र कवर्गभवो मधुरवर्णस्तत्पङ्केरुहं पद्ममित्यर्थः ॥

जय गतशङ्क प्रणयविटङ्क प्रियजनवङ्क स्मितजितशङ्ख
स्फुटतरशृङ्गध्वनिधृतरङ्ग क्षणनटदङ्ग प्रणयिकुरङ्ग-
व्रजकृतसङ्ग श्रुतितटरिङ्गन्मधुरसपिङ्गप्रथितलवङ्ग
स्वनटनभङ्गव्रणितभुजङ्ग स्तबकिततुङ्गक्षितिरुहशृङ्ग-
स्थितबहुभृङ्गक्वणिततरङ्गप्रबलदनङ्ग भ्रमदुरुभृङ्गी-
मुदितकुरङ्गीदृगुदितभङ्गीमृदिमभिरङ्गीकृतनवसंगी-
तक दरवङ्केक्षण नवसंकेतगसुहृदङ्केशय सकलङ्के-
तरपृषदङ्केडितमुख पङ्केरुहपद रङ्के कृपय सपङ्के किल मयि वीर ॥

**जयेति** । हे गतशङ्क निर्भय । हे प्रणयविटङ्क प्रेमपारावतस्थितिस्थान । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः । हे प्रियजनवङ्क । हे स्मितजितशङ्क कम्बूज्ज्वलमन्दहास । स्फुटतरं मन्द्रमधुरतयातिदूरप्रसारिणि शृङ्गध्वनौ धृतो रङ्गो येन । क्षणेनोत्सवेन नटन्त्यङ्गानि यस्य । हे उत्सवमयेत्यर्थः । 'क्षणः कालविशेषे त्पा(स्या)त्पर्वण्यवसरे महे' इति हैमः । प्रणयिभिः स्निग्धैः कुरङ्गव्रजैर्मृगगणैः कृतः सङ्गोऽनुगतिर्यस्य । श्रुतितटे रिङ्गन्ति चलन्ति मधुरसेन मकरन्देन पिङ्गानि पिशङ्गवर्णानि प्रथितानि च लवङ्गानि तन्नामकानि कुसुमानि यस्य । हे कर्णोच्चललवङ्गपुष्पावतंसेत्यर्थः । स्वनटनभङ्गेन स्वताण्डवतरङ्गेणातिगाढेन व्रणितः स्फुटितशिराः कृतो भुजङ्गः कालियनागो येन । स्तबकितानां जातपुष्पगुच्छानां तुङ्गक्षितिरुहाणामुच्चतरूणां शृङ्गेषु शिखरेषु स्थिता ये बहवो भृङ्गास्तेषां क्वणिततरङ्गेण ध्वनिभरेण प्रबलन् प्रादुर्भवन्ननङ्गो यस्य । 'शृङ्गं प्रभुत्वे शिखरे' इति मेदिनी । हे तादृग्भृङ्गध्वनिप्रव्यक्तस्मरेत्यर्थः । भ्रमदुरुभृङ्गीतुल्या मुदिताश्च या कुरङ्गीणां दृशो नेत्राणि तदुदिता ये भङ्गीमृदिमानो मृदुभङ्ग्यस्तैरङ्गीकृतं नवसंगीतकं येन । तद्वीक्षणानुस्मृतप्रेयसीदृग्भङ्ग्युदितगानेत्यर्थः । स्मरणालंकारोऽत्र व्यङ्ग्यः । तल्लक्षणं चोक्तं काव्यकौस्तुभे—'सदृशानुभवाद्वस्तुस्मृतिः स्यात्स्मरणं मतम् ।' इति । हे दरवङ्केक्षण ईषद्वक्रनयन । नवानां संकेतगानां सुहृदां प्रेयसीनामङ्के क्रोडे शेते इति तथा । सकलङ्केतरो निष्कलङ्को यः पृषदङ्कश्चन्द्रस्तेनेडितं मुखं यस्य । 'पृषन्मृगे पुमान्बिन्दौ न द्वयोः पृषतोऽपि न' इति मेदिनी । हे पङ्केरुहपद । सपङ्के पापिनि रङ्के दरिद्रे मयि त्वं कृपय दयां विधेहीति । 'रङ्कः कङ्गालः' इत्यमरः । सप्रभेदं पङ्केरुहमिह वर्णितं द्रष्टव्यम् ॥

कलिकान्ते श्लोकः—

उत्तुङ्गोदयशृङ्गसंगमजुषां बिभ्रत्पतङ्गत्विषां
वासस्तुल्यमनङ्गसंगरकलाशौटीर्यपारंगतः ।
स्वान्तं रिङ्गदपाङ्गभङ्गिभिरलं गोपाङ्गनानां गिल-
न्भूयास्त्वं पशुपालपुंगव दृशोरव्यङ्गरङ्गाय मे ॥ २२ ॥

**उत्तुङ्गेति** । हे पशुपालपुंगव गोपप्रवर, त्वं मे दृशोरव्यङ्गरङ्गाय पूर्णविनोदाय भूयाः । आशिषि लिङ् । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥' इत्यमरः । कीदृशः सन् । पतङ्गत्विषां सूर्यप्रभानां तुल्यं वासो बिभ्रत् । तत्त्विषां कीदृशीनामित्याह—उत्तुङ्ग उदयशैलस्य शृङ्गे शिखरे संगमं योगं जुषन्ते भजन्तीति तासाम् । प्रभातार्ककान्तिसदृशं धारयन्नित्यर्थः । अनङ्गसंगरः कामयुद्धं तत्कलासु यच्छौटीर्यं विक्रमस्तत्र पारंगतः सन् । 'शौट गर्वे' इत्यस्मात् 'कृशॄ—' इत्यादिना ईरन्प्रत्ययेन सिद्धात् शौटीरशब्दाद्ब्राह्मणादित्वात् ष्यञि शौटीर्यमिति सिध्यति । रिङ्गतोश्चपलयोरपाङ्गयोर्भङ्गिभिर्गोपाङ्गनानां स्वान्तं चित्तं गिलन् सन् ॥

श्लोकान्ते विरुदः—

विलसदलिकगतकुङ्कुमपरिमल कटितटधृतमणिकिङ्किणिवरकल ।
नवजलधरकुललङ्घिमरुचिभर मसृणमुरलिकलभङ्गिमधुरतर वीर ॥

**विलसदिति** । विलसन्नलिकगतो ललाटवर्ती कुङ्कुमपरिमलो यस्य । कटितटधृतया मणिकिङ्किण्या वरः कलः सूक्ष्मध्वनिर्यस्य । नवाज्जलधरकुलादपि लङ्घिमः कमनीयो रुचिभरो यस्य । मसृणया कोमलया मुरलिकलभङ्ग्या मधुरतर हे वीर ॥

अथ सितकञ्जकलिकारम्भे श्लोकः—

अवतंसितमञ्जुमञ्जरे तरुणीनेत्रचकोरपञ्जरे ।
नवकुङ्कुमपुञ्जपिञ्जरे रतिरास्तां मम गोपकुञ्जरे ॥ २३ ॥

**अवतंसितेति** । गोपकुञ्जरे बल्लवश्रेष्ठे कृष्णे मम रतिरास्तां भवतु । कीदृशि । अवतंसितः कर्णभूषणतां नीतो मञ्जुर्मनोज्ञो मञ्जरो वल्लरी येन तस्मिन् । 'मञ्जरी तिलकद्रुमुकयोर्वल्लरी द्वयोः' इति मेदिनी । नवेन कुङ्कुमपुञ्जेन पिञ्जरे पीते । स्फुटार्थमन्यत् ॥

सितकञ्जम् ।

सितकञ्जमिति । चण्डवृत्तभेदे विशिखे सितकञ्जनामा प्रभेदो वर्णनीय इत्यर्थः । तल्लक्षणं च—

'चवर्गमधुरोपेतं तद्भवेत्सितकञ्जकम्' इति ।

यत्र पञ्चमवर्णाश्चवर्गभवो मधुरवर्णः स्यात्तत्पद्यं सितकञ्जं भवेदित्यर्थः ॥

जय कचचञ्चद्द्युतिसमुदञ्चन्मधुरिमपञ्चस्तबकितपिञ्छ-
स्फुरित विरिञ्चिस्तुत गिरिकुञ्जव्रजपरिगुञ्जन्मधुकरपुञ्ज-
द्रुतमृदुशिञ्ज द्विषदहिगञ्ज व्रततिषु खञ्जन्नवरसमञ्ज-
न्मरुदतिपिञ्ज प्रवलितमुञ्जानलहर गुञ्जाप्रिय गिरिकुञ्जा-
श्रित रतिसंजागर नवकञ्जामलकर झञ्झानिलहर मञ्जी-
रजरवपञ्जीपरिमलसंजीवितनवपञ्चाशुगशरसंचा-
रणजितपञ्चाननमद धीर ॥

**जयेति** । कचेषु केशजूटोपरि चञ्चन्मरुता चपलीभवन् । द्युतिभिः समुदञ्चन्नुदयन् । मधुरिम्णां पञ्चेन विस्तारेण स्तबकितश्च यः पिञ्छश्चन्द्रकस्तेन स्फुरित हे । गिरिकुञ्जव्रजेषु परिगुञ्जता मधुकरपुञ्जेन द्रुतः प्राप्तो मृदुशिञ्जः कोमलशब्दो यस्य । हे भृङ्गवृन्दानुकृतभूषणध्वन इत्यर्थः । हे द्विषदहिगञ्ज कृतकालियगञ्जन । व्रततिषु खञ्जन्मन्दीभवन्नवरसो नवीनमधुधारी मञ्जन् शब्दं कुर्वंश्च यो मरुत्तेनातिपिञ्जातिगौर । हे मन्दपवनानीतपरागपीतेत्यर्थः । 'मुजमजिमार्जकमृता ध्वन्योः' इति कविकल्पद्रुमः । प्रवलितं मुञ्जानलं हरतीति

तथा । हे गुञ्जाप्रिय । हे गिरिकुञ्जाश्रित । रत्यां सम्यग्जागरो यस्य । कञ्जाच्छोणपद्मादप्यमलौ करौ पाणितले यस्य । झञ्झानिलं सवृष्टिं पवनं हरतीति तथा । 'झञ्झावातः सवृष्टिः स्यात्' इति हलायुधः । मञ्जीरजा नूपुरोद्भूता या रवपञ्जी ध्वनिविस्तृतिर्यश्च परिमलस्ताभ्यां संजीवितो नवपञ्चाशुगो नूतनस्मरस्तस्य शरसंचारणेन बाणप्रहारेण जितः पञ्चाननस्य मदो जितेन्द्रियत्वप्रभुत्वगर्वो येन । भगवन्नूपुरनादाङ्गसौरभ्यसंजीवितो लब्धयुवतिस्तनदुर्गः कामोऽतिप्राबल्यात्पूर्वरिपुं शिवं युवतिकटाक्षबाणैर्विव्याधेति भावः । कविप्रौढोक्तिसिद्धोऽत्र व्यञ्जकः । तयोरतिमनोहरत्वं व्यङ्ग्यम् । 'पजि रोधे' सौत्रो धातुः, स च विस्तारार्थो धातूनामनेकार्थत्वस्वीकारात् । 'पचि व्यक्तीकरणे' त्वस्मादणि पृषोदरादित्वात्पदसाधुत्वं वेत्येके ॥

कलिकान्ते श्लोकः—

कर्णिकारकृतकर्णिकाद्युतिर्कर्णिकापदनियुक्तगैरिका ।
मेचका मनसि मे चकास्तु ते मेचकाभरण भारिणी तनुः ॥ २४ ॥

**कर्णिकारेति** । हे मेचकाभरण शिखिपिच्छविभूषण ते तनुर्मे मनसि चकास्तु । सा कीदृशी । कर्णिकारैः कृतया कर्णिकया स्रोतावतंसेन द्युतिर्यस्याः सा । कर्णिकानां खिलेपनानां पदेषु स्थानेषु नियुक्तान्यर्पितानि गैरिकाणि यस्याः सा । मेचका श्यामला । भारिणी सौन्दर्यलावण्यभारवती । 'मेचको बर्हचन्द्रे स्यान्मेचकः श्यामलेऽपि च' इति विश्वः ॥

श्लोकान्ते बिरुदः—

मदनरसंगत संगतपरिमल युवतिविलम्बित लम्बितकचभर
कुसुमविटङ्कित टङ्कितगिरिवर वीर ॥

**मदनेति** । हे मदनरसंगत । संगतो लब्धः परिमलः कान्ताङ्गसौरभ्यं येन । हे युवतिविलम्बित । लम्बितः केलिविस्रस्तः कचभरो यस्य । हे कुसुमविटङ्कित । पुष्पविभूषितेत्यर्थः । 'टकि बन्धने' धातुः । टङ्कितो मासचतुष्टयतुल्यतां नीतो गिरिवरो येन । 'टङ्कः कपित्थभेदे स्यान्मानान्तरखनित्रयोः' इति विश्वः ॥

अथ पाण्डूत्पलकलिकारम्भे श्लोकः—

भ्रूमण्डलताण्डवितप्रसूनकोदण्डचित्रकोदण्ड ।
हृत्पुण्डरीकगर्भे मण्डय मम पुण्डरीकाक्ष ॥ २५ ॥

**भ्रूमण्डलेति** । भ्रूमण्डलमेव ताण्डवितं विधूनितं प्रसूनकोदण्डस्य कन्दर्पस्य चित्रकोदण्डं यस्य हे तथाभूत । तत्सादृश्ये पर्यवसानान्निदर्शनालंकारः । हे पुण्डरीकाक्ष मम हृत्पुण्डरीकमध्यं मण्डय । तन्मध्ये विस्फुरेत्यर्थः ॥

पाण्डूत्पलम्।

पाण्डूत्पलमिति। चण्डवृत्तभेदे विशिखे पाण्डूत्पलनामा प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणं च—

'टवर्ग्यमधुरोपेतं पाण्डूत्पलमुदाहृतम्' इति।

यत्र पञ्च टवर्गवनो मधुरवर्णस्तदित्यर्थः॥

जय जय दण्डप्रिय कचखण्डग्रथितशिखण्डव्रज शशिखण्ड-
स्फुरणसपिण्डसितवृतगण्ड प्रणयकरण्ड द्विजपतितुण्ड
स्मररसकुण्ड क्षतफणिमुण्ड प्रकटपिचण्डस्थितजगदण्ड
क्वणदणुघण्ट स्फुटरणघण्ट स्फुरदुरुशुण्डाकृतिभुजदण्डा-
हतखलचण्डासुरगण पण्डाजनितवितण्डाजितबल भाण्डी-
रदयित खण्डीकृतनवहिण्डीरभदधिहण्डीगण कलकुण्ठी-
कृतकलकण्ठीगण मणिकण्ठीस्फुरितसुकण्ठीप्रिय वरकण्ठीरवरण धीर॥

**जयेति**। हे दण्डप्रिय। कचखण्डे केशवृन्दे ग्रथितोऽर्पितः शिखण्डव्रजः पिञ्छमुकुटं येन। शशिखण्डस्यार्धचन्द्रस्य यत्स्फुरणं प्रकाशस्तत्सपिण्डेन तत्सुतेन। तत्तुल्येनेति यावत्। स्मितेन वृतौ गण्डौ कपोलौ यस्य। 'सपिण्डस्तनयेऽपि च' इति विश्वलोचनकारः। हे प्रणयकरण्ड स्नेहमधुकोष। 'करण्डो मधुकोषासि कारण्डवदलाटके' इति विश्वः। हे द्विजपतितुण्ड चन्द्रास्य। हे स्मररसकुण्ड शृङ्गाररससरोवर। हे क्षतफणिमुण्ड मर्दितकालियफणागण। प्रकटं प्रविरलं यथा स्यात्तथा पिचण्डे उदरे स्थितानि जगदण्डान्यसंख्येयानि यस्य। क्वणन्त्योऽणुघण्टाः क्षुद्रघण्टिका यस्य। हे शब्दायमानमेखलेत्यर्थः। स्फुटे महति रणे घण्ट घृष्ट हे। स्फुरन्तावुरुशुण्डाकृति करिहस्ततुल्यौ भुजदण्डौ ताभ्यामाहतास्ताडिताः खलाश्चण्डाश्चासुरगणा येन। पण्डा शास्त्रीयव्युत्पत्तिस्तया जनिता या वितण्डाः पूर्वपक्षास्ताभिर्जितं बलं स्वसखिसैन्यं येन। हे भाण्डीरदयित। खण्डीकृता भग्ना नवडिण्डीरभानां नूतनसमुद्रफेनसदृशां दध्नां हण्डीगणा भाण्डनिचया येन हे। बालचापलभग्नदधिभाजनवृन्देत्यर्थः। 'हिण्डीरोऽब्धिकफः फेने' इत्यमरः। कलेन मधुरस्वरेण कुण्ठीकृता मन्दीकृताः कलकण्ठीनां पिकीनां गणा येन। मणिकण्ठीभिर्मौक्तिकमालाभिः स्फुरितानां सुकण्ठीनां व्रजाङ्गनानां प्रिय हे। ताः प्रिया यस्येति वा। वरस्योद्धतस्य कण्ठीरवस्येव रणो युद्धं यस्य हे। हे निखिलशत्रुविनाशिन्नित्यर्थः॥

कलिकान्ते श्लोकः—

दण्डीकुण्डलिभोगकाण्डनिभयोरुद्दण्डदोर्दण्डयोः
श्लिष्टश्चण्डिमडम्बरेण निबिडश्रीखण्डपुण्ड्रोज्ज्वलः।

निर्धूतोद्यदचण्डरश्मिघटया तुण्डश्रिया मामकं
कामं मण्डय पुण्डरीकनयन त्वं हन्त हृन्मण्डलम् ॥ २६ ॥

**दण्डीति** । हे पुण्डरीकनयन, तुण्डश्रिया मुखशोभया मामकं हृन्मण्डलं त्वं मण्डय । कीदृश्या । निर्धूता तिरस्कृता उद्यन्ती अचण्डरश्मिघटा चन्द्रश्रेणी यया । त्वं कीदृशः । दण्डी यष्टिहस्तः कुण्डलिभोगकाण्डनिभयोः सर्पकायदण्डतुल्ययोरुद्दण्डयोर्दोर्दण्डयोश्चण्डिमडम्बरेण विक्रमभरेण श्लिष्टः समवेतः । 'भोगः सुखे धने चाहेः शरीरफणयोरपि' इति मेदिनी । 'काण्डोऽस्त्री दण्डबाणार्थवर्गावसरवारिषु' इत्यमरः । निबिडेन श्रीखण्डपुण्ड्रेण चन्दनतिलकेनोज्ज्वलः शोभमानः । 'चन्दनं स्यान्मलयजं श्रीखण्डो रोहणद्रुमः' इति हलायुधः ॥

श्लोकान्ते बिरुदः—

कन्दर्पकोदण्डदर्पक्रियोद्दण्डदृग्भङ्गिकाण्डीर संजुष्टभाण्डीर धीर ॥

**कन्दर्पेति** । भ्रूरूपं यत्कन्दर्पकोदण्डं यस्य दर्पक्रियायां द्वि(वि)जयित्वगर्वचर्यायामुद्दण्डाः प्रबला दृग्भङ्गिरूपाः काण्डीरा बाणविक्षेपका यस्य हे तथाभूत । 'स्यात्काण्डवांस्तु काण्डीरः' इत्यमरः । संजुष्टः परिषेवितो भाण्डीरो येन हे । भाण्डीरवटतटविलासिन्नित्यर्थः ॥

अथेन्दीवरकलिकारम्भे श्लोकः—

त्वमुपेन्द्र कलिन्दनन्दिनीतटवृन्दावनगन्धसिन्धुर ।
जय सुन्दरकान्तिकन्दलैः स्फुरदिन्दीवरवृन्दबन्धुभिः ॥ २७ ॥

**त्वमिति** । कलिन्दनन्दिन्यास्तटे यद्वृन्दावनं तस्मिन् गन्धसिन्धुर मत्तहस्तिन् । हे उपेन्द्र, त्वं सुन्दरकान्तिकन्दलैर्मनोज्ञच्छविवृन्दैर्जय । कीदृशैरित्याह—स्फुरदिति । विकचनीलपद्मसमूहतुल्यैरित्यर्थः ॥

इन्दीवरम् ।

इन्दीवरमिति । चण्डवृत्तभेदे विशिखे इन्दीवराख्यः प्रभेदो वर्ण्यत इत्यर्थः । तल्लक्षणं च—

'तवर्ग्यमधुरोपेतं तदेवेन्दीवरं मतम्' इति ।

यत्र पञ्चमात्तवर्गभवो मधुरवर्णस्तदित्यर्थः ॥

जय जय हन्त द्विषदभिहन्तर्मधुरिमसंतर्पितजगदन्त-
मृदुल वसन्तप्रिय सितदन्त स्फुरितदृगन्त प्रसरदुदन्त
प्रभवदनन्तप्रियसख सन्तस्त्वयि रतिमन्तः स्वमुदहरन्त
प्रभुवर नन्दात्मज गुणकन्दासितनवकन्दाकृतिधर कुन्दा-
मलरद तुन्दात्तभुवन वृन्दावनभवगन्धास्पदमकरन्दा-

न्वितनवमन्दारकुसुमवृन्दार्चितकच वन्दारुनिखिलवृन्दा-
रकवरबन्दीडित विधुसंदीपितलसदिन्दीवरपरिनिन्दी-
क्षणयुग नन्दीश्वरपतिनन्दीहित जय धीर॥

**जय जयेति।** अत्यादरे वीप्सा। हन्तेति प्रहर्षे। हे द्विषदभिहन्तः शत्रुविनाशिन्। हे मधुरिमसंतर्पितजगत्। हे अन्तर्मृदुल कोमलचित्त। हे वसन्तप्रिय। हे सितदन्त मुक्ताप्रतिमदशन। हे स्फुरितदृगन्त चपलकटाक्ष। प्रसरन्तः प्रसृमरा उदन्ताः कथा यस्य। प्रभवन् प्रभुत्ववान् योऽनन्तः स प्रियसखो यस्य तस्य वा प्रियसखः। त्वयि रतिमन्तो लब्धभावाः सन्तः साधवः स्वमात्मानमुदहरन्त उद्धृतवन्तः। मुक्ता इत्यर्थः। हे प्रभुवर सर्वेश्वर। हे नन्दात्मज। हे गुणकन्द सौहार्दकारुण्यादिगुणमूल। त्वद्भक्तानां ते गुणास्त्वदनुग्रहादेवोदयन्तीत्यर्थः। असितस्य नीलस्य नवकन्दस्य नूतनाभ्रस्याकृतिं धरतीति तथा। हे कुन्दामलरद कुन्दकुड्मलोज्ज्वलदन्तपङ्क्तिक। इत्याकारविशेषोल्लेखनान्न पौनरुक्त्यम्। हे तुन्दात्तभुवन कुक्षिधृतजगत्। वृन्दावनभवं च नवगन्धास्पदेन मकरन्देनान्वितं च यन्नवमन्दारकुसुमवृन्दं तेनार्चिताः कचा यस्य। मन्दारो देवतरुः। वन्दारवः प्रणमन्तो ये निखिला वृन्दारकवरा देवश्रेष्ठा ब्रह्मादयस्त एव बन्दिनस्तैरीडित कृतस्तोत्र हे। 'बन्दिनः स्तुतिपाठकाः' इत्यमरः। विधुना संदीपितानि विकसितान्यतो लसन्ति शोभमानानि यानीन्दीवराणि तानि परिनिन्दति तिरस्करोति तादृशमीक्षणयुगं यस्य। नन्दीश्वरपतेर्व्रजेश्वरस्य नन्दि समृद्धिकरमीहितं चेष्टा यस्य। स त्वं जय। हे धीर॥

कलिकान्ते श्लोकः—

स्मितरुचिमकरन्दस्यन्दि वक्त्रारविन्दं
तव पुरुपरहंसान्विष्टगन्धं मुकुन्द।
विरचितपशुपालीनेत्रसारङ्गरङ्गं
मम हृदयतडागे सङ्गमङ्गीकरोतु॥ २८॥

**स्मितेति।** हे मुकुन्द, तव वक्त्रारविन्दं कर्तृ मम हृदयतडागे चित्तसरसि सङ्गं संबन्धमङ्गीकरोतु। तस्मिन् स्फुरत्वित्यर्थः। कीदृशम्। स्मितरुचिरूपं मकरन्दं स्यन्दयति प्रच्योतयतीति तत्। पुरुभिर्बहुभिः परहंसैरुत्कृष्टकादम्बैः, पक्षे शातभक्तैः, अन्विष्टो न तु संप्राप्तो गन्धो यस्य तत्। विरचितः पशुपालीनेत्रसारङ्गाणां व्रजाङ्गनानयनभृङ्गाणां रङ्गो येन तत्॥

श्लोकान्ते बिरुदः—

अम्बरगतसुरविनतिविलम्बित तुम्बुरुपरिभवमुरलिकरम्बित।
शम्बरमुखमृगनिकरकुटम्बित संभ्रमवलयितयुवतिविचुम्बित वीर॥

**अम्बरेति** । अम्बरगतानां नभोवर्तिनां सुराणां विनतिभिर्विलम्बित जातविलम्ब हे । तुम्बुरुगन्धर्व परिभवति तादृश्या मुरल्या करम्बित युक्त हे । शम्बरमुखैर्मृगनिकरैः सह कुटुम्बिता यस्य विश्वस्तैस्तैः परिवृत हे । संभ्रमेणादरेण वलयिताभिर्युक्ताभिर्युवतिभिर्विचुम्बित दत्तचुम्बन हे ॥

अथारुणाम्भोरुहकलिकारम्भे श्लोकः—

अम्बुजकुटुम्बदुहितुः कदम्बसंबाधबन्धुरे पुलिने ।
पीताम्बर कुरु केलिं त्वं वीर नितम्बिनीघटया ॥ २९ ॥

**अम्बुजेति** । अम्बुजकुटुम्बो रविस्तद्दुहितुर्यमुनायाः पुलिने नितम्बिनीघटया तरुणीवृन्देन सह त्वं केलिं कुरु । हे पीताम्बर । हे वीर । कीदृशे पुलिने । कदम्बसंबाधेन नीपाव्रततया बन्धुरे रम्ये । 'संकटं ना तु संबाधः' इत्यमरः ॥

अरुणाम्भोरुहम् ।

अरुणेति । चण्डवृत्तभेदे विशिखेऽरुणाम्भोरुहाख्यः प्रभेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—

'पवर्ग्यमधुरोपेतमरुणाम्भोजमुच्यते ।' इति ।

पञ्चमवर्णो यत्र पवर्गभवो मधुरवर्णस्तदित्यर्थः ॥

जय रससंपद्विरचितझम्प स्मरकृतकम्प प्रियजनशंप
प्रवणितकम्पस्फुरदनुकम्प द्युतिजितशम्पस्फुटनवचम्प-
श्रितकचगुम्प श्रुतिपरिलम्बस्फुरितकदम्बस्तुतमुख डिम्भ-
प्रिय रविबिम्बोदयपरिजृम्भोन्मुखलसदम्भोरुहमुख लम्बो-
द्भटभुज लम्बोदरवरकुम्भोपमकुचबिम्बोष्ठयुवतिचुम्बो-
द्भट परिरम्भोत्सुक कुरु शं मोस्तडिदवलम्बोर्जितमिलदम्भो-
धरसुविडम्बोद्धुर नतशंभो परिजितदम्भोलिगरिमसंभा-
वितभुजजम्भाहितमद लम्पाकमनसि संपादय मयि तं पा-
किममनुकम्पालवमिह धीर ॥

**जयेति** । रससंपदि शृङ्गारादिरसार्णवे विरचिता झम्पा उद्गम्य निमज्जनं येन । 'झम्पा संपातपाटवम्' इति हैमः । हे स्मरकृतकम्प । प्रियजनानां शं शुभं पातीति तथा । प्रवणिते नम्रतां गते कम्पे वरुणे स्फुरन्त्यनुकम्पा दया यस्य । द्युत्या जिता शम्पा विद्युद्यैस्तादृशाः स्फुटाश्च विकसिता ये नवचम्पास्तैः श्रितः कचगुम्पो यस्य । 'चाम्पेयश्चम्पको हैमपुष्पकः' इत्यमरः । हे चम्पकग्रथितकेशपाशेत्यर्थः । श्रुत्योः परिलम्बिते इति तादृशाभ्यां स्फुरिताभ्यां विकचाभ्यां कदम्बाभ्यां नीपकुसुमाभ्यां स्तुतं मुखं यस्य ।

हे डिम्भप्रिय गोपशिशुप्रीतिकर। रविबिम्बोदयेन परिजृम्भोन्मुखं विकसद्यल्लसत्कान्तिमदम्भोरुहं तदिव मुखं यस्य। हे लम्बोद्भटभुज दीर्घोद्दामबाहो। लम्बोदरस्य गणेशस्य गजवदनस्य यौ वरकुम्भौ तदुपमाः कुचा यासां तादृश्यश्च या बिम्बोष्ठ्यो युवतयस्तासां चुम्बेषूद्भट प्रगल्भ हे। तासामेव परिरम्भे उत्सुकोद्युक्त हे। 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। भो भगवन्, शं कुरु भक्तानां कल्याणं संपादय। तडितोऽवलम्बः समाश्रयो य ऊर्जितो वलीमिलन्नम्भोधरस्तस्य सुविडम्बे पीताम्बरविग्रहच्छविहेतुके तिरस्कारे उद्धुर गर्वित हे। नतः शंभुर्यस्मिन्। परिजितो दूरीकृतो दम्भोलिगरिमसंभावितभुजस्य जम्भाहितस्य शक्रस्य मदो येन। दम्भोलेर्वज्रस्य गरिम्णा संभावितौ ख्यातौ भुजौ यस्येत्यर्थः। लम्पाकमनसि विषयलम्पटचित्ते मयि। 'लम्पाको लम्पटे देशे' इति हैमः। तमनुकम्पालवं कृपाकणिकां संपादय कुरु। कीदृशीम्। पाकिमं सुपक्वम्॥

अथ कलिकान्ते श्लोकः—

दिव्ये दण्डधरस्वसुस्तटभवे फुल्लाटवीमण्डले
वल्लीमण्डपभाजि लब्धमदिरस्तम्बेरमाडम्बरः।
कुर्वन्नञ्जनपुञ्जगञ्जनमति श्यामाङ्गकान्तिश्रिया
लीलापाङ्गतरङ्गितेन तरसा मां हन्त संतर्पय॥ ३०॥

**दिव्य इति**। हे भगवन्, फुल्लाटवीमण्डले पुष्पितवनवृन्दे स्थितस्त्वं लीलापाङ्गतरङ्गितेन मां संतर्पय। तरसा वेगेनेति शीघ्रं दयस्वेत्यर्थः। तन्मण्डले कीदृशे। दिव्ये कान्तिमति। दण्डधरस्वसुर्धर्मराजभगिन्या यमुनायास्तटभवे तीरोत्पन्ने। वल्लीमण्डपान् भजतीति तस्मिन्। त्वं कीदृशः। लब्धो मदिरस्तम्बेरमस्य मत्तगजस्याडम्बरः समाटोपो येन सः। तद्वदुद्दामलील इत्यर्थः। अतिश्यामया अङ्गकान्तिश्रिया अञ्जनपुञ्जगञ्जनं कुर्वन्॥

अथ श्लोकान्ते बिरुदः—

अम्बुजकिरणविडम्बक खञ्जनपरिचलदम्बक।
चुम्बितयुवतिकदम्बक कुन्तलकलुठितकदम्बक वीर॥

**अम्बुजेति**। अम्बुजकिरणात्पद्मकान्तीर्विडम्बयति मुखकरचरणशोभया न्यक्करोतीति तथा। खञ्जनाविव परिचले अम्बके नेत्रे यस्य। 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः। चुम्बितेति द्वये कदम्बं वृन्दम्, कदम्बानीपकोरकाः। 'कदम्बं निकुरुम्बे स्यान्नीपसर्षपयोरपि' इति मेदिनी॥

अथ फुल्लाम्बुजकलिकाप्रारम्भे श्लोकः—

प्रेमोद्वेल्लितवल्गुभिर्वलयितस्त्वं बल्लवीभिर्विभो
रागोल्लापितवल्लकीविततिभिः कल्याणवल्लीभुवि।

सोल्लुण्ठं मुरलीकलाभिरमलं मल्लारमुल्लासय-
न्बाल्येनोल्लसिते दृशौ मम तडिल्लीलाभिरुत्फुल्लय ॥ ३१ ॥

**प्रेमेति**। हे विभो समर्थ, कल्याणवल्लीभुवि मङ्गलात्मककल्पलताभूमौ स्थितस्त्वं तडिल्लीलाभिराकस्मिकदर्शनस्पर्शसंभाषाभिर्मम दृशावुत्फुल्लय विकसिते कुरु। कीदृशस्त्वम्। बल्लवीभिः श्रीराधादिभिर्वलयितः परिवृतः। कीदृशीभिः। प्रेमोद्वेल्लितवल्गुभिरनुरागचापलमनोज्ञाभिः। रागेणोल्लापिता वादिता वल्लकीविततिर्वीणाश्रेणिर्याभिः। किं कुर्वन् पुनस्त्वम्। सोल्लुण्ठं सहासं यथा स्यात्तथा मुरलीकलाभिरमलं निर्दोषम्। मल्लारं तन्नामकं रागमुल्लासयन् गायन्। दृशौ कीदृश्यौ। बाल्येनाज्ञानेनोल्लसिते प्राकृतरूपानुभवचपले॥

फुल्लाम्बुजम्।

फुल्लाम्बुजमिति। चण्डवृत्तभेदे विशिखे फुल्लाम्बुजाख्यः प्रभेदो वर्ण्य इत्यर्थः। इदमेव कह्लारमुक्तम्। तल्लक्षणं च—

'विश्लिष्टयुतमेतत्तु कह्लारं परिचक्षते।' इति।

पञ्चमाद्विश्लिष्टसंयोगे पद्यं कह्लाराख्यमित्यर्थः॥

व्रजपृथुपल्लीपरिसरवल्लीवनभुवि तल्लीगणभृति मल्ली-
मनसिजभल्लीजितशिवमल्लीकुमुदमतल्लीजुषि गत झिल्ली-
परिषदि हल्लीसकसुखझल्लीरत परिफुल्लीकृतचलचिल्ली-
जितरतिमल्लीमद भर सल्लीलतिलक कल्यातनुशततुल्या-
हवरसकुल्याचटुलितखल्याप्रमथन कल्याणचरित धीर ॥

**व्रजेत्यादि**। हे व्रजपृथुपल्लीपरिसरवल्लीवनभुवि गत, त्वं भर निजभक्तान् पालय। लक्ष्यनिर्वाहार्थत्वाद्दूरान्वयो न दोषः। व्रजे याः पृथुपल्ल्यो महान्तो घोषाः। गोपवसतय इति यावत्। 'घोष आभीरपल्ली स्यात्' इत्यमरः। तासां परिसरे प्रान्ते या वल्लीवनभूर्लताकाननभूमिः। तस्यां स्थितेत्यर्थः। 'पर्यन्तभूः परिसरः' इत्यमरः। तस्यां कीदृश्यामित्याह—तल्लीगणभृति तल्ल्योऽल्पजलाशयास्तासां गणं समूहं बिभर्तीति तस्याम्। 'तल्लो जलाधारभेदे' इति हैमः। घटीत्यादिवदल्पार्थे ङीप्। बहूदकायामित्यर्थः। मल्ली च मनसिजभल्लीजितशिवमल्ली च कुमुदमतल्ली च ता जुषते सेवत इति तस्याम्। मनसिजः कामस्तस्यास्त्रविशेषो भल्ली सेवाचरति भल्लीयते। कर्तुः क्यङ्। ततः कर्तरि क्तः। मनसिजभल्लीजिता चासौ शिवमल्ली च। रुद्रप्रियः पुष्पविशेषः। 'शिवमल्ली पाशुपतः' इत्यमरः। प्रशस्तं कुमुदं कुमुदमतल्ली। 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनि' इत्यमरः। 'प्रशंसावचनैश्च' इति सूत्रात्समासः। झिल्ल्य उच्चैःस्वराः कीटविशेषास्तासां परिषत् सभा यत्र तस्याम्। 'भृङ्गारी चीरुकाचीरीझिल्लिका च समा इमाः' इत्यमरः। हल्लीसकेन मण्डलीभूतानां स्त्रीणां नृत्येन या सुखझल्ली आनन्दसंततिस्तस्यां रत

हे। 'मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकं तु तत्' इति हैमः। परिफुल्लीकृताभ्यां चलचिल्लीभ्यां चपलभ्रूभ्यां जितो रतिमल्लीमदो येन। 'मल्लङ् धृतौ' इति कल्पद्रुमः। रतिं मल्लितुं वक्षसि धर्तुं शीलं यस्य स चासाविश्च कामस्तस्येत्यर्थः। हे सल्लीलतिलक। कलासु साधूनि कल्यानि यान्यतनुशतानि कामसहस्राणि तत्तुल्य हे। आहवरसकुल्यासु युद्धसुखाल्पसरित्सु चटुलिता या खल्या खलसंहतिस्तां प्रमथ्नातीति हे कृत्रिमाल्पसरितमिव युद्धसंहतिं लङ्घयन्। हे कल्याणचरित॥

अथ कलिकान्ते श्लोकः—

गोपीः संभृतचापलचापलताचित्रया भ्रुवा भ्रमयन्।
विलस यशोदावत्सल वत्सलसद्धेनुसंवीत॥ ३२॥

**गोपीरिति**। हे यशोदावत्सल, वत्सैर्लसन्तीभिर्धेनुभिः संवीत वेष्टित हे। त्वं भ्रुवा गोपीः भ्रमयन् चपलाः कुर्वन् विलस। कीदृश्या भ्रुवेत्याह—संभ्रतेति। संभृतं परिधृतं चापलं यया तथाभूता या चापलता धनुर्वल्ली तद्वच्चित्रयाश्चर्यरूपया। सार्थव्यर्थं यमकम्॥

अथ श्लोकान्ते बिरुदः—

बल्लवलीलासमुदयसमुचित पल्लवरागाधरपुटविलसित
वल्लभगोपीप्रवणित मुनिगणदुर्लभकेलीभरमधुरिमकण
मल्लविहाराद्भुततरुणिमधर फुल्लमृगाक्षीपरिवृतपरिसर
चिल्लिविलासार्पितमनसिजमद मल्लिकलापामलपरिमलपद
रल्लकराजीहरसुमधुरकल हल्लकमालापरिवृतकचकुल वीर॥

**बल्लवेति**। बल्लवानां गोपानां यो लीलासमुदयस्तस्मिन् समुचित योग्य हे। पल्लवरागेणाधरपुटेन विलसित दीप्त हे। वल्लभासु प्रियासु गोपीषु प्रवणित तासां विधेय हे। मुनिगणैः सनकादिभिः शान्तभक्तैर्दुर्लभा केलीभरमधुरिम्णां कणा यस्य। मल्लविहारे बाहुयुद्धेऽद्भुतं तरुणिमानं धरतीति तथा। फुल्लाभिर्मृगाक्षीभिः परिवृतः परिसरो यस्य। चिल्लिविलासेन भ्रूचापलेनार्पितो मनसिजमदः काममत्तता येनार्थाद्युवतिषु। मल्लिकलापानां विचकिलवृन्दानाममलः शुद्धो यः परिमलस्तस्य पद स्थान हे। रल्लकानां मृगविशेषाणां राजिं हरत्याकर्षति तादृशी सुमधुरा कला गान्धर्वविद्या यस्य। हल्लकमालारुणवर्णपुष्पविशेषं स्रक् तया परिवृतं युक्तं कचकुलं यस्य। 'हल्लकं रक्तसंध्यकम्' इत्यमरः। एवं च षट् पद्मप्रभेदा वर्णिताः॥

अथ चम्पककलिकाप्रारम्भे श्लोकः—

बल्लवललनावल्लीकरपल्लवशीलितस्कन्धम्।
उल्लसितः परिफुल्लं भजाम्यहं कृष्णकङ्केल्लिम्॥ ३३॥

**बल्लवेति**। अहं कृष्णकङ्केल्लिं नन्दसुताशोकवृक्षं भजामि। 'कङ्केल्लिरशोकः स्यात्' इति हलायुधः। कीदृशम्। बल्लवललना एव वल्लयस्तासां कररूपैः पल्लवैः शीलितौ स्कन्धौ यस्य तम्। स्कन्धोंऽसः प्रकाण्डश्च। 'स्कन्धः प्रकाण्डे काये च बाहुमूलसमूहयोः' इति विश्वः। परिफुल्लं सहर्षं कुसुमितं च। अहं कीदृशः। उल्लसितः सोल्लासः। श्लेषाङ्कं रूपकमलंकारः॥

चम्पकम्।

चम्पकमिति। चण्डवृत्तभेदे विशिखे चम्पकाख्यः प्रभेदो वर्ण्य इत्यर्थः। तल्लक्षणं च—

'भनाभ्यां कल्पितैरंशैर्युक्तपूर्वादिवर्णकैः।
सानुप्रासैः प्रतियुगमादावन्ते च चम्पकम्॥' इति।

युक्तात्पूर्वं आदिवर्णो येषु तैरित्यर्थः॥

संचलदरुणचञ्चलकरुणसुन्दरनयन कन्दरशयन
बल्लवशरण पल्लवचरण मञ्जुलघुसृणपिङ्गलमसृण
चन्दनरचन नन्दनवचन खण्डितशकट दण्डितविकट-
गर्वितदनुज पर्वितमनुज रक्षितधवल लक्षितगवल
पन्नगदलन सन्नगकलन बन्धुरवलन सिन्धुरचलन
कल्पितमदनजल्पितसदन मञ्जुलमुकुट वञ्जुललकुट-
रञ्जितकरभ गञ्जितशरभमण्डलवलित कुण्डलचलित-
संदितलपन नन्दिततपनकन्यकसुषुम वन्यककुसुम-
गर्भक विरणदर्भकशरण तर्णकवलित वर्णकललित
शं वरवलय डम्बर कलय देव॥

**संचलदिति**। संचरन्ती युवतिहृदयेषु प्रविशन्ती अरुणे चञ्चले करुणे सदये सुन्दरे च नयने यस्य। इतः सप्तपदी स्फुटार्था। दण्डिता विकटा भयदा गर्विताश्च दनुजा येन। पर्विता उत्सविता मनुजा येन। रक्षिता पालिता धवला गावो येन। लक्षितं धृतं गवलं माहिषं शृङ्गं येन। हे पन्नगदलन कालियविमर्दिन्। सन्तं नगं गिरिं कलयति धत्त इति तथा। बन्धुरं रम्यं वलनं वीक्षणं यस्य। हे सिन्धुरचलन गजगामिन्। कल्पितो अनितो मदनो यैस्तादृशानां जल्पितानां वचसां सदन निवास हे। हे मञ्जुलमुकुट कमनीयकिरीटधारिन्। वञ्जुललकुटेनाशोकशाखानिर्मितेन यष्टिना रञ्जितः करभो यस्य। 'वञ्जुलोऽशोके' इति, 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति चामरः। गञ्जितशरभानामष्टापदानां मण्डलः समूहो यया तादृशी वलिता विक्रमो यस्य। 'शरभः कुञ्जरारातिरुत्पादकोऽष्टपादपि' इति हैमः। कुण्डलयोश्चलितेनान्दोलनेन संदितं युक्तं लपनं मुखं

यस्य। 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः। नन्दिता हर्षिता तपनकन्यका भानुपुत्री यमुना यया तादृशी सुषुमातिशोभा यस्य। वन्यकैर्वनोद्भवैः कुसुमैर्गर्भकः केशजूटमध्यधृतः कुसुमगुच्छो यस्य। 'केशमध्ये तु गर्भकः' इति हलायुधः। विरणतां दावाग्निभयेन विक्रोशतामर्भकानां गोपडिम्भानां शरण भयनाशक हे। हे तर्णकवलित वत्सवेष्टित। हे वर्णकललित चतुःसममञ्जुल। 'चन्दनागुरुकस्तूरीकुङ्कुमैः स्याच्चतुःसमम्' इति हैमः। त्वं शं कल्याणं कलय कुरु। हे वरवलय उत्कृष्टकङ्कणधारिन्। हे डम्बर लीलाविस्तारशालिन्।

कलिकान्ते श्लोकः—

दानवघटालवित्रे धातुविचित्रे जगच्चित्रे।
हृदयानन्दिचरित्रे रतिरास्तां बल्लवीमित्रे॥ ३४॥

**दानवेति।** बल्लवीनां मित्रे कृष्णे रतिरास्तां भवतु। कीदृशे। दानवघटाया लवित्रे छेत्तरि। धातुभिर्विशिष्टानि चित्राणि यस्य तस्मिन्। जगति चित्रे विस्मयकरे। 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः॥

श्लोकान्ते बिरुदः—

रिङ्गदुरुभृङ्गतुङ्गगिरिशृङ्गशृङ्गरुतभङ्गसङ्गधृतरङ्ग वीर॥

**रिङ्गदिति।** रिङ्गितो भ्रमन्त उरुभृङ्गाः श्रेष्ठालयो यत्र तस्मिंस्तुङ्गे गिरेः शृङ्गे यः शृङ्गरुतभङ्गो गवलध्वनितरङ्गस्तस्मिन् यः सङ्गोऽभिरुचिस्तेन धृतो रङ्गो विनोदो येन हे तथाभूत॥

अथ वञ्जुलकलिकाप्रारम्भे श्लोकः—

त्वमत्र चण्डासुरमण्डलीनां रण्डावशिष्टानि गृहाणि कृत्वा।
पूर्णान्यकार्षीर्व्रजसुन्दरीभिर्वृन्दाटवीपुण्ड्रकमण्डपानि॥ ३५॥

**त्वमिति।** हे भगवन्, अत्र जगति त्वं चण्डासुरमण्डलीनां गृहाणि रण्डावशिष्टानि विधवाशेषाणि कृत्वा वृन्दाटवीपुण्ड्रकमण्डपानि व्रजसुन्दरीभिः पूर्णान्यकार्षीः कृतवान्। पुण्ड्रको वासन्ती। निहतशत्रुः स्वप्रियाभिर्निश्चिन्ततया विक्रीडितवानस्तीत्यर्थः। 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति' इति मेदिनी॥

वञ्जुलम्।

वञ्जुलमिति। चण्डवृत्तभेदे विशिखे वञ्जुलाख्यः प्रभेदो वर्णनीय इत्यर्थः। तल्लक्षणं च—

'नजलैर्घटितैरंशैर्मधुरोत्तरपञ्चमैः।
निबद्धं वञ्जुलं नाम कलिकावेदिनां मतम्॥' इति।

जय जय सुन्दरविहसित मन्दरविजितपुरंदर निजगिरिकन्दर-
रतिरसशंधर मणियुतकंधर गुणमणिमन्दिर हृदि वलदिन्दिर

गतिजितसिन्धुर परिजनबन्धुर पशुपतिनन्दन तिलकितचन्दन
विधिकृतवन्दन पृथुहरिचन्दनपरिवृतनन्दनमधुरिमनिन्दन-
मधुवन बन्दितकुसुमसुगन्धितवनवररञ्जित रतिभरसंजित
शिखिदलकुण्डलसहकृतभण्डिल नवसिततन्दुलजयिरदमण्डल
रतिरणपण्डित वरतनुभण्डित नखपदमण्डित दशनविखण्डित धीर ॥

**जय जयेति।** हे सुन्दरविहसित, मन्दरेण गोवर्धनेन धृतेन विजितः पुरंदरो येन। निजगिरेर्गोवर्धनाद्रेः कन्दरेषु रतिरसेन शं धरतीति तथा। इतः पराष्टपदी विस्फुटार्था। तस्यां पशुपतिः शिवो बोध्यः। पृथुभिर्हरिचन्दनैर्देवतरुभिः परिवृतं यन्नन्दनमिन्द्रवनं तन्मधुरिमाणं निन्दति तादृशं मधुवनं यस्य। वन्दितैः कुसुमैः सुगन्धितं यद्वनवरं वृन्दारण्यं तेन रञ्जित हे। रतिभरेण तद्वनप्रेमातिशयेन संजित वशीकृत हे। शिखिदलकुण्डलाभ्यां सहकृता भण्डिलाः शिरीषपुष्पाणि येन। 'शिरीषस्तु कपीतनः। भण्डिलः' इत्यमरः। हे पिञ्छकुण्डलार्पितशिरीषपुष्पेत्यर्थः। नवान् सितान् शुभ्रान् तन्दुलान् जयति स्वौज्ज्वल्येनाभिभवति तादृशो रदमण्डलो दन्तवृन्दं यस्य। हे वरतनुषु भण्डित। होरिकोत्सवादिषु कृतभण्डाचरणता तु लज्जाव्यञ्जका। अश्लिष्टभाषिन्नित्यर्थः। तासां नखपदेन नखाङ्केन मण्डित भूषितोरःस्थल हे। तासां दशनै रदैर्विखण्डित क्षताधर हे। हे धीर॥

नन्वन्येऽनेके देवाः शक्रादयो दिव्याङ्गनाभिर्विहरन्ति, किमहमेवं बहुस्तु(?)ये इति चेत्तत्तवाविर्भावेष्वपोवंभावो(?) दुर्लभः। का कथान्येषां देवानामिति कलिकान्तश्लोकेन व्यञ्जयन्नाह—

निनिन्द निजमिन्दिरा वपुरवेक्ष्य यासां श्रियं
विचार्य गुणचातुरीमचलजा च लज्जां गता।
लसत्पशुपनन्दिनीततिभिराभिरानन्दितं
भवन्तमतिसुन्दरं व्रजकुलेन्द्र वन्देमहि ॥ ३६ ॥

**निनिन्देति।** हे व्रजकुलेन्द्र गोकुलपते, भवन्तं त्वां वयं वन्देमहि। कीदृशम्। आभिरुक्तगुणरूपाभिर्निरुपमाभिर्लसत्पशुपनन्दिनीततिभिर्विराजद्गोपकन्यावृन्दैरानन्दितम्। आभिः कीदृशीभिरित्यपेक्षायामाह—यासां श्रियं शोभामवेक्ष्य दृष्ट्वा इन्दिरा वैकुण्ठाधिपतेस्तवैव महिषी श्रीदेवी निजं वपुः शरीरं निनिन्द। व्रजलीलायां तस्यानङ्गीकारात्। अचलजा च तवावतारस्यैव शिवस्य महिषी पार्वती यासां गुणचातुरीं गीतनृत्यादिनिपुणतां विचार्य लज्जां गता व्रीडिताभूत्। तद्गुणचातुर्यास्तत्तौल्याभावादिति भावः। न च परिकरेष्वेव निरुपमता, अपि तु परिणि त्वयि च सास्तीत्याह—अतिसुन्दरमिति। एतच्चोक्तम्—'लावण्यसारमसमोर्ध्वमनन्यसिद्धम्' इति श्रीशुकेन। विशेषस्तु पूर्वपूर्वत्रोक्तो बोध्यः। तथा च निरुपमस्त्वमसि। त्वत्सादृश्यं कुत्रापि नान्यत्रेति भावः॥

अथ श्लोकान्ते बिरुदः—

रसपरिपाटी स्फुटतरुवाटी मनसिजधाटी प्रियनवशाटीहर जय वीर ॥

**रसेति** । रसानां शृङ्गारादीनां परिपाटी अनुक्रमः । 'आनुपूर्वी स्त्रियां चावृत्परिपाटी त्वनुक्रमः' इत्यमरः । स्फुटा पुष्पिता तरुवाटी । मनसिजस्य धाटी च वल्गदाक्रान्तिः । एताः प्रिया यस्य हे तथाभूता नवाः शाटीर्गोपकन्यानां हरतीति । हे तथाभूत । हे वीर त्वं जय ॥

अथ कुन्दकलिकारम्भे श्लोकः—

संभ्रान्तैः सषडङ्गपातमभितो वेदैर्मुदा वन्दिता
सीमन्तोपरि गौरवादुपनिषद्देवीभिरप्यर्पिता ।
आनम्रं प्रणयेन च प्रणयतो हृष्टात्मनाभिष्टुता-
मृद्वी ते मुरलीरुतिर्मुररिपो शर्माणि निर्मातु नः ॥ १७ ॥

**संभ्रान्तैरिति** । हे मुररिपो, ते मुरलीरुतिर्नः शर्माणि सुखानि निर्मातु करोतु । कीदृशी । सषडङ्गपातं शिक्षाद्यङ्गषट्कसहितं यथा स्यात्तथा संभ्रान्तैः सादरैर्वेदैर्वन्दिता । उपनिषद्देवीभिः सीमन्तोपा(प)रि गौरवेणार्पिता । हृष्टात्मना प्रणवेनोङ्कारेण चानम्रं यथा स्यात्तथा प्रणयतोऽभिष्टुता । न चैष वेणुनादमहिमा कविप्रौढोक्तिसिद्धः । 'सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ये पुरनिश्चिततत्त्वाः ॥' इति परब्रह्मानन्दभावेन विधिरुद्राद्यनुभवगोचरत्वस्मृत्या सतः संभवित्वात् ॥

कुन्दम् ।

कुन्दमिति । चण्डवृत्तभेदे विशिखे कुन्दाख्यः प्रभेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—

'भजाभ्यां कल्पितैरंशैः प्रायश्छिन्नैर्द्विशोऽक्षरैः ।
आद्यपञ्चमयोर्युक्तोत्तरितैः कुन्दमुच्यते ॥' इति ।

नन्दकुलचन्द्र लुप्तभवतन्द्र कुन्दजयिदन्त दुष्टकुलहन्त
रिष्टसुवसन्त मिष्टसमु(मु)दन्त संदलितमल्लिकन्दलितवल्लि-
गुञ्जदलिपुञ्जमञ्जुतरकुञ्जलब्धरतिरङ्ग हृद्यजनसङ्ग-
शर्मलसदङ्ग हर्षकृदनङ्ग मत्तपरपुष्टरम्यकलघुष्ट
गन्धभरजुष्ट पुष्पवनतुष्ट कृत्तखलयक्ष युद्धनयदक्ष
वल्गुकचपक्षबद्धशिखिपक्ष पिष्टनततृष्ण तिष्ठ हृदि कृष्ण वीर ॥

**नन्देति** । लुप्ता भवतन्द्रा संसृतिमोहो येन । इतः पदत्रयं स्फुटार्थः(र्थम्) । मिष्टो मधुरः सन् सुन्दर(समु)दन्तो वार्ता यस्य । 'वार्ता प्रवृत्तिर्वृत्तान्तमुदन्तः स्यात्त-

दाह्वयः' इत्यमरः । संदलिता विकसिता मल्लिश्च कन्दलिता जातनवाङ्कुरा वल्लिश्च गुञ्जन्तोऽलिपुञ्जाश्च तैर्मञ्जुतरेष्वतिरम्येषु कुञ्जेषु लब्धो रतिरङ्गो येन । हृद्यानां मनोज्ञानां जनानां सङ्गेन यानि शर्माणि क्रीडासुखानि तैर्लसन्त्यङ्गानि यस्य । हर्षकृत्प्रमोदकार्येनङ्गो यस्य । मत्तस्य परपुष्टस्य पिकस्येव रम्यं कलघुष्टं मधुरकण्ठध्वनिर्यस्य । इतः परा चतुष्पदी स्फुटार्था । यक्षोऽत्र शङ्खचूडः । वल्गौ कचपक्षे केशसमूहे बद्धोऽर्पितः शिखिपक्षश्चन्द्रकावतंसो येन । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । पिष्टा चूर्णिता नतानां तृष्टा(ष्णा) स्वान्यस्पृहा येन । हे कृष्ण, त्वं मे हृदि चित्ते तिष्ठ निवस ॥

अथ कलिकान्ते श्लोकः—

तव कृष्ण केलिमुरली हितमहितं च स्फुटं विमोहयति ।
एकं सुधोर्मिसुहृदा विषविषमेणापरं ध्वनिना ॥ ३८ ॥

**तवेति** । हे कृष्ण, तव केलिमुरली हितं मित्रमहितं रिपुं च ध्वनिना विमोहयति । एकं हितं सुधोर्मिसुहृदा ध्वनिना सुखमूर्छितं करोति । अपरमहितं तु विषविषमेण तेन ध्वनिना भयमूर्छितं करोतीति विरोधाभासोऽलंकारः ॥

श्लोकान्ते बिरुदः—

संनीतदैतेयनिस्तार कल्याणकारुण्यविस्तार ।
पुष्पेषुकोदण्डटङ्कारविस्फारमञ्जीरझङ्कार वीर ॥

**संनीतेति** । संनीतः कृतो दैतेयानां निस्तारो मोक्षो येन । कल्याणरूपः कारुण्यविस्तारो यस्य । पुष्पेषुकोदण्डटङ्कारात्स्मरचापशिञ्जिनीध्वनेरपि विस्फारो मञ्जीरझङ्कारो नूपुरझणत्कारो यस्य ॥

अथ बकुलभासुरकलारम्भे श्लोकः—

रङ्गस्थले ताण्डवमण्डलेन निरस्य मल्लोत्तमपुण्डरीकान् ।
कंसद्विषं चण्डमखण्डयद्यो हृत्पुण्डरीके स हरिस्तवास्तु ॥ ३९ ॥

**रङ्गेति** । स हरिः श्रीकृष्णः, पक्षे सिंहः तव हृत्पुण्डरीके चित्तु(त्ते) शुक्लपद्मेऽस्तु तिष्ठतु । स क इत्यपेक्षायामाह—रङ्गस्थले यस्ताण्डवमण्डलेन मल्लोत्तमपुण्डरीकान् चाणूरादिव्याघ्रान्निरस्य हत्वा कंसद्विषमौग्रसेनिहस्तिनमखण्डयद्व्यदारयत् चण्डमतिकोपनमपि । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥' इति मेदिनी । रूपकाङ्गकः श्लेषः ॥

बकुलभासुरम् ।

बकुलेति । चण्डवृत्तभेदे विशिखे बकुलभासुराख्यः प्रभेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—

'शृङ्खलाबन्धघटितं बकुलं परिचक्षते ।
भासुरं मङ्गलं तुङ्गमिति स्याद्बकुलं त्रिधा ॥'

तुरगं त्विह त्यक्तं बोध्यम् । भासुरलक्षणं चोक्तम्—'मिथः शृङ्खलितैर्बद्धं भासुरं पज्झटीपदैः' इति । षोडशमात्रिका तु पज्झटीत्युक्तम् ॥

जय जय वंशीवाद्यविशारद शारदसरसीरुहपरिभावक-
भावकलितलोचनसंचारण चारणसिद्धवधूधृतिहारक
हारकलापरुचाञ्चितकुण्डल कुण्डलसद्गोवर्धनभूषित
भूषितभूषणचिद्धनविग्रह विग्रहखण्डितखलवृषभासुर
भासुरकुटिलकचार्पितचन्द्रक चन्द्रकलापरुचाभ्यधिकानन
काननकुञ्जगृहस्मरसंगर सङ्गरसोद्धुरबाहुभुजङ्गम
जङ्गमनवतापिच्छनगोपम गोपमनीषितसिद्धिषु दक्षिण
दक्षिणपाणिगदण्डसभाजित भाजितकोटिशशाङ्कविरोचन
रोचनया कृतचारुविशेषक शेषकमलभवसनकसनन्दन-
नन्दनगुण मा नन्दय सुन्दर वीर ॥

**जय जयेति** । हे वंशीवाद्यविशारद वंशीवादनपण्डित । शारदानि शरद्भवानि सरसीरुहाणि पद्मानि परिभवतस्तादृशे भावकलिते साभिप्राये च लोचने संचारयतीति तथा । चारणानां सिद्धानां च या वध्वः स्त्रियस्तासां धृतिं हरति सौन्दर्येणेति तथा । मुक्ताविद्रुमादिहारकलापस्य रुचा कान्त्याञ्चिते पूजिते कुण्ड[ले यस्य] । कुण्डैर्जलाधारैर्लसन्ती या गोवर्धनस्य गिरेरुपत्यकाधित्यका च भूस्तस्यामुषित कृतनिवास हे । 'कुण्डं देवे जलाधारे' इति विश्वः । भूषितं भूषणं येन तादृशश्चिद्धनः सान्द्रविज्ञानमयो विग्रहः स्वरूपं यस्य । 'भूषणभूषणाङ्गम्' इति स्मृतेः, 'सच्चिदानन्दरूपाय' इति श्रुतेश्च । विग्रहेण युद्धेन खण्डितो निहतः खलो वृषभासुरो येन । 'विग्रहः समरे काये' इति विश्वः । भासुरेषु कान्तिमत्सु कुटिलेषु च कचेष्वर्पितश्चन्द्रको येन । चन्द्रकलापस्य शशिवृन्दस्येव या रुचा तयाभ्यधिकमतिचार्वाननं यस्य । काननेषु ये कुञ्जगृहास्तेषु स्मरसंगरो यस्य । सङ्गरसे आलिङ्गनसंभोगे उद्धुरौ दृप्तौ बाहुभुजङ्गमौ यस्य । उपमात्रालंकारः । जङ्गमेन गच्छता नवेन तापिच्छनगेन तमालतरुणोपमा सादृश्यं यस्य । गोपीनां मनीषितसिद्धि[षु] वाञ्छितार्थप्राप्तिषु दक्षिण सरल हे । दक्षिणपाणिगेन दण्डेन लगुडेन सभाजित निवेषित हे । भया कान्त्या जिताः कोटयः शशाङ्कविरोचनाश्चन्द्रसूर्या येन । रोचनया कृतं चारु रम्यं विशेषकं तिलकं येन । शेषादीन्नन्दयन्ति तादृशा गुणाः कारुण्यादयो यस्य । मा नन्दय भक्तिसमृद्धं कुरु । हे सुन्दर ॥

अथ कलिकान्ते श्लोकः—

भवतः प्रतापतरणावुदेतुमिह लोहितायति स्फीते ।
दनुजान्धकारनिकराः शरणं भेजुर्गुहाकुहरम् ॥ ४० ॥

**भवत इति** । हे भगवन्, भवतस्तव प्रतापतरणौ प्रभावसूर्ये उदेतुं लोहितायत्यरुणवर्णे भवति सति । 'लोहितादिडाज्भ्यः क्यष्' इति सूत्रादभूततद्भावे भवत्यर्थे लोहितशब्दात्क्यष् । स्फुटार्थमन्यत् । प्रतापतपनेऽरुणत्वासंभवात् कविप्रौढोक्तिसिद्धो ध्वनिरयम् । प्रतापेति तीव्रता व्यङ्ग्या ॥

श्लोकान्ते विरुदः—

पुलिनधृतरङ्गयुवतिकृतसङ्ग मदनरसभङ्गगरिमलसदङ्ग वीर ॥

**पुलिनेति** । पुलिने धृतरङ्गाभिर्युवतिभिः कृतः सङ्गः समाश्लि(श्ले)षो यस्य । मदनरसभङ्गस्य शृङ्गारानन्दतरङ्गस्य गरिम्णा लसन्त्यङ्गानि यस्य ॥

अथ बकुलमङ्गलकलिकारम्भे श्लोकः—

पशुषु कृपां तव दृष्ट्वा नुतनमिहारिष्टकेशिमुखाः ।
दर्पं विमुच्य भीताः पशुभावं भेजिरे दनुजाः ॥ ४१ ॥

**पशुष्विति** । स्फुटार्थं पद्यम् । लोकविद्वेषफलेन कपटेन तेषां पशुभावधारणादकपटिना त्वया ते लोकद्रोहिणो निहता इति भावः ॥

बकुलमङ्गलम् ।

**बकुलमङ्गलमिति** । चण्डवृत्तभेदे विशिखे बकुलमङ्गलाख्यः प्रभेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—

'द्विशः शृङ्खलितैरंशैर्भाभ्यां बद्धैस्तु मङ्गलम्' इति ।

द्विरुपात्ताभ्यां भगणाभ्यां शृङ्खलितैरंशैरित्यर्थः ॥

त्वं जय केशव केशवलस्तुत वीर्यविलक्षण लक्षणबोधित
केलिषु नागर नागरणोद्धत गोकुलनन्दन नन्दनतिव्रत-
सान्द्रमुदर्पक दर्पकमोहन हे सुषमानवमानवतीगण-
माननिरासक रासकलाश्रित सस्तनगौरवगौरवधूवृत
कुञ्जशतोषित तोषितयौवत रूपभराधिकराधिकयार्चित
भीरुविलम्बित लम्बितशेखर केलिकुलालसलालसलोचन
रोषमदारुणदारुणदानवमुक्तिदलोकन लोकनमस्कृत-
गोपसभावक भावकशर्मद हन्त कृपालय पालय मामपि वीर ॥

**त्वमिति** । हे केशव प्रशस्तचिकुरशालिन्, त्वं जय । हे केशवलस्तुत विधिरुद्रानन्तगदितगुणगण । हे वीर्यविलक्षण वीर्यप्रकृत्यादिनियमनपरिणमन, विश्ववहनलक्षणं तेन विलक्षण । निखिलविसदृशेत्यर्थः । लक्षणैः सामुद्रिकोक्तैः सपूरक्तत्वादिभिः पुराणोक्तैश्च(श्व) पादादिगतैर्ध्वजवज्रादिभिः स्वयं भगवत्वेन बोधित हे । हे केलिषु नागर विदग्ध । ना-

गस्य कालियस्य कुवलयापीडस्य वा रणे उद्धत हे । हे गोकुलनन्दन व्रजहर्षकारिन् । हे नन्दनतिव्रत यद्वा नन्दनतिर्व्रजराजप्रणामो व्रतं येषां तेषु सान्द्रं मुदमर्पयतीति तथा । दर्पकं कामं सौन्दर्येण वैदग्ध्येन च मोहयतीति । सुषमया समाभ्यधिकया शोभया नवं मानवतीगणस्य मानं निरस्यतीति तथा । हे रासकलाश्रित । सस्तनगौरवाभिरुन्नतस्तनीभिर्गौरीभिर्वधूभिर्वृत हे । ताभिः सह कुञ्जशतेषूषित कृतनिवास हे । 'कृत्वा तावन्तमात्मानं यावतीर्व्रजयोषितः । रराम भगवांस्ताभिरात्मारामोऽपि लीलया ॥' इति श्रीशुकोक्तेः । तोषितमाश्लेषादिना तर्पितं यौवतं पूर्वनिर्दिष्टं युवतिवृन्दं येन । तादृशीषु गौरीषु वधूषु मध्ये रूपभरेणाधिकया राधिकयार्चित लब्धवाञ्छितसत्कार हे । भीरुभिस्तत्सखीभिर्ललितादिभिः स्त्रीभिर्विलम्बित जातविलम्ब हे । ताभिः सह क्रीडानिर्भराल्लम्बितः शेखरः शिरोवतंसो यस्य । केलिकुलेनालसे तस्मिन् पुनर्लोलसे सतृष्णे च लोचने यस्य । रोषेण मदेन चारुणेभ्यो दारुणदानवेभ्यो मुक्तिदं लोकनं वीक्षणं यस्य । 'यमिह निरीक्ष्य हता गताः स्वरूपम्' इति स्मृतेः । हे लोकनमस्कृता गोपसभामवति रक्षतीति तथा । भावकेभ्यश्चिन्तकेभ्यः शर्म सुखं ददातीति तथा । हन्तेति हर्षे । हे कृपालय दयानिधान, मामपि पालय । हे वीर ॥

कलिकान्ते श्लोकः—

पराभवं फेनिलवक्रतां च बन्धं च भीतिं च मृतिं च कृत्वा ।
पवर्गदातापि शिखण्डमौले त्वं शात्रवाणामपवर्गदोऽसि ॥ ४२ ॥

**पराभवमिति** । हे शिखण्डमौले पिञ्छावतंसधारिन्, शात्रवाणां रिपूणां पराभवादिपञ्चकं कृत्वा तद्वाचकेषु पदेषु क्रमात्पकारादिपञ्चकयोगेन पवर्गदातापि सन्नपवर्गदः पवर्गदाता न भवसीति विरोधाभासः । तेनाद्भुतस्त्वमसीति व्यज्यते । श्लेषेण पराभवादिपञ्चकादपुरुषार्थाद्वियोज्य मोक्षलक्षणेन परमपुरुषार्थेन योजयसीति महाकारुणिकस्त्वमिति च । अनुकूलमत्रालंकारः । 'अनुकूलं प्रातिकूल्यायति स्यादनुकूलता' इति तल्लक्षणात् । बन्धनादिरूपात्प्रातिकूल्यादपि मुक्तिरूपानुकूल्याल्लक्षणसंगतिः ॥

श्लोकान्ते बिरुदः—

प्रणयभरितमधुरचरित भजनसहितपशुपमुदि(महि)त देव ॥

**प्रणयेति** । प्रणयेन स्वभक्तप्रेम्णा भरितं पूरितं मधुरं चरितं यस्य । 'मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः' इति भगवदुक्तेः । भजनेन सेच(व)या सहिता ये पशुपा गोपास्तैर्महितार्चित हे ॥

द्विविधं बकुलमेकत्वेन संख्यातमित्येकादशभेदा विशिखस्य भवन्ति । एवं च नखविशिखभेदेन द्विरूपस्य चण्डवृत्तस्य वर्धितादयो विंशतिः प्रभेदा वर्णिताः ॥

अथ मञ्जरीनाम्नी द्विगादिगणवृत्तका महाकलिका वर्ण्या । तस्याः प्रारम्भे श्लोकद्वयं निबध्नाति—

नवशिखिशिखण्डशिखरा प्रसूनकोदण्डचित्रशस्त्रीव ।
क्षोभयति कृष्ण वेणी श्रेणीरेणीदृशां भवतः ॥ ४३ ॥

**नवेति** । नूतनचन्द्रकाग्रेत्यर्थः । केवेत्याह—प्रसूनेति । चित्रा । स्मरस्य छुरिकेवेत्यर्थः । 'स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका' इत्यमरः ॥

एवं छविलतामुक्त्वा प्रभावमाह—

अनुभूय विक्रमं ते युधि लब्धाः कांदिशीकत्वम् ।
भित्त्वा किल जगदण्डं प्रपलायांचक्रिरे दनुजाः ॥ ४४ ॥

**अनुभूयेति** । कांदिशीकत्वं भयविद्रुतताम् । 'कांदिशीको भयद्रुतः' इत्यमरः । जगदण्डं भित्त्वा प्रपलायांचक्रिरे । तस्याष्टम आवरणेऽतिगहने तमसि निलिल्यिरे(?) इति भयमतिमहत्तेषामभूदिति भावः । प्रौढोक्तिरियम् । लोकालोकगिर(रि)गुहातमसीति सांप्रतम् ॥

मञ्जर्यां कोरकः ।

मञ्जर्यां कोरक इति । इदमत्र बोध्यम् । द्विगादिगणवृत्त(त्ता)ख्या द्वितीया महाकलिका मञ्जरीत्यभिधीयते । सा च कोरकादिभेदात्पञ्चधा । यदुक्तम्—

'द्विगादिगणवृत्ताख्या कलिकाथ निगद्यते ।
एषा तु कलिकाभिज्ञैः कथ्यते मञ्जरीत्यपि ॥
पञ्चधेयं द्विगादिश्च रादिर्मादिश्च कीर्तिता ।
चतुर्थी स्यान्न कलिका गानाख्यां(ख्या) पञ्चमी मता ॥
कोरको गुच्छकश्चैव संफुल्लं कुसुमं तथा ।
गन्धश्चेति द्विगाद्यादिकलिकाख्याः स्मृताः क्रमात् ॥'

इति चण्डवृत्तोक्तः संयुक्तनियमोऽत्र नास्ति । तत्र प्रथमाया द्विगादिकलिकाया लक्षणम्—द्विगादिकलिकां विदुः इह गणाः । 'शौरे माधव भगवन् मुरहर' इति । आंशिकं तदुदाहरणं च—

मानवतीमदहारिविलोचन दानवसंचयघूकविरोचन ।
डिण्डिमवादिसुरालिसभाजित चण्डिमशालिभुजार्गलराजित ।
दीक्षितयौवतचित्तविलोभनवीक्षित सुस्मितमार्दवशोभन ।
पर्वतसंधृतिनिर्धुतपीवरगर्वतमःपरिमुग्धशचीवर ।
रञ्जितमञ्जुपरिस्फुरदम्बर गञ्जितकेशिपराक्रमडम्बर ।
कोमलताञ्चितवागवतारक सोमललाममहोत्सवकारक ।
हंसरथस्तुतिशंसितवंशक कंसवधूश्रुतिनुन्नवतंसक ।
रङ्गतरङ्गितचारुदृगञ्चल संगतपञ्चशरोदयचञ्चल ।

लुञ्चितगोपसुतागणशाटक संचितरङ्गमहोत्सवनाटक।
तारय मामुरुसंसृतिशातन धारय लोचनमत्र सनातन धीर॥

**मानवतीत्यादि**। मानवतीनां मदहारिणी विलोचने यस्य। दानवसंचया एव घूका उलूकास्तेषां विरोचन हे। घूकानां रविरिव दानवानामतिक्लेषकर इत्यर्थः। 'उलूकः कौशिको घूकः' इति हलायुधः। हर्षभरा डिण्डिमवादिनी या सुरालिर्देववीथी तया सभाजित सत्कृत हे। चण्डिमशालिभ्यां पराक्रमिभ्यां भुजार्गलाभ्यां राजित हे। परिणामोऽलंकारः। दीक्षितानां याज्ञिकानां यानि यौवतानि युवतिवृन्दानि तेषां चित्तानि विलोभयति तादृशं वीक्षितं यस्य। स्वभा[व]सिद्धं यत्सुस्मितं तस्य यन्मार्दवमल्पत्वं तेन शोभते इति हे। यज्ञपत्नीषु गोपितस्थितेत्यर्थः। पर्वतसंधृत्या गिरिधारणेन निर्धुतस्तिरस्कृतः पीवरगर्वतमसा पुष्टाभिमानाज्ञानेन परिमुग्धोऽतिमूढः शचीवर इन्द्रो येन। मञ्जिष्ठया कुसुम्भेन च रञ्जितानि मञ्जूनि परिस्फुरन्त्यम्बराणि यस्य। गञ्जितोऽपनीतः केशिनो हयदानवस्य पराक्रमडम्बरो येन। कोमलताङ्कितां मृद्वीं वाचमवतारयति प्रकटयतीति तथा। सोमललामस्य चन्द्रशेखरस्य शिवस्य महान्तमुत्सवं करोतीति तथा। हंसरथो ब्रह्मा तत्कृतया स्तुत्या शंसितः कथितो वंशो यस्य। कंसवधूनां श्रुतिभ्यो नुन्ना वैधव्यार्पणेनापनीता अवतंसाः कर्णाभरणानि येन। रङ्गे नर्तनस्थाने तरङ्गितौ चारुदृगञ्चलौ यस्य। संगतेन प्राप्तेन पञ्चशरस्य स्मरस्योदयेन चञ्चल हे। लुञ्चिता अपहृता गोपसुतागणस्य शाटका वासांसि येन। संचितानि भक्तैः कविवरैर्विस्तारितानि रङ्गमहोत्सवनाटकानि येन। रङ्गोऽद्भुतज्ञानं तज्जनको महानुत्सवो येषु तानि नाटकानि ग्रन्थविशेषा इत्यर्थः। हे उरुसंसृतिशातन अतिगहनसंसारसिन्धुनाशक तत्कर्णधार, मां तारय तस्य नाशरूपं पारं नय। अत्र मयि लोचनं धारय सकृन्मामवलोकस्व। हे सनातन नित्यमूर्ते॥

कलिकान्ते श्लोकः—

तुरगदनुसुताङ्गग्रावभेदे दधानः
कुलिशघटितटङ्कोद्दण्डविस्फूर्जितानि।
तदुरुविकटदंष्ट्रोन्मृष्टकेयूरमुद्रः
प्रथयतु पटुतां वः कैशवो वामबाहुः॥ ४५॥

**तुरगेति**। केशवस्यायं कैशवो वामबाहुर्वः पटुतां भक्तिनिपुणतां प्रथयतु विस्तारयतु। भक्तिविघ्नं निवारयत्वित्यर्थः। कीदृशः। तुरगाकृत(ते)र्दनुसुतस्य केशिनोऽङ्गग्रावभेदेऽवयवपाषाणविदारणे कुलिशघटितस्य वज्रनिर्मितस्य टङ्कस्य पाषाणदारणस्योद्दण्डविस्फूर्जितान्युत्कटतेजांसि दधानो धारयन्। पुनः कीदृशः। तस्य तुरङ्गदानवस्य या उरुविकटदंष्ट्रास्ताभिरुन्मृष्टाः प्रमार्जिताः केयूरमुद्रा यस्य सः। अनुकूलालंकारः॥

श्लोकान्ते बिरुदः—

माधव विस्फुर दानवनिष्ठुर यौवतरञ्जित सौरभसञ्जित वीर॥

**माधवेति** । हे माधव, त्वं विस्फुर । मे हृदीति शेषः । हे दानवेषु निष्ठुर कठोर । हे यौवतरञ्जित । हे सौरभसज्जित । यौवताङ्गसौरभ्यवशीकृतेत्यर्थः ॥

अथ गुच्छकलिकारम्भे श्लोकः—

पलितंकरणी दशा प्रभो मुहुरन्धंकरणी च मां गता ।
शु(सु)भगंकरणी कृपा शुभैर्न तवाढ्यंकरणी च मय्यभूत् ॥ ४६ ॥

**पलितमिति** । चिरभजनोत्तरमनुतापोऽयम् । हे प्रभो, पलितंकरणी अन्धंकरणी च दशा मां गता प्राप्त। अद्यापि शु(सु)भगंकरणी शुभैराढ्यंकरणी च तव कृपा त्वत्प्रपन्ने मयि नाभूत् । प्रभौ कृपार्दे(र्द्रे) च त्वयि किमेतद्युक्तं वेति भावः । पलितादिषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु करोतेः ख्युन् । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति सूत्रात् । खिदन्तेऽजन्तस्य मुम् । अपलितं पलितंकरोत्यनयेत्यादिर्विग्रहः । पलितंकरणी वृद्धसंपादिका । अन्धंकरणी दृष्टिहीनत्वसंपादिका । सुभगंकरणी तत्सेवोपयोगिदिव्यरूपसंपादिका । आढ्यंकरणी तदुपयोगिसत्यकामत्वादिसंपादिकेत्यर्थः ॥

गुच्छः ।

गुच्छ इति । मञ्जर्यां गुच्छाख्यो भेदो वर्णनीय इत्यर्थः । तल्लक्षणं च—

'अभिज्ञैरादिकलिका गुच्छाख्या विनिगद्यते ।
रनगभ्लन्ललैर्बद्धैरनन्यगणसङ्गिभिः ।
श्लिष्टान्तैरजुषक्तैः स्यात्कलिका रादिरंशकैः ॥' इति ।

इह गणाः 'हे हरे मुररिपो केशिहर बकमथन' इति । आंशिकं तदुदाहरणं च—

जय जलदमण्डलीद्युतिनिवहसुन्दर स्फुरदमलकौमुदीमृदुहसितबन्धुर
व्रजहरिणलोचनावदनशशिचुम्बक प्रचुरतरखञ्जनद्युतिविलसदम्बक
स्मरसमरचातुरीनिचयवरपण्डित प्रणययुतराधिकापटिमभरभण्डित
क्वणदतुलवंशिकाहृतपशुपयौवत स्थिरसमरमाधुरीकुलरमितदैवत
ग्रथितशिखिचन्द्रकस्फुटकुटिलकुन्तल श्रवणनटसंचरन्मणिमकरकुण्डल
प्रथितनवताण्डवप्रकटगतिमण्डल द्विजकिरणधोरणीविजितसिततन्दुल
स्फुरितवरदाडिमीकुसुमयुतकर्णक छदनवरकाकलीहृतचटुलतर्णक धीर ॥

**जय जलदेत्यादि** । प्रायेण स्फुटार्थेयं कलिका । प्रचुरतरा भूयसी या खञ्जनस्य चाञ्चल्यरूपा द्युतिस्तया विलसन्ती अम्बके नेत्रे यस्य । प्रणययुताया राधिकाया यः पटिमभरः प्रावीण्यातिशयस्तेन भण्डित भण्डतां नीत हे । स्थिरेण समरमाधुरीकुलेन रमितानि सुखीकृतानि दैवतानि सुरा येन । गतिमण्डलानि पादसंचारभेदाः । द्विजानां दन्तानां किरणधोरणी कान्तिश्रेणी । छदनानि तालादिपत्राणि विद्यविशेषाकारेण रचितानि

तैर्या वरकाकली तया हृताः समाकृष्टास्तर्णका येन। 'बर्हं पर्णं दलं पत्रं पलाशं छदनं छदः' इति हलायुधः॥

कलिकान्ते श्लोकः—

पुंनागस्तबकनिबद्धकेशजूटः
कोटीरीकृतवरकेकिप्रक्षकूटः।
पायान्मां मरकतमेदुरः स तन्वा
कालिन्दीतटविपिनप्रसूनधन्वा॥ ४७॥

**पुंनागेति**। स कालिन्दीतटविपिनप्रसूनधन्वा वृन्दाटवीकन्दर्पस्तन्वा स्वमूर्त्यैव न त्वन्येन केनचिदर्चिरादिना द्वारा मां पायात्। संसारसागरात् स्वपदं नयत्वित्यर्थः। श्रुतिश्च—'एतद्विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामान्। तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदैव॥' इति। निर्णीतं चैवं विशेषाधिकरणे। स कीदृशः। मरकतमेदुरः हरिन्मणिरिव चिक्कणः। पुंनागस्तबकेन केसरपुष्पगुच्छेन निबद्धः केशजूटो यस्य सः। 'पुंनागः पुरुषस्तुङ्गः केसरो देववल्लभः' इत्यमरः। कोटीरीकृतो मुकुटतया धृतो वरकेकिपक्षकूटः शिखिपिञ्छसँमूहो येन सः। 'आहुः शिरीषमुष्णीषं कोटीरं मुकुटं समम्' इति हलायुधः। 'कूटोऽस्त्री निश्चले राशौ' इति मेदिनी॥

श्लोकान्ते बिरुदः—

गर्गप्रिय जय भर्गस्तुत रससर्गस्थिरनिजगर्वप्रवणित वीर॥

**गर्गेति**। हे गर्गप्रिय, त्वं जय। गर्गः स्वकुलपुरोहितः। हे भर्गस्तुत शिवपरिगीतगुण। 'भीमो भर्गः कृत्तिवासा वृषाङ्कः' इति हलायुधः। रससर्गे स्थिरो यो निजवर्गस्तेन प्रवणित विधेयीकृत हे॥

अथ कुसुमकलिकारम्भे श्लोकः—

दनुजवधूवैधव्यव्रतदीक्षाशिक्षणाचार्यः।
स जयति विदूरपाती मुकुन्द तव शृङ्गनिर्घोषः॥ ४८॥

**दनुजेति**। स्फुटार्थम्। अतिदूरस्था अपि दानवास्ते शृङ्गनादवित्रस्ता म्रियन्त इत्यर्थः॥

कुसुमम्।

कुसुममिति। मञ्जर्यां कुसुमाख्यो भेदो वर्ण्य इत्यर्थः। तत्र लक्षणं च—

'आचक्षते नकलिकां कुसुमाख्यं विचक्षणाः।
नैरेव स्वावधिच्छिन्नैः कॢप्ता नकलिका मता॥' इति।

कुसुमनिकररचितचिकुर नखरविजितमणिजमुकुर।
सुभटपटिमरमितमथुर विकटसमरनटनचतुर।

समदभुजगदमनचरण निखिलपशुपनिचयशरण ।
मुदितमदिरमधुरनयन शिखरिकुहररचितशयन ।
रमितपशुपयुवतिपटल मदनकलहघटनचटुल ।
विषमदनुजनिवहमथन भुवनरसदविशदकथन ।
कुमुदमृदुलविलसदमलहसितमधुरवदनकमल ।
मधुपसदृशविचलदलक मसृणघुसृणकलिततिलक ।
निभृतमुषितमथितकलस सततमजित मनसि विलस वीर ॥

**कुसुमेति** । कुसुमेत्यादिका कलिका प्रायो विशदार्था । नखरैरौज्ज्वल्येन विजिता मणिजा हीरकनिर्मिता मुकुरा दर्पणा येन हे तादृश । 'दर्पणे मुकुरादर्शौ' इत्यमरः । सुभटानां यदुवीराणां पटिम्ना युद्धविद्यानैपुण्येन रमिता हर्षिता मथुरा येन । हे घातितमथुराभूमिप्रतिपक्षेत्यर्थः । मुदितौ सहर्षौ मदिरौ मत्तखञ्जनाविव मधुरे चापल्येन प्रिये नयने यस्य । 'मधुरस्तु प्रिये स्वादौ' इति हैमः । शिखरिणो गिरेः कुहरेषु गह्वरेषु रचितं कान्ताभिः सह शयनं येन । 'कुहरं गह्वरे छिद्रे' इति मेदिनी । भुवनरसदं जगदनुरागार्पकं विशदं स्फुटार्थं कथनं वाक्यं यस्य । औज्ज्वल्येन कुमुदतुल्यं मृदुलं विलसच्च यदमलहसितं तेन मधुरं प्रियं वदनकमलं यस्य । मधुपसदृशा नीलिम्ना भृङ्गतुल्या विचलन्तोऽलका यस्य । निभृतं गूढं यथा स्यात्तथा मुषितो मथितकलसः दधिघटो येन । हे अजित, सततं मम मनसि विलस विक्रीड ॥

कलिकान्ते श्लोकः—

सखिचातकजीवातुर्माधव सुरकेकिमण्डलोल्लासि ।
तव दैत्यहंसभयदं शृङ्गाम्बुदगर्जितं जयति ॥ ४९ ॥

**सखीति** । हे माधव, तव शृङ्गमेवाम्बुदस्तस्य गर्जितं निर्घोषो जयति । तत्कीदृगित्यपेक्षायां विशिनष्टि—सखाय एव चातकाः । सुरा एव केकिनः । दैत्या एव हंसाः । साङ्गरूपकमेतत् ॥

श्लोकान्ते विरुदः—

पुरुषोत्तम वीरव्रत यमुनाद्भुततीरस्थित
मुरलिध्वनिपूरक्रिय सुरभीव्रजनादप्रिय धीर ॥

**पुरुषेति** । हे पुरुषोत्तम बद्धमुक्तनित्यमुक्तोत्कृष्टतमसर्वेश्वर । वीरस्येव व्रतं प्रतिज्ञानिर्वाहलक्षणं यस्य । यदुक्तम्—'तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपा ये स्वात्मयोगेन सोऽयं मे व्रत आहितः॥' इत्यादि । मुरल्यां यो ध्व(यद्ध्व)नेः पूरणं सा क्रिया यस्य । हे वंशीवादनपरायणेत्यर्थः । सुरभीव्रजानां गोसमूहानां यो नादः स प्रियो यस्य॥

एवमिह कोरकगुच्छकुसुमाख्या मञ्जर्यास्त्रयो भेदा वर्णिताः। संफुल्लगन्धौ द्वौ भेदौ तु(ता)विहाय(या)तौ बोध्यौ।

अथ त्रिभङ्गीनाम्नि(म्नी) तृतीया महाकलिकास्ति। तस्याः प्रारम्भे श्लोकद्वयम्—

जगतीसभावलम्बः स तव जयत्यम्बुजाक्ष दोःस्तम्भः।
रभसाद्विभेद दनुजान्प्रतापनृहरिर्यतोऽभ्युदितः॥ ९० ॥

**जगतीति**। हे अम्बुजाक्ष, स तव दोःस्तम्भो जयति। कीदृशः। जगतीसभावलम्बः त्रैलोक्यसदोमण्डपसमाश्रयः। यमाश्रित्य त्रिलोकी वर्तत इत्यर्थः। यतस्तव दोःस्तम्भात् प्रतापनृहरिः पराक्रमनरसिंहः रभसाद्वेगेनाभ्युदितः प्रकटः सन् दनुजान् बिभेद विदारयामास॥

चित्रं मुरारे सुरवैरिपक्षस्त्वया समन्तादनुबद्धयुद्धः।
अमित्रमुच्चैरविभिद्य भेदं मित्रस्य कुर्वन्नमृतं प्रयाति॥ ९१ ॥

**चित्रमिति**। हे मुरारे, चित्रमाश्चर्यमेतत्। किमेतदिति चेत्तत्राह—सुरवैरिपक्षो देवशत्रुगणस्त्वया सह समन्तात् सर्वत्रानुबद्धयुद्धः कृतसंग्रामः। अमित्रमहितं त्वामविभिद्य मित्रस्य स्वहितस्योच्चैर्भेदं कुर्वन् स्वबन्धुगणं नाशयन्नमृतं पीयूषं लभते। पापानुष्ठानेऽपि पुण्यलभ्यस्य पीयूषस्य लाभ इति विरोधाभासः सिद्धः। वास्तवार्थस्तु नित्याविर्भूतहतारिगतिदायकतागुणेन स्वयं भगवता त्वया हतास्तेऽसुराः सूर्यमण्डलं भित्त्वा मोक्षं प्रापुरिति विरोधभङ्गश्च॥

त्रिभङ्ग्यां दण्डकत्रिभङ्गी।

त्रिभङ्ग्यामिति। सामान्यलक्षणं तावदिदम्—

'अथ त्रिभङ्गीवृत्ताख्या कलिका प्रोच्यतेऽधुना।
वृत्तेषु कलिकानां च विशेषे सा स्फुटीभवेत्॥
त्रयाणामिह भङ्गानां समाहारस्त्रिभङ्गिका।
भङ्गोऽनुप्रासरूपेण वर्णावृत्तिरिहेष्यते॥
संयुक्तश्चात्र दीर्घश्च द्वयमेव सतां मतम्।
माला बाला च शाला च मल्ली वल्ली च चिल्लिका॥' इति।

सा खलु षोढा—शिखरिण्याख्या तुरगाख्या दण्डकाख्या भुजङ्गाख्या तिग्माख्या विदग्धाख्या चेति भेदात्। तासु दण्डकाख्या विदग्धाख्या चात्र गृहीता। तत्र दण्डकत्रिभङ्ग्या लक्षणम्—

'दण्डकेषु च सर्वत्र दशमे भङ्ग ईरितः।
तच्चतुर्थात्तच्चतुर्थे तच्चतुर्थात्क्रमादिह॥
यावत्कलाविवृद्धिः स्यात्तावद्भङ्गाः प्रकीर्तिताः।
एतादृशेषु वृत्तेषु त्रिभङ्गीत्युपलक्षणम्।
चतुर्भङ्गी पञ्चभङ्गी षड्भङ्गी चैव कीर्तिता॥' इति।

तत्रार्णवाख्येन दण्डकेन त्रिभङ्गीमुदाहरति—नगणद्वयतो नव चेद्रणा भवन्ति तदार्णवनामाण्डको बोद्धव्यः।

श्रितमघजलधेर्वहित्रं चरित्रं सुचित्रं विचित्रं
फणित्रं समित्रं पवित्रं लवित्रं रुजाम्।
जगदपरिमितप्रतिष्ठं पटिष्ठं बलिष्ठं गरिष्ठं
वरिष्ठं म्रदिष्ठं सुनिष्ठं दविष्ठं धियाम्।
निखिलविलसितेऽभिरामं सरामं मुदा मञ्जुदाम-
न्नभामं ललामं धृतामन्दधामन्नये।
मधुमथन हरे मुरारे पुरारेरपारे ससारे
विहारे सुरारेरुदारे च दारे प्रभुम्।
स्फुरितमिनसुतातरङ्गे विहङ्गेशरङ्गेण गङ्गे-
ष्टभङ्गे भुजङ्गेन्द्रसङ्गे सदङ्गेन भोः।
शिखरिवरदरीनिशान्तं प्रयान्तं सकान्तं विभान्तं
नितान्तं च कान्तं प्रशान्तं कृतान्तं द्विषाम्।
दनुजहर भजाम्यनन्तं सुदन्तं नुदन्तं दृगन्तं
हसन्तं वसन्तं भजन्तं भवन्तं सदा वीर॥

**श्रितमिति**। हे मञ्जुदामन्, हे धृतामन्दधामन्, हे मधुमथन, हे हरे, हे मुरारे, हे दनुजहर, भवन्तं त्वामहं सदा भजामीत्यन्वयः। भवन्तं कीदृशम्। अघजलधेः पापार्णवस्य वहित्रं महानौरूपं चरित्रं श्रितम्। कुर्वाणमित्यर्थः। चरित्रं कीदृक्। सुचित्रमत्याश्चर्यरूपम्। विगता चिज्ज्ञानं येषां ते विचितो ज्ञानहीनास्तांस्त्रायत इति तथा। फणिनं सर्परूपं विद्याधरं त्रायत इति तथा। समितो युद्धात्त्रायते स्मृतं सदिति तथा। पवित्रमविद्यानिवारकम्। गृहमोहजानां रुजां लवित्रं छेदकम्। अथ भवन्तं कीदृशमित्याह—जगत्यपरिमिता प्रतिष्ठा कीर्तिर्यस्य तम्। पटिष्ठमतिनिपुणम्। बलिष्ठं महापराक्रमिणम्। गरिष्ठं गुरुतरं सर्वोपदेशकम्। वरिष्ठं यतो महद्भ्यो महत्तरं तथापि म्रदिष्ठमतिकोमलम्। सुनिष्ठमस्खलितव्रतम्। धियां मालिमानां दविष्ठमतिदूरम्। निखिले विलसिते क्रीडनेऽभिरामं मनोज्ञम्। सरामं साग्रजम्। अभाममरोषणम्। ललामं जगद्भूषणम्। अये इति कोमलामन्त्रणे। पुरारेः शिवस्याप्यपारे ससारे स्थिरांशवति नित्ये विहारे सुरारेरसुरगणस्योदारे महति दारे विदारणे च प्रभुं समर्थम्। पुनः कीदृशं भवन्तम्। इनसुताया भानुपुत्र्यास्तरङ्गे सदङ्गेन स्फुरितं दीप्तम्। कालियं विमर्दितुं यमुनाह्रदेऽवतीर्णमित्यर्थः। 'इनः सूर्यस्तमोध्वान्ततिमिरारिर्विरोचनः' इति धनंजयः। व्यङ्ग्यं बोधयितुं विशिनष्टि—

तत्तरङ्गे कीदृशे। भुजङ्गेन्द्रसङ्गे कालियनागसंसर्गिणि। पुनः कीदृशे। गङ्गेष्टस्यार्णवस्य भङ्गः श्यामलतया गाम्भीर्येण च न्यक्कारो यस्मात्तस्मिन्। सदङ्गेन कीदृशेन। विहङ्गेशो गरुडस्तस्य रङ्गो विस्मयज्ञानं यस्मात्तेन। नित्यं हरिं वहन्नपि गरुडो यदङ्गं पश्यन्विस्मितो भवतीति यद्वाहनात्कालियस्य वित्रासस्तस्य तद्विमर्दनमीषत्करमिति भावः। पुनः कीदृशम्। शिखरिवरस्य गोवर्धनाद्रेर्या दर्यः कन्दरास्तानि निशान्तानि मन्दिराणि यस्य तम्। 'आवासावसथं गृहं च भवनं स्थानं निशान्तं कुलम्' इति हलायुधः। प्रयान्तं तद्रूपेषु निशान्तेष्वभिसरन्तम्। सकान्तं कान्ताभिः सहितम्। विभान्तं सौन्दर्यलावण्याभ्यां विभ्राजमानम्। नितान्तमत्यर्थं कान्तं मनोज्ञम्। प्रशान्तं द्वेषशून्यम्। द्विषां साधुद्वेषिणां कृतान्तं कालस्वरूपम्। तन्मारणस्य सत्पालने तन्मोक्षे च पर्यवसानाद्वेषशून्यत्वम्। अनन्तं व्यापकम्। सुदन्तं मुक्ताप्रभदशनपङ्क्तिकम्। कान्तासु दृगन्तं नुदन्तं प्रेरयन्तम्। हसन्तं हासविकसद्वदनम्। वसन्तमृतुराजं तं भजन्तं सेवमानम्। इदं सप्तपादित्वाद्गाथाच्छन्दः॥

कलिकान्ते श्लोकः—

पीत्वा बिन्दुकणं मुकुन्द भवतः सौन्दर्यसिन्धोः सकृ-
त्कन्दर्पस्य वशं गता विमुमुहुः के वा न साध्वीगणाः।
दूरे राज्यमयन्त्रितस्मितकलाभ्रूवल्लरीताण्डव-
क्रीडापाङ्गतरङ्गितप्रभृतयः कुर्वन्तु ते विभ्रमाः॥ ९२॥

**पीत्वेति**। हे मुकुन्द, भवतः सौन्दर्यसिन्धोर्बिन्दुकणं सकृत्पीत्वा कन्दर्पस्य वशं गताः सन्तः के वा साध्वीगणा न विमुमुहुर्मोहिता न बभूवुः। एवं च सति अयन्त्रितस्मितकलाप्रभृतयस्ते विभ्रमा दूरे राज्यं कुर्वन्तु। त्वत्सौन्दर्यबिन्दुपानेन तेषां(तासां) विमोहे सिद्धे न तैः किंचित्फलमस्तीति विज्ञातव्रजदेवीवैवश्याया वृन्दादेव्या वाक्यमेतत्॥

श्लोकान्ते बिरुदः—

चारुतटरासनट गोपभट पीतपट
पद्मकर दैत्यहर कुञ्जचर वीरवर नर्ममय कृष्ण जय नाथ॥

**चार्विति**। चारुणि मनोहरे यमुनातटे यो रासः क्रीडाविशेषस्तस्मिन्नटतीति हे तथाभूत। गोपाः सखायः श्रीदामादयो भटा योद्धारो यस्य हे तथाभूत। हे पीतपट रविकरगौराम्बर। हे पद्मकर लीलाकमलधारिन्। हे दैत्यहर दितिपुत्रविनाशिन्। हे कुञ्जचर निकुञ्जविहारिन्। हे वीरवर महापराक्रमिन्। हे नर्ममय अतिपरिहासशालिन्। हे नाथ, हे कृष्ण, त्वं जय॥

अथ विदग्धत्रिभङ्ग्याः कलिकायाः प्रारम्भे श्लोकः—

संसाराम्भसि दुस्तरोर्मिगहने गम्भीरतापत्रयी-
कुम्भीरेण गृहीतमुग्रमतिना क्रोशन्तमन्तर्भयात्।

दीप्रे(प्ते)नाद्य सुदर्शनेन विबुधक्लान्तिच्छिदाकारिणा
चिन्तासंततिरुद्धमुद्धर हरे मच्चित्तदन्तीश्वरम् ॥ ९३ ॥

**संसारेति** । हे हरे, संसाराम्भसि विषयवासनारूपेऽगाधे सरसि तापत्रयीकुम्भीरेण आध्यात्मिकादितापत्रयनक्रेण गृहीतं मच्चित्तदन्तीश्वरं मन्मनोगजेन्द्रं सुदर्शनेन त्वमुद्धर । तत्सरसो बहिरानयेत्यर्थः । 'नक्रस्तु कुम्भीरः' इत्यमरः । शोभनदर्शनमेव सुदर्शनस्तन्नामकचक्रं तेनेत्यर्थः । संसाराम्भसि कीदृशि । दुस्तरोर्मिगहने दुस्तरा य उर्मयोऽशनपिपासाशोकमोहजरामृत्युलक्षणाः षट् त एवोर्मयस्तरङ्गास्तैर्गहने । तद्रूपेण कुम्भीरेण कीदृशेन । उग्रमतिना क्रूरबुद्धिना उग्रा मतिर्यस्मात्तेन । हिंसापैशून्यादिहेतुनेत्यर्थः । मच्चित्तदन्तीश्वरं कीदृशमित्याह—अन्तर्भयात् क्रोशन्तं चिन्तासंततिरुद्धमिति च । उभयत्र तुल्यमेतत् । सुदर्शनेन कीदृशेन । दीप्रेण दीप्तिमता । विबुधस्य हूहूगन्धर्वस्य देवलस्य च मुनेर्या मिथः शापकृता क्लान्तिः कुम्भीरगजभावोपलब्धिस्तस्याश्छिदां करोतीति तेन । पक्षे विबुधस्य विरुद्धबोधिनोऽसारेषु विषयेषु सारत्वदर्शिनो मम विषयालाभकृता क्लान्तिस्तस्याश्छिदाकारिणा । विषयतृष्णानिवर्तकेनेत्यर्थः । श्लेषपरम्परिपूरिताङ्गकं साङ्गरूपकमिदम् ॥

विदग्धत्रिभङ्गी ।

विदग्धेति । त्रिभङ्गीकलिकायां विदग्धत्रिभङ्ग्याख्यो भेदो वर्ण्य इत्यर्थः । तल्लक्षणं च—

'द्वितीयाष्टमयोः स्थाने भङ्गश्चैव चतुर्दशे ।
भद्वये साध्वनुप्रासो यत्रैका कलिकेदृशी ॥
न लघ्वन्तगुरुद्वन्द्वत्र्यावृत्तिर्भद्वयं यथा ।
एवमष्टकमारभ्य कला यावत्तु षोडश ।
यस्यामेवंविधं लक्ष्म सा विदग्धत्रिभङ्गिका ॥' इति ।

न लघ्वन्तस्यान्तःस्थितलघुचतुष्टयस्य गुरुद्वन्द्वस्य त्र्यावृत्तिस्त्रिःपाठस्तथा भद्वयं चेति कलायां वर्णाः ।

चण्डीप्रियनत चण्डीकृतबलरण्डीकृतखलवल्लभ बल्लव
पट्टाम्बरधर भट्टारक बककुट्टाक ललितपण्डितमण्डित
नन्दीश्वरपतिनन्दीहितभर संदीपितरससागर नागर
अङ्गीकृतनवसंगीतक वरभङ्गीलवहृतजङ्गमलङ्गिम
ऊर्वीप्रियकर खर्वीकृतखल दर्वीकरपतिगर्वितपर्वत
गोत्राहितकर गोत्राहितदय गोत्राधिपधृतिशोभनलोभन
वन्यास्थितबहुकन्यापटहर धन्याशयमणिचोर मनोरम
शम्पारुचिपट संपालितभवकम्पाकुलजन फुल्ल समुल्लस धीर ॥

**चण्डीति।** हे चण्डीप्रियेण शिवेन नत। चण्डीकृतेनातिकोपं नीतेन बलेन रण्डीकृता वैधव्यं नीताः खलानां वल्लभाः पत्न्यो येन। हे बल्लव गोप। हे पट्टाम्बरधर। हे भट्टारक देव। 'भट्टारकः सुरे राज्ञि' इति विश्वः। हे बककुट्टाक बकासुरनाशक। ललितैः सर्वविद्यामनोज्ञैः पण्डितैर्मण्डित भूषित हे। नन्दीश्वरपतेर्नन्दस्य पितुर्नन्दी समृद्धिकर ईहितभरश्चरितातिशयो यस्य। हे संदीपितरससागर। हे नागर। हे अङ्गीकृतनवसंगीतक। वरभङ्गीलवेन हृतं जङ्गमानां मनुष्याणां लङ्गिमत्वं सौन्दर्यं येन। भावप्रधानोऽयं निर्देशो बोध्यः। हे ऊर्वीप्रियकर पृथिवीसुखकारिन्। 'वसुधोर्वी वसुंधरा' इत्यमरः। गोत्रा गोसमूहस्तस्याहितकर हे। गोत्रेषु कुटुम्बेष्वाहितार्पिता दया येन। गोत्राधिपो गिरिराजस्तस्य धृतौ यत् शोभनं तेन लोभयति जनमनांसीति तथा। वनानां जलानां समूहो वन्या। 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः। तस्यां स्थितानां बह्वीनां गोपकन्यानां पटान्वासांसि हरतीति तथा। तासु कन्याया मुख्याया धन्याया आशयश्चित्तं तद्रूपं मणिं चोरयति मुष्णातीति तथा। 'आशयः स्यादभिप्राये पनसाधारयोरपि' इति विश्वः। हे मनोरम धन्यामनसि कृतक्रीड। हे शम्पारुचिपट। संपालिताः सांमुख्यलेशेन परित्राता भवकम्पेन संसारभयेनाकुला जनो(ना) येन। फुल्ल प्रहर्षशालिन्। त्वं समुल्लस। जयेत्यर्थः॥

कलिकान्ते श्लोकः—

पिष्ट्वा संग्रामपट्टे पटलमकुटिले दैत्यगोकण्टकानां
क्रीडालोठीविघट्टैः स्फुटमरतिकरं नैचिकीचारुकाणाम्।
वृन्दारण्यं चकाराखिलजगदगदंकारकारुण्यधारो
यः संचारोचितं वः सुखयतु स पटुः कुञ्जपट्टाधिराजः॥९४॥

**पिष्ट्वेति।** स कुञ्जपट्टाधिराजो वो युष्मान् सुखयतु। 'पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे। व्रणादिबन्धने पेषाश्मनि' इति हैमः। पटुः स्वपट्टरक्षणे निपुणः। तत्पाटवं प्रदर्शयन्विशिनष्टि—यः संग्रामरूपे पट्टे पेषणपाषाणे क्रीडैव लोठी गोलाकारः संचूर्णनाश्मा तस्या विघट्टैः संचालनैः। दैत्या एव गोकण्टका गोक्षुरकाः। 'गोकण्टको गोक्षुरको वनश्रृङ्गाट इत्यपि' इत्यमरः। तेषां पटलं समूहं पिष्ट्वा संचूर्ण्य संचारोचितं पर्यटनार्हं चकार। तद्रूपे पट्टे कीदृशि। अकुटिले सरले। कूटरहिते चेत्यर्थः। तेषां पटलं कीदृशम्। नैचिकीनां तच्चारुकाणां गोपानां च स्फुटमरतिकरं पीडाजनकम्। यः कीदृक्। अखिलजगतोऽगदंकारो वैद्यः कारुण्यधारा यस्य सः। 'रोगहार्यगदंकारो भिषग्वैद्यो चिकित्सके' इत्यमरः॥

श्लोकान्ते बिरुदः—

पिच्छलसद्घननीलकेश चन्दनचर्चितचारुवेश।
खण्डितदुर्जनभूरिमाय मण्डितनिर्मलहारिकाय वीर॥

**पिच्छेति**। पिच्छेति पदद्वयं स्फुटार्थम्। खण्डिता दुर्जनानां भूरिमाया येन। मण्डितो निर्मलो हारी मनोहरः कायो विग्रहो येन॥

एवं च षड्भेदायास्त्रिभङ्ग्या दण्डकत्रिभङ्गी वि[द]ग्धत्रिभङ्गी चात्र वर्णिता। शिखरिण्यादयश्चतस्रोऽभिधास्तु त्यक्ताः।

अथ चतुर्थीं मध्यकलिकां हित्वा पञ्चमीं मिश्रकलिकां वर्णयिष्यन् तस्याः प्रारम्भे श्लोकद्वयं [पठ]ति—

गीर्वाणं स्फुटमखिलं विवर्धयन्तं
निर्वाणं दनुजघटासु संघटय्य।
कुर्वाणं व्रजनिलयं निरन्तरोद्य-
त्पर्वाणं मुरमथन स्तुवे भवन्तम्॥ ९९॥

**गीर्वाणमिति**। हे मुरमथन, भवन्तमहं स्तुवे। कीदृशं भवन्तम्। दनुजघटासु निर्वाणं मोक्षं संघटय्य नियोज्याखिलं गीर्वाणं सर्वान् देवान् विवर्धयन्तम्। पुनः कीदृशम्। निरन्तरमुद्यन्ति नि(प)र्वाण्युत्सवो यत्र तादृशं व्रजनिलयं कुर्वाणं रचयन्तम्॥

चन्द्रधर्मान् प्रदर्शयन् विशिनष्टि—

उदञ्चदतिमञ्जुलस्मितसुधोर्मिलीलास्पदं
तरङ्गितवराङ्गनास्फुरदनङ्गरङ्गाम्बुधिः।
दृगिन्दुमणिमण्डलीसलिलनिर्झरस्यन्दनो
मुकुन्द मुखचन्द्रमास्तव तनोति शर्माणि नः॥ ९६॥

**उदञ्चदिति**। हे मुकुन्द, तव मुखचन्द्रमा नोऽस्माकं शर्माणि सुखानि तनोति विस्तारयति। उदञ्चतामुदयतामतिमञ्जुलानां स्मितसुधोर्मीणां या लीलास्तासामास्पदमाश्रयः। तरङ्गितः समुच्छलितो वराङ्गनानां स्फुरन्ननङ्गरङ्गाम्बुधिर्यस्मात् सः। दृशो नेत्राण्येवेन्दुमणिमण्डल्यश्चन्द्रकान्तशिलासंहतयस्ताभ्यः सलिलनिर्झरान् स्यन्दतीति सः॥

मिश्रकलिका।

मिश्रकलिकेति। पञ्चमी मिश्रकलिका वर्णनीयेत्यर्थः। तल्लक्षणं च—

'तिलतन्दुलवद्यत्र कलिकागद्ययोर्युतिः।
सा मिश्रकलिका नाम षण्मुखेन प्रकीर्तिता॥
अथ वा मिश्रकलिका नानाविधकलाश्रिता।
विभक्तिसप्तकालम्बिसंबुद्ध्यन्ता बुधैः स्मृता॥' इति।

तत्राद्यामुदाहरति—

दुष्टदुर्दमारिष्टकण्ठीरवकण्ठविखण्डनखेलदष्टापद नवीनाष्टापद-
विस्पर्धिपट्टाम्बरपरीत गरिष्ठगण्डशैलसपिण्डवक्ष:(क्षः)पट्ट, पाटव-

दण्डितचटुलभुजंगम कन्दुकविलसितलङ्घिम भण्डिलविचकिलमण्डित संगरविहरणपण्डित दन्तुरदनुजविडम्बक कुण्ठितकुटिलकदम्बक। खचिताखण्डलोपलविराजदण्डजराजकुण्डलमण्डितमञ्जुलगण्डस्थल विशङ्कटभाण्डीरतटीताण्डवकलारञ्जितसुहृन्मण्डल, नन्दविचुम्बित-कुन्दनिभस्मित गन्धकरम्बित शंदविवेष्टित तुन्दपरिस्फुरदण्डकडम्बर। दुर्जनभोजेन्द्रकण्टककन्दोद्धारणोद्दामकुद्दाल विनम्रविपद्दारुणध्वान्त-विद्रावणमार्तण्डोपमकृपाकटाक्ष शारदाचण्डमरीचिमाधुर्यविडम्बितु-ण्डमण्डल, लोष्ठीकृतमणिकोष्ठीकुलमुनिगोष्ठीश्वर मधुरोष्ठीप्रिय पर-मेष्ठीडित परमेष्ठीकृतनर धीर ॥

**दुष्टेति**। दुष्टो दुर्दमश्च योऽरिष्टो वृषासुरः स एव कण्ठीरवः सिंहस्तस्य कण्ठविख-ण्डने खेलदष्टापद शरभ हे। नवीनमष्टापदं सुवर्णं विस्पर्धते तादृशेन पट्टाम्बरेण परीत वेष्टित हे। 'अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च। अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान्॥' इति मेदिनी। गरिष्ठोऽयं गण्डशैलः पर्वताद्विच्युतो विस्तीर्णस्थूलपाषाण-स्तस्य सपिण्डः सदृशो वक्षःपट्टो यस्य हे तादृश। 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः। पाटवेत्यन्तं गद्यम्। पाटवेन दण्डितश्चटुलो भुजंगमो येन। हे कन्दुक-विलसितेन लङ्घिम मनोहर। भण्डिलेन शिरीषपुष्पेण विचकिलेन च मण्डित हे। संगर-विहरणे युद्धक्रीडायां पण्डित हे। दन्तुरान् विषमानुन्नतदन्तान् वा दनुजान् विडम्ब-यतीति तथा। 'अथ दन्तुरे। उन्नतदन्ते विषमे' इति हैमः। कुण्ठितं मन्दीकृतं कुटिलानां वक्राणां कदम्बकं वृन्दं येन हे तादृश। खचिता आखण्डलोपला इन्द्रनीलमणयो ययो-स्तादृशाभ्यां विराजद्भ्यामण्डजराजकुण्डलाभ्यां मकराकारकर्णाभ्यां मण्डिते मञ्जुनी गण्ड-मण्डले यस्य। अण्डजा मीनास्तेषां राजा मकरः। 'मीनो वैसारिणोऽण्डजः' इत्यमरः। विशङ्कटायां विस्तीर्णायां भाण्डीरतट्यां यास्ताण्डवकलास्ताभी रञ्जितानि सुहृन्मण्डलानि येनेत्येतदन्तं गद्यम्। इतः परा नन्देत्याद्या कलिकाः स्फुटार्थाः। अण्डकडम्बरो ब्रह्मा-ण्डविस्तारः। दुर्जनो भोजेन्द्रः कंसः स एव कण्टकस्तस्य कन्दोद्धारणे मूलोत्खाते उद्दा-मकुद्दाल हे। विनम्राणां भक्तानां विपद एव दारुणध्वान्तानि तेषां विद्रावणे विनाशे मार्तण्डोपमः कृपाकटाक्षो यस्य। शारदस्याचण्डमरीचेश्चन्द्रस्य माधुर्यं विडम्बयति तादृशं तुण्डमण्डलं वदनबिम्बं य[स्ये]त्येतदन्तं गद्यम्। लोष्ठीकृतानि शुष्कमृत्पिण्डतुल्यतया परि-त्यक्तानि मणिकोष्ठीकुलानि यया तादृश्या मुनिगोष्ठ्या ईश्वर तत्तयोपास्यमान हे विरक्त-शिरोमणे इत्यर्थः। मधुरोष्ठीनां बिम्बतुल्याधरभाजां व्रजसुभ्रुवां स्वप्रेमैकतात्पर्याणां परा-वताराणां प्रिय हे। हे परमेष्ठिना ब्रह्मणेडित 'परमेष्ठीकृताः सत्कर्मोत्करैर्ब्रह्मतां नीत(ता) नरा मनुष्या येन हे तादृश। 'यं कामये तं तमुग्रं कृणोति तं ब्रह्माणं तमृषिं तं सुमेधाम्'

इत्यादिश्रवणात्, 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरञ्चतामेति ततः परं हि माम्' इत्यादि श्रीभागवताच्च ॥

अथ कलिकान्ते श्लोकः—

उपहितपशुपालीनेत्रसारङ्गतुष्टिः
　प्रसरदमृतधाराधोरणीधौतविश्वा ।
पिहितरविसुधांशुः प्रांशुतापिञ्छरम्या
　रमयतु बकहन्तुः कान्तिकादम्बिनी वः ॥ ९७ ॥

**उपहितेति** । बकहन्तुर्नन्दसुतस्य हरेः कान्तिकादम्बिनी वो युष्मान् रमयतु । कान्तिरेव कादम्बिनी मेघमाला । सा कीदृशी । उपहितार्पिता पशुपालीनां गोपाङ्गनानां नेत्रसारङ्गेषु नयनचातकेषु तुष्टिर्यया सा । प्रसरन्ती यामृतधाराधोरणी मोक्षप्रवाहश्रेणी सैव जलधाराधोरणी तया धौतं विश्वं यया सा । पिहितौ संवृतौ रविसुधांशू यया सा । कान्तिपक्षे सूर्याद्याः पिधानम् । कादम्बिनीपक्षे तु तयोराच्छादनमेव । तत्प्रांशुतयोच्चत्वेन पिञ्छेन चन्द्रकेण च रम्या कान्तिः । प्रांशव उच्चा ये तापिञ्छास्तमालवृक्षास्तद्वद्रम्यातिश्यामा कादम्बिनीत्यर्थः ॥

अथ वा सामविभक्तिकी कलिका ।

अथ वेति । मिश्रकलिकाया द्वितीयो भेदो वर्ण्य इत्यर्थः । तल्लक्षणं चोक्तं प्राक् ।

यः स्थिरकरुणस्तर्जितवरुणस्तर्पितजनकः संमदजनकः ।
प्रणतविमायं जगुरनपायं घनरुचिकायं सुकृतिजना यम् ।
सुजनकलितकथनेन प्रबलदनुजमथनेन
　प्रणयिषु रतमभयेन प्रकटरतिषु किल येन ।
यस्मै परिध्वस्तदुष्टाय चक्रुः स्पृहां माल्यजुष्टाय
　दिव्याः स्त्रियः केलितुष्टाय कन्दर्परङ्गेण पुष्टाय ।
धृतोत्साहपूराद्द्युतिक्षिप्तसूराद्यतोऽरिर्विदूराद्भयं प्राप शूरात् ।
यस्योज्ज्वलाङ्गस्य संचार्यपाङ्गस्य वेणुर्ललामस्य हस्तेऽभिरामस्य ।
स्मितविस्फुरितेऽजनि यत्र हिते रतिरुल्लसिते सुदृशां ललिते ।
स त्वं जय जय दुष्टप्रतिभय भक्तस्थिरदय लुप्तव्रजभय बीर ॥

**यः स्थिरेति** । विभक्तिसप्तकानन्तरं स त्वं जय जयेत्यन्वयो मृग्यः । स क इत्यपेक्षायामाह—स्थिरा करुणा पितृवात्सल्यलक्षणा यस्य सः । रे मन्दमते जलमण्डूकप, मत्तातं कुतोऽत्रानीतवानसीत्येवं तर्जितो निर्भर्त्सितो वरुणो येन सः । ततो वरुणकृतै-

२१

रपराधक्षमणपूजनादिभिस्तर्पितो जनको व्रजनाथः पिता येन सः । ततः पितरमानीय सर्वेषां व्रजौकसां गोलोकं प्रदर्श्य च संमदजनकः प्रमोदकरः । कृपां प्रकाश्य च वरुणस्य हर्षणः । इति प्रथमा विभक्तिः । सुकृतिजना विद्वांसः पुरुषा यं प्रणतेषु विमायं निरावरणतया गोचरं जगुः कथयन्ति स्म । प्रणता विमाया निष्कपटा यस्य तमित्यन्ये । अनपायं नित्यम् । इति द्वितीया विभक्तिः । येन प्रकटरतिषु प्रणयिषु रतं क्रीडितमिति भावे निष्ठा । येन कीदृशेन । सुजनैः कलितं कथनं चरित्रं यस्य तेन । इति तृतीया विभक्तिः । यस्मै दिव्याः स्त्रियो देववध्वः स्पृहां चक्रुः । 'देव्यो विमानगतयः स्मरनुन्नसारा' इत्यादेः । कीदृशायेत्यपेक्षायामाह—परीत्यादि । स्फुटार्थम् । कन्दर्परङ्गेण स्मरोत्सवेन पुष्टाय प्रहृष्टाय । इति चतुर्थी विभक्तिः । शूराद्विक्रमिणो यतो विदूरादेवारिः कंसो भयं प्राप । यतः कीदृशात् । धृतोऽरिविनाशायोत्साहपूरो येन तस्मात् । द्युत्या क्षिप्तः सूरो रविर्येन तस्मात् । इति पञ्चमी विभक्तिः । यस्य हस्ते वेणुरस्ति । यस्य कीदृशस्य । संचारी तिरः प्रहार्यपाङ्गो नेत्रान्तो यस्य ललामस्य सर्वशिरोमणेः । इति षष्ठी विभक्तिः । यत्र सुदृशां व्रजाङ्गनानां रतिरजनि जाता । यत्र कीदृशीत्याह—स्मितेत्यादि । विस्फुटार्थम् । इति सप्तमी विभक्तिः । स त्वं जय जय परमोत्कर्षमाविष्कुरु । दुष्टेषु प्रतिभय दारुण हे । 'घोरं प्रतिभयं भीमं दारुणं स्याद्भयानकम्' इति हलायुधः । स्फुटमन्यत् । इति संबुद्ध्यन्ताः सप्तविभक्तयः ॥

अथ कलिकान्ते श्लोकः—

हंसोत्तमाभिलषिता सेवकचक्रेषु दर्शितोत्सेका ।
मुरजयिनः कल्याणी करुणाकल्लोलिनी जयति ॥ ९८ ॥

**हंसोत्तमेति** । मुरजयिनः कृष्णस्य करुणाकल्लोलिनी कृपानदी जयति । कीदृशी । हंसोत्तमा ज्ञानिभक्ता एव हंसोत्तमाः श्रेष्ठकादम्बास्तैरभिलषिता, न तु प्राप्ता । सेवकचक्राणि दासभक्तवृन्दानि तान्येव सेवकचक्रा भजमानचक्रवाकास्तेषु दर्शित उत्सेकोऽभिषेको यया सा । तैरवगाह्यमानेत्यर्थः । कल्याणी मङ्गलरूपा । संसारतरुनिर्मूलनीत्यर्थः ॥

श्लोकान्ते बिरुदः—

मित्रकुलोदितनर्मसुमोदित रञ्जितराधिक शर्मभराधिक वीर ॥

**मित्रेति** । मित्रकुलेनोदितैरुक्तैर्नर्मभिः सुमोदित हे । हे रञ्जितराधिक । शर्मभरेण राधिकासङ्गलब्धेनानन्दातिशयेनाधिक निरुपम हे वीर । इति द्विभेदा मिश्रकलिका पञ्चमी वर्णिता ॥

अथाक्षमयी सर्वलघ्वी चेति द्विभेदायाः केवलायाः षष्ठ्याः कलिकायाः प्रारम्भे श्लोकः—

मधुरेश माधुरीमय माधव मुरलीमतल्लिकामुग्ध ।
मम मदनमोहन मुदा मर्दय मनसो महामोहम् ॥ ९९ ॥

**मधुर इति** । हे मधुरेश मथुरानाथ । हे माधुरीमय । हे माधव । हे मुरलीमतल्लिकया प्रशस्तमुरल्या मुग्ध मनोहर । हे मदनमोहन । त्वं मम मनसो महामोहं मुदा स्वतत्त्वज्ञानानन्देन मर्दय विनाशय ॥

अक्षमयी ।

अक्षमयीति । अकाराद्यक्षरान्ता प्रथमभिदा वर्ण्येत्यर्थः ।

अच्युत जय जय आर्तकृपामय इन्द्रमखार्दन ईतिविशातन
उज्ज्वलविभ्रम ऊर्जितविक्रम ऋद्धिधुरोद्धर ॠभुदयापर
ऌदिवत्कृपेक्षित ॡवदलक्षित एधितबल्लव ऐन्दवकुलभव
ओजःस्फूर्जित औग्र्यविवर्जित अंसविशङ्कट अष्टापदपट
कङ्कणयुतकर खण्डितखलवर गतिजितकुञ्जर घनघुसृणाम्बर
ङुतमुरलीरत चलचिल्लीलत छलितसतीशत जलजोद्भवनुत
झषवरकुण्डल ञोङुयितदल टङ्कितभूधर ठनिभाननवर-
डमरघटाहर ढक्कितकरतल णखरधृताचल तरलविलोचन-
थूत्कृतखञ्जन दनुजविमर्दन धवलावर्धन नन्दसुखास्पद
पङ्कजसमपद फणिनुतिमोदित बन्धुविनोदित भङ्गुरितालक
मञ्जुलमालक यष्टिलसद्भुज रम्यमुखाम्बुज ललितविशारद-
वल्लवरञ्जद शर्मदचेष्टित षट्पदवेष्टित सरसीरुहधर
हलधरसोदर क्षणदगुणोत्कर वीर ॥

**अच्युतेत्याद्या** त्रिपदी स्फुटार्था । एषु संहितायां रोचकत्वान्न संधिः । ईतीर्विशातयतीति तथा । ताश्चोक्ताः—'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥' इति । उज्ज्वलो विभ्रमः कान्तिर्विलासो वा यस्य । ऋद्धिधुराभिः संपद्भारैरुद्धर दृप्त हे महालक्ष्मीक । ॠभुषु देवेषु दयापर हे । 'आदित्या ॠभवः स्वप्नः' इत्यमरः । 'भुवः संज्ञान्तरयोः' इति भवतेः संज्ञायां डुप्रत्ययः । ॠशब्दोऽत्र देवमातृवाचकः । 'ॠॠ ज्ञेये देवदानवमातरौ' इत्येकाक्षरकोषः । हे ऌदिव ह्रस्वऌकारवत्कृपेक्षित । स यथा 'कृप'धातौ दृष्टस्तथा त्वं कृपायां दृष्टो भवसीति भावः । शब्दसाम्ये उपमेयम् । 'नित्याव्यक्तोऽपि भगवानीक्षते निजशक्तितः । तामृते परमात्मानं कः पश्येतामितं प्रभुम् ॥' इति स्मरणात् । कृपां विना ॡवदलक्षित हे । दीर्घॡकारो हि न दृश्यते । एधिता वर्धिता बल्लवा गोपा येन । ऐन्दवे चान्द्रमसे कुले भवः प्राकट्यं यस्य । वसुदेवस्य नन्दस्य च यादवत्वात् । ओजसा पराक्रमेण स्फूर्जित विभ्राजमान हे । औग्र्येण चण्डिम्ना विवर्जित हे । 'अरोषणो ह्यसौ देवः' इति नारायणीयात् । असुरेषु रोषस्तु तद्धिते पर्यवसानान्न रोषत्वाय

कल्पते। अंसविशङ्कट हे विशालस्कन्ध। अष्टापदं कनकं तदिव पटो यस्य। हे पीतोत्तरीयेत्यर्थः।' इतस्त्रिपदी स्फुटार्था। घनेन निबिडेन घुसृणेन कुङ्कुमेनाक्तमम्बरमुत्तरीयमुष्णीषं च यस्य। डुता वादिता या मुरली तस्यां रतासक्त हे। 'डुङ् शब्दे' भ्वादिः। चला चिल्लीलता भ्रूवल्ली यस्य। छलितं सतीनां शतं येन। जलजोद्भवेन विरिञ्चेन नुत हे। झषवरौ मकरौ ताविव कुण्डले यस्य। ञोडुयितं पुनः पुनर्वादितं दलं येन। 'डुङ् शब्दे' इत्यस्माद्यङन्तात् कर्मणि यक्। ततः क्तः। टङ्कितेत्युक्तार्थम्। ठनिभेन चन्द्रबिम्बतुल्येनाननेन वर श्रेष्ठ हे। 'ठो महेश्वरे शून्ये बृहद्ध्वनौ चन्द्रमण्डले' इत्येकाक्षरकोषः। डमरघटां मेघमालां हरति दूरीकरोतीति तथा। ढक्किते करतले यस्य। ढक्का वाद्यविशेषः। तत आचारक्किबन्तात् कर्तरि क्तः। सा यथातिशब्दवती तथा भगवत्करतलं महादानकीर्तिशब्दवदिति शब्दवत्तामात्रेण साम्यम्। णखरे वामहस्तकनिष्ठिकाग्रे धृतोऽचलो गिरिर्येन। तरलाभ्यां विलोचनाभ्यां थूत्कृतास्तिरस्कृताः खञ्जना येन। नन्दसुखानामास्पदाधारभूत हे। फणिनः कालियस्य नुतिभिर्मोदित हे। बन्धुभिः सह विनोदिता कौतुकं यस्य। भङ्गुरिताः कुटिलिता अलका यस्य। ललिताः कमनीया विशारदाः सर्वशास्त्रार्थनिपुणा ये वल्लवा गोपास्तेभ्यो रङ्गं ददाति तथा। क्षणद उत्सवदायी गुणोत्करो यस्य। शिष्टानि पदानि स्फुटार्थानि॥

कलिकान्ते श्लोकः—

कर्णे कल्पितकर्णिकः कलिकया कामायितः कान्तिभिः
कान्तानां किलकिञ्चितं किसलयन्कीलालधीः कीर्तिभिः।
कुर्वन्कूर्दनकानि केशरितया कैशोरवान्कोटिशः
कोपी कौकुरकंसकष्टकृतिकः कृष्णः क्रियात्काङ्क्षितम्॥ ६०॥

**कर्ण इति**। कृष्णो नन्दसूनुः काङ्क्षितं वाञ्छितं वः क्रियात् करोतु। कीदृशः। कलिकया गन्धफल्या एकया एकस्मिन् कर्णे कल्पिता कृता कर्णिका कर्णभूषा येन सः। कान्तिभिः कामायितः स्मर इवाचरन्। कान्तानां प्रेयसीनां किलकिञ्चितं भावविशेषं किसलयन्। विवर्धयन्नित्यर्थः। कीर्तिभिः कीलालधीः। यशःसमुद्र इत्यर्थः। केशरितया सिंहभावेन कंसमञ्चोपरि कूर्दनकानि कुर्वन्। कैशोरवान् तरुणः। कोटिशः कोपी पित्रोर्निन्दां श्रुत्वा पुनः पुनरभ्युदितकोपः। कौकुरस्य कुकुरवंशोद्भवस्य कंसस्य कष्टमेव कृतिः प्रयत्नो यस्य सः॥

श्लोकान्ते बिरुदः—

सौरीतटचर गौरीव्रतपरगौरीपटहर चौरीकृतकर वीर॥

**सौरीति**। सौर्या यमुनायास्तटे चरतीति तथा। गौरीव्रतपराणां हेमन्ततौ कात्यायन्यर्चिकानां गौरीणां विद्युद्वर्णानां गोपीनां पटान् हरतीति तथा। 'पटभर' इति क्वचित् पाठः। तासां पटभरे वस्त्रसमूहे चौरीकृतौ करौ हस्तौ येन॥

अथ सर्वलघुकलिकारम्भे श्लोकः—

प्रेमोरुहट्टहिण्डक कक्खटसुभटेन्द्रकण्ठकुट्टाक।
कुरु कौङ्कुमपट्टाम्बर भट्टारक ताण्डवं हृदि मे ॥ ११ ॥

**प्रेमेति**। प्रेम्णा उरुं महान्तं हट्टमापणं हिण्डति गच्छतीति हे। प्रेमाधीनेत्यर्थः। कक्खटानां कठोराणां सुभटेन्द्राणां निपुणयोधानां कण्ठान् कुट्टति चक्रेण छिनत्तीति तथा। 'कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' इत्यमरः। हे कौङ्कुमपट्टाम्बर। हे भट्टारक देव, त्वं मे हृदि ताण्डवं कुरु॥

सर्वलघुः।

सर्वलघुरिति। केवलायाः कलिकायाः सर्वलघुनामा भेदो वर्ण्य इत्यर्थः॥

चरणचलनहतजरठशकट रजकदलन बशगतपरकटक नटनघटन-
लसदगवरकटक सकनकमरकतमयनवकटक कपटरुदित नटद्-
कठिनपदतटविघटितदधिघट निबिडितसुशकट रुचितुलितपुरट-
पटलरुचिरपटघटितविपुलकट कुटिलचिकुरघट रविदुहितृनिकट-
लुठदजरठजटविटपनिचितवटतटपटुतरनट निजविलसितहठविच-
टितसुविकटचटुलदनुजघट जय युवतिषु शठ वीर ॥

**चरणेति**। चरणचलनेन हतो विध्वस्तो जरठः कर्कशः शकटो येन। 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वलोचनकारः। हे रजकदलन माथुररङ्गकारविमर्दिन्। वश[गत]मधीनं परकटकं शत्रुसैन्यं यस्य। नटनघटनेन नृत्ययोगेन लसन्नगवरस्य गोवर्धनाद्रेः कटको नितम्बो यस्मात्। कनकेन स्वर्णेन सहितौ मरकतमयौ नवकटकौ नूतने वलये यस्य। 'त्रिषु। भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्' इति नानार्थवर्गः। उत्सिच्यमानं पयो रक्षितुं मातरि गतायां कपटेनारक्ष्यत्वच्छलेन रुदितं यस्य। तदा कोपावेशान्नटता चपलीभवता कठिनेन कोमलेन पदतटेन चरणप्रान्तेन विघटितः स्फोटितोऽन्तिकस्थो दधिघटो येन। क्वाचित्कीयं लीला। निबिडितो मोक्षानन्देन सान्द्रीकृतः सुशकटस्तदाविष्टोऽसुरो येन। रुच्यातुलितानि पुरटपटलानि येन तादृशेन रुचिरेण पटेन घटितो युक्तो विपुलः कटः श्रेणिर्यस्य। 'कटोऽस्त्री श्रोणिफलकं कटिः श्रोणिः ककुद्मति' इत्यमरः। कुटिलान् कुञ्चितान् चिकुरान् घटयति जूटभावेति तथा। रविदुहितुर्यमुनाया निकटे लुठदजरठजटो विटपैः शाखाभिर्निचितश्च यो वटो भाण्डीराख्यस्तस्य तटे पटुतरनट हे। लुण्ठन्त्योऽजरठाः कोमला जूटा उपमूलानि यस्य सः। 'जटा लग्नकचे मूले' इति विश्वः। निजविलसितेहठेनाग्रहेण विचटितास्तिरस्कृताः सुविकटाश्चटुलाश्च दनुजघटा येन॥

कलिकान्ते श्लोकः—

स्फुटनाट्यकडम्बदण्डितद्रढिमोड्डामरदुष्टकुण्डली।
जय गोष्ठकुटुम्बसंवृतस्त्वमिडाडिम्बकदम्बडुम्बक ॥ १२ ॥

**स्फुटेति**। हे इडाडिम्बकदम्बडुम्बक पृथ्वीचालकनिकरच्छेदिन् कृष्ण, त्वं जय। 'डि विनोदने'। इडां डिम्बयन्ति भारेण चालयन्तीति इडाडिम्बा दैत्याः। त्वं कीदृशः। स्फुटो यो नाट्यकडम्बो नृत्यनवाङ्कुरस्तेन दण्डितो द्रढिम्नोड्डामरः प्रचण्डो दुष्टकुण्डली कालियो येन सः। स्फुटमन्यत् ॥

कलि(श्लो)कान्ते बिरुदः—

रशनमुखर सुखरनखर दशनशिखरविजितशिखर धीर ॥

**रशनेति**। रशनं किङ्किणी मुखरं यस्य। सुखरा अतितीक्ष्णा नखरा यस्य। दशनानां शिखरैरग्रैर्विजितानि शिखराणि पक्वदाडिमबीजाभानि माणिक्यानि जे(ये)न। इति द्विभेदी षष्ठी केवलकलिका वर्णिता। इत्येवमष्टाविंशतिभेदाः सिद्धाः ॥

अथ निखिलकलिकासमाप्तौ श्लोकद्वयम्—

विवृतविविधबाधे भ्रान्तिवेगादगाधे
बलवति भवपूरे मज्जतो मेऽविदूरे।
अशरणगणबन्धो हे कृपाकौमुदीन्दो
सकृदकृतविलम्बं देहि हस्तावलम्बम् ॥ १३ ॥

**विवृतेति**। स्वस्तुत्यातिप्रसन्नं प्रभुमालक्ष्य स्वनिस्तारं प्रार्थयते—हे अशरणगणबन्धो अनाथनाथ, हे कृपाकौमुदीन्दो दयाचन्द्रिकावर्षिन्, भवपूरे संसृतिप्रवाहे मज्जतो मे हस्तावलम्बं देहि। अकृतविलम्बं यथा स्यात्तथा। त्वरयैवेत्यर्थः। अन्यथा ते नामद्वयमर्थवन्न भवेदिति भावः। सकृदेकवारम्। तावतैव मे निस्तारः स्यादित्यर्थः। भवपूरे कीदृशीत्याह—विवृता विस्तृता विविधबाधा मज्जनादिक्लेशा येन तस्मिन्। ननु क्षणं तिष्ठेति चेत्तत्राह—भ्रान्तिवेगादगाधे बलवति च। भ्रान्तिरसारेषु वस्तुषु सारत्वबुद्धिः सैव भ्रान्तिरावर्तस्तस्य वेगादित्यर्थः। बलवति धैर्यादिकूलच्छेत्तरि। तथा च तादृशे तत्र पादौघेन तिष्ठतोऽतस्त्वरयेति। न च मन्निस्तारे ते खेदलेशोऽपीत्याह—अविदूर इति। स्वस्थानस्थित एव मामुद्धरेति भावः। अनुप्रासश्लेषरूपकान्यत्रालंकाराः ॥

पूर्वाभ्यर्थनमेव पुष्यन्नाह—

नामानि प्रणयेन ते सुकृतिनां तन्वन्ति तुण्डोत्सवं
धामानि प्रथयन्ति हन्त जलदश्यामानि नेत्राञ्जनम्।

सामानि श्रुतिशष्कुलीं मुरलिकाजातान्यलंकुर्वते
कामानिर्वृतचेतसामिह विभो नाशापि नः शोभते ॥ १४ ॥

**नामानीति** । हे विभो, ते नामानि सुकृतिनां त्वद्भजनातिकुशलानां प्रणयेन भजताभ्युदितेन प्रेम्णा तुण्डोत्सवं तन्वन्ति। जलदश्यामानि ते धामान्यङ्गत्विषस्तेषां नेत्राञ्जनं प्रथयन्ति । तन्नेत्रेषु तान्यञ्जनवल्लभानीत्यर्थः । मुरलिकाजातानि ते सामानि प्रियवचांसि तेषां श्रुतिशष्कुलीमलंकुर्वते। तानि ते शृण्वन्तीत्यर्थः। इहैषु त्रिष्वर्थेषु नोऽस्माकमाशा वाञ्छापि न शोभते । कुत इत्यपेक्षायां हेतुगर्भं विशेषणम्—कामेति । विषयेच्छादुःखितमनसामित्यर्थः । तथा च शरण्यः कृपालुस्त्वमेवास्मानुद्धरोपलम्भय च तत्रायमिति भावः ॥

एतद्ग्रन्थपाठ उत्तमाधिकारिणमाह—

व्युत्पन्नः सुस्थिरमतिर्गतग्लानिर्गलस्वनः ।
भक्तः कृष्णे भवेद्यः स विरुदावलिपाठकः ॥ १५ ॥
रम्यया विरुदावल्या प्रोक्तलक्षणयुक्तया ।
स्तूयमानः प्रमुदितो वासुदेवः प्रसीदति ॥ १६ ॥
यः स्तौति विरुदावल्या मथुरामण्डले हरिम् ।
अनया रम्यया तस्मै तूर्णमेष प्रसीदति ॥ १७ ॥

**व्युत्पन्न इति** । वासुदेवो विशुद्धसत्त्वाविर्भावी कृष्णः । स्फुटमन्यत् ॥

गोविन्दविरुदावल्या व्याख्यातरि विशारदाः ।
गोविन्दभक्तास्तुष्यन्तु मयि **विद्याविभूषणे** ॥

इति श्रीगोविन्दविरुदावली व्याख्याता ।

---

नमः श्रीकृष्णाय ।

केलिकलाभिर्भक्तान्मेदुरहृद्यः प्रमोदयति चित्रः ।
पोथयति तद्विरुद्धान्स मां पुनीतां सुतो यशोदायाः ॥
नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान्गजपतिरनुकम्पया यस्य ॥
काव्यं सुधारुचिहरं विबुधाः पिबन्तो
यस्यान्यकाव्यमतितिक्तवदुत्सृजन्ति ।
रूपः स नन्दसुतरूपगुणानुरूपः
शस्तं प्रशस्तमसकृन्मम निर्मिमीताम् ॥

भगवल्लीलां वर्णयिष्यन् **श्रीरूपो** भगवन्नामोत्कर्षं मङ्गलमाचरति—

जीयान्नाम मुरारेः प्रेममरन्दस्य नव्यमरविन्दम् ।
भवति यदाभासोऽपि स्वातिजलं मुक्तिमुक्तायाः ॥ १ ॥

**जीयादिति** । कीदृशं नाम प्रेममरन्दस्यारविन्दम् । उच्चारितं सत् प्रेमप्रकाशकमित्यर्थः । ननु तस्य मुक्तिप्रकाशकत्वं श्रुतमिति चेत्तत्राह—यदाभासोऽपि मुक्तिमुक्तायाः स्वातिजलं भवति। स्वात्यम्बुबिन्दुना यथा शुक्तिषु मुक्ता जायते तथा सांकेत्यादिभिरुच्चरितेन नाम्ना जनेषु मुक्तिरित्यानुषङ्गिके सेत्यर्थः । 'सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥' इत्याद्या हि स्मृतयः । विशेषस्तु स्तोत्रे व्याख्यास्यते ॥

वर्ण्यं प्रतीजानीते—

नन्दोत्सवादयस्ताः कंसवधान्ता हरेर्महालीलाः ।
छन्दोभिर्ललिताङ्गैरष्टादशभिर्निरूप्यन्ते ॥ २ ॥

**नन्दोत्सवेति** । स्फुटार्थं पद्यम् ॥

भगवतश्चरित्रं वक्ष्यन्स्ववाचान्तेन भूषणं प्रार्थयते—

दनुजतृणकदम्बोद्दामदावाग्निराशे
कुसुमितरविकन्यातीरवन्याकरीन्द्र ।
मदकलपशुपालीलोचनेदीवरेन्दो
भवतु तव चरित्रं मद्गिरां मण्डनाय ॥ ३ ॥

**दनुजेति** । मदकलानां यौवनमदेन प्रेममदेन च मत्तानां पशुपालीनां लोचनान्येवेन्दीवराणि तेषामिन्दो हे तद्विकासिन् । 'मदोत्कटो मदकलः' इत्यमरः । स्फुटार्थमन्यत् । इह दनुजेत्यसुरमारणम्, कुसुमितेति गोपैः सह क्रीडनम्, मदकलेति गोपाङ्गनाभिः सह विहारश्चेति वर्णनीयानि चरितानि सूचितानि ॥

अथ स्वजिह्वायां रसात्मिकानां लीलानां प्रोच्छलत्प्रवाहतां प्रार्थयति—

मूलोत्खातविधायिनी भवतरोः कृष्णान्यतृष्णाक्षया-
त्खेलद्भिर्मुनिचक्रवाकनिचयैराचम्यमाना मुहुः ।
कर्णानन्दिकलस्वना वहतु मे जिह्वातटीप्राङ्गणे
घूर्णत्तुङ्गरसावलिस्तव कथापीयूषकल्लोलिनी ॥ ४ ॥

**मूलेति** । हे कृष्ण भगवन्नन्दसूनो, तव कथापीयूषकल्लोलिनी त्वल्लीलासुधानदी मे जिह्वातटीप्राङ्गणे रसनामध्ये वहतु प्रस्रवतु । नदीसाधर्म्येण तां विशिनष्टि—कृष्णान्यतृष्णाक्षयाद्भवतो(तरो)र्मूलोत्खातविधायिनी कृष्णान्यतृष्णा खलु संसारवृक्षं प्ररोहयति लीलामृ-

तनदीपानेन तस्याः क्षयात्तस्य प्ररोहः कुत इति । मुनयो नारदादय एव चक्रवाकास्तैः खेलद्भिर्मुहुराचम्यमाना पीयमाना । कर्णानन्दी कलस्वनो यस्याः सा । स चात्र गायकमधुरकण्ठनादः कल्लोलशब्दश्च बोध्यः । घूर्णन्ती तुङ्गा रसावलिर्यस्याः सा । रसाश्चात्र वात्सल्यशृङ्गारवीरहासादयोऽम्बुप्रवाहाश्च बोध्याः ॥

तत्र नन्दोत्सवादिचरितम् ।

तत्रादौ जन्मलीलामाह—

**निजमहिममण्डलीव्रजवसतिरोचनं वदनविधुमाधुरीरमितपितृलोचनम् ।**
**श्रुतिनिपुणभूसुरव्रजविहितजातकं तनुजलदतर्पितस्वजनगणचातकम् ।**
**सुबहुविधदानकृज्जनककृतकौतुकं निखिलपशुपावलीसमुपहृतयौतुकम् ।**
**जनिसमयमण्डितीकृतपुरुषयोषितं रजनिरसगोरसक्षपणजनतोषितम् ।**
**बहुलदधिपङ्किलीकृतविलसदङ्गनं प्रमदभरलोलितप्रकटनटदङ्गनम् ।**
**जनकपरितोषितस्फुरदखिलबल्लवं व्रजजनितपद्मजाविभवभरपल्लवम् ।**
**कपटपटुपूतनाकटुनयनवीक्षितं व्रजभयददुर्जनव्रजनिधनदीक्षितम् ।**
**विषमबकपूर्वजाकुचसविधशायिनं तदसुपरिमिश्रितस्तनजरसपायिनम् ।**
**तदुरुतरविग्रहद्रुमनिवहपातनं पृथुकरिपुराक्षसीविविधभवशातनम् ।**
**निपुणपशुपाङ्गनाकुलकलितरक्षणं प्रणयकृतगोरजःशकृदमललक्षणम् ।**
**स्फुटनिखिलबल्लवीहृदयनवचन्दनं भज चपल मानस व्रजनृपतिनन्दनम् ॥**

**निजेति** । हे चपल मानस, त्वं व्रजनृपतिनन्दनं भजेत्यग्रिमेणान्वयः । राजकुमारसेवया तवाखिलार्थसिद्धिस्तथा चापल्यनिवृत्तिश्च स्यादिति भावः । तं कीदृशमित्यपेक्षायां विशिनष्टि—निजया महिममण्डल्या ऐश्वर्यसंतत्या व्रजवसतिं रोचयति दीप्ताभिप्रायां च करोतीति तम् । एवमाह **श्रीशुकः**—'अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे । कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमागते ॥ तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् । हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप: ॥' इति । स्वाविर्भावात्प्रागपि व्रजे विद्योतोऽभूत्प्राग्रवेरुदितात् प्राच्यामिव तत्प्रकाश इति व्यज्यते । वदनविधुमाधुरीभी रमितानि पितृलोचनानि येन तम् । यन्मुखचन्द्रं वीक्ष्य पित्रोर्महान्मोदोऽभूदित्यर्थः । श्रुतिनिपुणैर्वेदविधिज्ञैर्भूसुरव्रजैर्भागुरिप्रभृतिभिर्विप्रैर्विहितं विधिना कृतं जातकर्म यस्य तम् । एवमाह **श्रीशुकः**—'नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः । आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै । कारयामास विधिवत्पितृदेवार्चनं तथा ॥' इति । इह नन्दौरसत्वं हरेः सुव्यक्तम् । विशेषस्तु पूर्वमुक्तो मृग्यः । तनुजलदेन तर्पिताः स्वजनगणा एव चातका येन

तम् । सर्वे व्रजजना यं वीक्ष्य तृप्तिं जग्मुरित्यर्थः । सुबहुविधानि दानानि करोतीति तादृशेन जनकेन पित्रा कृतानि कौतुकान्युत्सवा यस्य तम् । एवमाह **श्रीशुकः**—'धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते । तिलाद्रीन्सप्त रत्नौघशातकौम्भाम्बरावृतान् ॥' नियुते द्वे लक्षे । विंशतिर्लक्षाणीत्येके । 'सौमङ्गल्यगिरो विप्राः सूतमागधबन्दिनः । गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः । चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥' इत्यादि । सूतादीनां लक्षणान्युक्तानि—'सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । बन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥' इति । निखिलानां पशुपीनां पशुपानां चावलिभिः समुपहृतानि यौतुकान्युपायनानि यस्य तम् । जनिसमये जन्मकाले मण्डितीकृताः पुरुषा योषितश्च येन तम् । एवमाह **श्रीशुकः**—'महार्हवस्त्राभरणकञ्चुकोष्णीषभूषिताः । गोपाः समाययू राजन्नानोपायनपाणयः ॥ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् । आत्मानं भूषयांचक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः । बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः । नन्दालयं सवलया व्रजतीर्[1] विरेजुर्व्यालोलकुण्डलपयोधरहारशोभाः ॥' इति । रजनिर्हरिद्रा तद्रसं सुगन्धतैलमिश्रितं हरिद्राजलं गोरसं च दधिदुग्धं क्षपन्ति मिथः किरन्तीति तादृशैर्जनैस्तोषितम् । 'निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः । तदुत्सवदर्शनलब्धमोदमित्यर्थः । बहुलैर्दधिभिः पङ्क्तिलीकृतानि मणिजटितत्वाद्विलसन्त्यङ्गनानि चत्वराणि येन तम् । यज्जन्मोत्सवे जानुदघ्नदधिकर्दमवन्ति प्राङ्गणानि बभुरित्यर्थः । प्रमदभरैरतिहर्षैर्लोलिताश्चपलिताः प्रकटं नटन्त्योऽङ्गना व्रजस्त्रियो यस्मात्तम् । जनकेन स्वजन्मातिहृष्टेन नन्देन परितोषिताः पारितोषिकैरनर्घ्यैर्वासोभूषणैरनुरञ्जिताः स्ववीक्षानन्देन स्फुरन्तोऽखिला बल्लवा येन तम् । बल्लव्यश्च बल्लवाश्चैकशेषः । एवमाह **श्रीशुकः**—'ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके । हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्यो जनमुज्जगुः ॥ गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः । आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः ॥ नन्दो महामनास्तेभ्यो वासोऽलंकारगोधनम् । सूतमागधबन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् । विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥' इति । तेभ्य इति ताभ्यो गोपीभ्यस्तेभ्यो गोपेभ्यश्चेत्यर्थः । यथोचितमिति पात्रानुसारेणेत्यर्थः । व्रजे जनिताः प्रकाशिताः पद्मजायाः स्वानुरूपाया महालक्ष्म्या विभवभराणां पल्लवा येन तम् । एतेन लक्ष्म्यास्तस्या व्रजजनाभीष्टपूरककल्पवल्लीत्वं व्यज्यते । स्वनाथे कृष्णे प्रादुर्भूते सापि तमन्वागतेति 'हरेर्निवासात्मगुणै रमाक्रीडमभून्नृपः' इत्यनेन व्यज्यते । इति **नन्दोत्सवो** वर्णितः ॥ अथ **पूतनावधमाह—कपटेति** । कृतपुत्रजन्मोत्सवे नन्दराजे वार्षिककरदानाय कंसं प्रति गते सत्येतदन्तरे कंसप्रेरणेन समागतायाः कपटपटोः प्रकाशितकृत्रिमातिमनोहररूपायाः कृत्रिमातिवात्सल्यायाः पूतनायाः कटुभ्यां तीक्ष्णाभ्यां

---

१. व्रजतीः 'व्रजन्त्यः' इत्यर्थः. आर्षः प्रयोगः.

नयनाभ्यां वीक्षितं दृष्टम् । न च पूतनातो भक्तैर्भेतव्यम् । सर्वानपि दुष्टान्यन्नन्दबालो हनिष्यतीति भावेन विशिनष्टि—व्रजभयदानां दुर्जनव्रजानां निधने विनाशे दीक्षितं धृतव्रतम् । विषमाया विषदानेन विजिघांसोर्बकपूर्वजाया बक्याः पूतनायाः स्तनसविधे शेते तच्छीलस्तम् । धात्रीभावं प्रकाशयन्त्या तदम्बामवजानन्त्या बक्या पर्यङ्कादुत्थाप्याङ्के धृतं तां निहन्तुं तत्रैव मुद्रितनेत्रतया शयानमित्यर्थः । ततः किं चकार तत्राह—तदसुभिः पूतनाप्राणैः परिमिश्रितं तस्याः स्तनजरसं पिबति तच्छीलस्तम् । तस्याः प्राणैः सह स्तन्यं पपौ । सा ममारेत्यर्थः । तस्या उरुतरः पर्वताकारो यो विग्रहः कायस्तेन स्वसदनाद्बहिः क्षिप्तेन द्रुमनिवहान् षट्क्रोशमध्यस्थितान् कंसोपवनवृक्षान् पातयति चूर्णयति तदुरसि खेलन् सन्निति तम् । एवमाह **श्रीशुकः**—'पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् । चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम् ॥ बालं च तस्या उरसि क्रीडन्तमकुतोभयम् । गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥' इति । पूतनायै धात्रीवेशमात्रेण तुष्टो मुक्तिं ददावित्याह—पृथुकरिपुरनेकबालघ्नी या राक्षसी बकी तस्या विविधोऽतिनिबिडो यो भवः संसारस्तं शातयति छिनत्तीति तम् । एवमा**होद्धवः**—'अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥' इति । पूतनाविनाशेन कंसारामविध्वंसनेन च कंसमारणेऽस्य मङ्गलाचरणं कृतमिति द्योतितम् । निपुणानां शास्त्रविधिविज्ञानां पशुपाङ्गनानां कुलेन वृन्देन कलितं विहितं रक्षणं यस्य तम् । कथमित्याह—प्रणयेन प्रेम्णा कृतं गोरजसा गोशकृता च गोमयेनामललक्षणं तत्तदङ्गेषु चिह्नं यस्य तम् । एवमाह **श्रीशुकः**—'यशोदारोहिणीभ्यां ताः समं बालस्य सर्वशः । रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥ गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् रक्षां च चक्रुः शकृता द्वादशाङ्गेषु नामभिः ॥' इत्यादिना । स्फुटेति विस्फुटार्थम् ॥

नन्दसूनोः पादाब्जभक्तिमहिमानमाह—

> तव जयति नन्दनन्दन पदारविन्दोरुभक्तिमकरन्दः ।
> ज(य)न्माधुरीलवाग्रे मुक्तिसुखं शुक्तितामेति ॥ ५ ॥

**तवेति** । हे नन्दनन्दन व्रजराजात्मज, तव पदारविन्दसंबन्धी उरुर्भक्तिमकरन्दो जयति निखिलोत्कृष्टो वर्तते । उत्कर्षमाह—यदिति । शुक्तितामिति । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः । स्वसुखप्रधाना मुक्तिरियं बोध्यैवं व्याख्यानात् ॥

गुच्छकमिदं[1] छन्दः ।

**गुच्छकमिति** । 'नगणसगणाङ्कितो जनजगुरुसंयुतो भवति किल गुच्छको वसुयतिविभूषितः ।' इति प्राकृतपिङ्गलाद्यनुसारिदुर्गेश्वरविरचितं लक्षणम् ॥

---

१. इदं गुच्छकच्छन्दोऽनन्तरागतमहापद्यस्य. एवमग्रेऽपि.

अथ शकटतृणावर्तभङ्गादि ।

वर्णनीयं शकटभङ्गं संक्षेपतस्तावद्वर्णयंस्तद्भञ्जके कृष्णे रतिं प्रार्थयते—

मम मतिरुच्चलचरणे भगवति पर्यङ्किकाशयिते ।
कपटक्रन्दितकुशले शकटविघट्टिनि परिस्फुरतु ॥ ६ ॥

**ममेति** । मम मतिर्भगवति परिस्फुरतु । कीदृशि । पर्यङ्किकायां शकटाधःप्रसारितायां शयिते । ऊर्ध्वं चलन्तौ चरणौ यस्य तस्मिन् । कपटेन स्तानपेक्ष्यत्वछद्मना यत् क्रन्दितं तस्मिन् कुशले निपुणे । शकटमतिदृढं महाभारपूर्णमपि प्रवालमृदुपादस्पर्शेण विघट्टयति संचालयत्यपि दूरे निक्षिपतीति तस्मिन् ॥

शकटभङ्गलीलां वर्णयति—

औत्थानिकमहसंकुलिताम्बक शकटाधस्तनशयनालम्बक ।
कुचरसतृष्णाविरचितरोदन चञ्चलपदकृतशकटविनोदन ।
विस्मितपशुपसुदुर्गमचेष्टित कथितनिजेहितशावकवेष्टित ।
कातरजनकीजनकगतान्तिक मान्त्रिकधरणीसुरकृतशान्तिक ।
जननीदुर्वहगौरवविग्रह सपदिविधित्सितदनुजविनिग्रह ।
दनुतनयेन क्षणमपवाहित कण्ठतटीग्रहनिर्मथिताहित ।
विक्लवजननीनिर्भरशोचित विरुदद्गोपीकुलपरिलोचित ।
निर्मितजननीबन्धुमहोदय मामपि गोकुलमङ्गल मोदय ।
नवशिशुलीलालङ्घितहायन गर्गाविष्कृतनामरसायन ।
रिङ्गणमण्डितनन्दनिकेतन मधुरिमतर्पितगोकुलचेतन ।
चलतरतर्णकपुच्छविकर्षण विस्मृतगृहकृतिरमणीहर्षण ।
कुतुकिन्नसमयवत्सविमोचन चौर्यविशङ्कितचञ्चललोचन ।
आक्रोशनकृतहसिताडम्बर मुखपाटवकृतलुञ्चनसंवर ।
रचितोलूखलपृष्ठविराजन रन्ध्रितशिक्यस्थितवरभाजन ।
गव्यविनिर्मितकपिकुलरञ्जन कल्पितनवदधिहण्डीभञ्जन ।
जननीवीक्षितसभयविलोचन जय जय गोकुलपद्मविरोचन ।
रामप्रकटीकृतमृद्भक्षण जननीसंमुखधृतभयलक्षण ।
मुखपुटदर्शितनिखिलचराचर गोपेश्वरसुत मयि मुदमाचर ॥

**औत्थानिकेति** । 'समासविग्रहं कृत्वा संबुद्ध्यन्ताः क्वचिन्मया । संक्षेपसिद्ध्यै न

कृताः कल्प्यास्तेऽत्र सु[बु]द्धिभिः ॥' हे गोपेश्वरसुत, त्वं मयि मुदं हर्षमाचर मां सहर्षं कुर्वित्यन्तिमेनान्वयः । औत्थानिकमहेन पार्श्वपरिवर्तनोत्सवेन संकुलिता व्यापिताम्बा जननी येन हे । महोत्सवसमागतव्रजसीमन्तिनीसत्कारव्यग्रमातृकेत्यर्थः । शकटस्याधस्तनं शयनं लघुविचित्रपल(ल्य)ङ्कमालम्बते तदुपरि शेते इति । वादित्रगीतद्विजमन्त्रैरभिषिक्तं दिव्यान्नवासोभूषणार्पणपूजितैर्विप्रैः कृतस्वस्त्ययनं संजातनिद्रं यं शकटाधःप्रसारिते पर्यङ्के माता स्वापयामास हे तथाभूतेत्यर्थः । ततो जनन्यां समागतव्रजजनसत्कारव्यग्रायां सत्यां कुचरसतृष्णया तत्स्तन्यवाञ्छया विरचितं रोदनं येन । एवमाह **श्रीशुकः**—'औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः । नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ॥' इति । चञ्चलेन पल्लवमृदुना पदेन कृतं रसनिभृतबहुभाजनगरिष्ठस्य शकटस्य विनोदनं भञ्जनं येन । एवमाह **श्रीशुकः**—'अधःशयानस्य शिशोरकल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्तत' इत्यादि । कथमेतदेवमभूदिति विस्मितैः पशुपैः सुदुर्गमं चेष्टितं यस्य । पशुप्यो यशोदादयो गोप्यः पशुपाश्च नन्दादयो गोपा इत्येकशेषः । एतेन बालकमुकुन्देनैतच्छकटं विपरिवर्तितमिति कथितनिजेहितैरुक्तात्मचेष्टितैस्तत्र स्थितैः शावकैः शिशुभिर्वेष्टित हे । बालवाक्यमप्रमाणमिति तदगृहीत्वा ग्रहशङ्कया कातराभ्यां जनकीजनकाभ्यां गतं प्राप्तमन्तिकं सांनिध्यं यस्य । ततो मान्त्रिकैर्धरणीसुरैर्विप्रैः कृता शान्तिर्विघ्ननिवृत्तिर्यस्य येन वा विप्रकृतस्वस्त्ययनं यं प्रसूः स्तन्यं ददौ । येन प्रेरकेण भग्नस्य शकटस्य गोपमुख्यैरवस्थानं ग्रहशान्तिपूर्वकं विप्रैर्दध्यक्षतादिना पूजनं चाभूदित्यर्थः । इति **शकटाविष्टदैत्यवधो** वर्णितः ॥ अथ **तृणावर्तदैत्यवध**माह—**जननीति**। जनन्या दुर्वहो गिरिरिव गौरववान् विग्रहो यस्य। दैत्येन मातुः क्लेशो माभूदिति ततः पृथग्भवितुं गौरवाविष्कार इति भावः । किमर्थमेतदिति चेत्तत्राह—सपदि त्वरया विधित्सितश्चिकीर्षितो दनुजस्य तृणावर्तस्य विनिग्रहो नाशो यस्य । तेन किंचित्स्वकार्यं चादौ साधनीयमिति भावेन चेष्टितमाह—दनुतनयेन तृणावर्तेन क्षणमपवाहित हे । स्वलीलास्थानानि वीक्षितुं तमारुह्योपरि गतेत्यर्थः । तत्र तानि वीक्ष्य कण्ठतटीग्रहेण निर्मथित आस्थानीस्थितायां शिलायां निःक्षिप्य मारितोऽहितः शत्रुर्येन । तदा विक्लवया पुत्रमवीक्ष्य विह्वलया जनन्या निर्भरं शोचित हे । क्व गतः केन नीतो मे शिशुः कथमहं भवेयमिति तस्याः शोकविषयेत्यर्थः । तदा विरुदतीनां गोपीनां प्रतिवेशिनीनां कुलेन परिलोचित दैत्योरसि निर्भयक्रीडतया दृष्ट हे । निर्मितो जनन्या बन्धूनां च महोदयो येन मारितदैत्येन कल्याणवता चानीयमात्रे दत्तेन हे तथाभूत । हे गोकुलमङ्गल मामपि जनन्यादिमिव मोदय । इति **तृणावर्तवधो** वर्णितः ॥ **चरितान्तर**माह—नवया शिशुलीलया लङ्घितो हायनो वत्सरो येन । ततो मधुपुर्याः समागतेन व्रजेशाभ्यर्चितेन गर्गेणाविष्कृतं नामरसायनं कृष्णादिनामधेयं यस्य । ततो रिङ्गणेन सपाणिभ्यां जानुभ्यां गमनेन मण्डितं नन्दस्य पितुर्निकेतनं गृहं येन । 'वि(वे)श्म सद्म निकेतनम्' इत्यमरः । मधुरिम्णा तर्पिता गोकुलचेतना व्रजौकसो येन ।

अथ पद्यामेव रिङ्गतोऽतिचापल्यमाह—चलतराणां तर्णकानां वत्सान्(नां) पुच्छान् विकर्षति तैराकृष्यमाणः सन्निति तथा। तदा भगवत्सौन्दर्यातिचापल्यदर्शनेन विस्मृता गृहकृतयो याभिस्ता मिथो हसन्ती रमणीर्हर्षयति तच्चरितैरिति तथा। हे कुतुकिन् धेनुवत्सवात्सल्यदर्शिन्, असमये दोहनानवसरे वत्सान् विमुञ्चतीति तथा। अथ दधिनवनीतचौर्यलीलया गोपीष्वतिस्नेहमाह—दध्यादिचौर्येण विशङ्किते कश्चिन्मां विद्याद्गृह्णीयाच्चेति सभये चञ्चले च लोचने यस्य। हे चन्द्रानन हे कृष्ण, किमेवं चापल्यं तनोषीति गोपीनामाक्रोशने सति कृतो हसिताडम्बरः साधुशिरोऽवतंसं मामेताश्चौरं वदन्तीति हासविस्तारो येन। चौर्यदोषविमार्जनं कथं स्यात्तदाह—मुखपाटवेन शोभनमुखमुद्रया कृतो लुञ्चनसंवरः स्वचौर्याच्छादनं येन। हस्ताप्राप्येषु दध्यादिषु कमुपायमयं कुर्यादिति तानि शिक्येषु निधाय गृहकर्मनिरतासु गोपीषु तद्ग्रहाय रचितमुलूखलस्य पृष्ठे विराजनमवस्थानं येन। रन्ध्रितानि छिद्रितानि शिक्यस्थितानि वरभाजनानि येन। गव्येति पदद्वयं स्फुटार्थम्। एवमाह **श्रीशुकः**—'वत्सान्मुञ्चन्क्वचिदसमये क्रोशसंजातहासः स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पितैः स्तेययोगैः। मर्कान्भोक्ष्यन्विभजति स चेन्नात्ति भाण्डं भिनत्ति द्रव्यालाभे सगृहकुपितो यात्युपक्रोश्य तोकान्॥' इत्यादि। तच्चापलोपालम्भदित्सया गताभिस्तं दिदृक्षुभिर्गोपीभिर्निवेदिततच्चापलया जनन्या तमुपालब्धुमशक्तया यशोदया वीक्षिते सापराधत्वात्सभये विलोचने यस्य क्रीडित्वा गृहमागतस्य हे तथाभूत। हे गोकुलपद्मविरोचन व्रजारविन्दविकाशकभानो, त्वं जय जय। सत्त्वेन ज्ञातमपि मत्पारमैश्वर्यं वीक्ष्य मन्माता निर्भयास्त्विति मृद्भक्षणप्रसङ्गेन स्वस्य तत्प्रदर्शयामासेत्याह—रामेण सखिमुख्येन प्रकटीकृतं मृद्भक्षणं यस्य तदपलपत इति हे तथाभूत। हे आदन्तात्मन्, नवनीतानि सशर्कराणि हित्वा कथं मृत्तिकामत्सीति खिद्यमानाया जनन्याः संमुखे धृतं भयलक्षणं संकुचितनेत्रत्वसकम्पत्वरूपं येन। नाहमम्ब भक्षितवान्मृत्तिकां त्वं पश्येति व्यादत्ते मुखपुटे दर्शितानि पूर्वमेव स्थितानि निखिलानि चराचराणि येन। मत्पुत्रस्यायं प्रभाव इति जननीविज्ञातपारमैश्वर्येत्यर्थः। एवमाह **श्रीशुकः**—'किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः। अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः॥' इत्यादि॥

चारुत्वाद्दधिहरणलीलां पुनराह—

> गृहं सखि करालिके प्रविशति स नीलः शिशु-
> र्दृढीकुरु कवाटिकां दधिहरं दधाम्युद्धुरम्।
> इति प्रकटमीरिते मुखरया महाशङ्कटं
> विलोक्य तनुकङ्कटीकृततमा हरिः पातु वः॥ ७॥

**गृहमिति**। मुखरा श्रीराधाया मातामही कराला चन्द्रावल्या मातामही इति पूर्ववर्णिते पद्यार्धे मुखरया स्फुटमुक्ते सति लग्नकपाटाद्गृहादस्मात्कथं मे विनिर्गमः स्यादिति

महाशङ्कटं विलोक्य तत्रान्यमुपायमवीक्ष्य तनौ कङ्कटीकृतं कवचतां नीतं तमो येन सः । तद्गम्भीरगृहान्धकारे निलिल्ये । सा तं न ददर्शेत्यन्ये । कौतुकाय मयात्रा[गत]मिति हसन्तं तत्रोपलभ्य तेन सह कौतुकानि कृत्वा नवनीतं भक्षयामासेति चैके ॥

## कोरकाख्यमिदं छन्दः ।

**कोरकाख्यमिति** । 'षोडशकलचरणं भुवि संप्रति मोदविवर्धकमखिलजनं प्रति । शेषय मकलघुयुगलमनोहरमतिरुचिकोरकसंज्ञमुदाहर ॥' इति तदनुसारि तद्विरचितम् । अखिलसंज्ञमिदमन्यत्र ॥

अथ यमलार्जुनभञ्जनम् ।

नवनीतहरणं दामबन्धनादिरूपं मातरि चापल्यं हरेश्चरितं वर्णयितुं सूचयति—

इन्द्रनीलमधुरप्रभं जनं हासयन्तमनसः प्रभञ्जनम् ।
बिभ्रतं पुरटपिङ्गलं पटं धेहि चित्त नवनीतलम्पटम् ॥ ८ ॥

**इन्द्रेति** । हे चित्त, त्वं नवनीतलम्पटं कृष्णं धेहि स्वस्मिन् धारय । तवापि नवनीतलाभो भावीति भावः । 'दधिसारं नवनीतम्' इति हलायुधः । कीदृशम् । इन्द्रनीलस्येव मधुरा प्रभा यस्य तम् । जनं व्रजवासिनम् । जात्यैकवचनम् । विविधैर्विनोदैर्हासयन्तम् । अनसः शकटस्य प्रभञ्जनम् । कर्तरि ल्युः । पुरटपिङ्गलं स्वर्णवर्णं पटं बिभ्रतम् । पादान्तयमकमेतत् ॥

धृतदधिमन्थनदण्ड जननीचुम्बितगण्ड
पीतसवित्रीदुग्ध कलभाषितकुलमुग्ध ।
जननीपयसा तृप्त भाजनभञ्जनदृप्त
कृतहैयंगवमोष मातृविनिर्मितरोष ।
जनयित्रीकृतधाव मुनिगणदुर्लभभाव
विदितसवित्रीपील परिहृतधावनलील ।
धृतहैयंगवगन्ध कलितोलूखलबन्ध
दृष्टार्जुनतरुमूल सुरमुनिवागनुकूल ।
कृतयमलार्जुनभङ्ग गुह्यकनुतिधृतरङ्ग
निजभक्तीकृतयक्ष माधव मामपि रक्ष ।
विस्मितबल्लवदृष्ट सुस्मितमुखपुट हृष्ट
नन्दविमोचितबन्ध जय जय मङ्गलकन्द ॥

**धृतेत्यादि**। हे माधव, त्वं मामपि पक्ष। हे मङ्गलकन्द, त्वं जय जयेत्यन्तिमेनान्वयः। धृतो गृहीतो दधिमन्थनदण्डो मन्था येन स्तन्यार्थिनेति तथा। 'तां स्तन्यकाम आसाद्य मथ्नतीं जननीं हरिः। गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन् ॥' इति **श्रीशुकोक्तेः**। जनन्या त्यक्तदधिमन्थनया चुम्बितौ गण्डौ यस्याङ्के निहतस्येति तथा। ततः पीतं सवित्र्या मातुर्दुग्धं येन। 'सवित्री जननी माता' इति धनंजयः। कलभाषितानां कुलेन मुग्ध हे। मात्रा सह कृतमधुरसंवादेत्यर्थः। जनन्याः पयसा तृप्त हे। स्वपुत्रपेयस्य गोदुग्धस्योत्सिच्यमानस्य संभालनाय तस्यागमनादिति भावः। मां हित्वा त्वं गतासि, त्वद्गृहेऽर्थनाशं करिष्यामीति भाजनानां दध्यादिपात्राणां भञ्जने दृप्त हे। कुतः स्वयं भोक्तुं कपिभ्यश्च प्रदातुं हैयंगवानां नवनीतानां मोषश्चौर्यं येन। मातरि विनिर्मितः कृतो रोषो ज(ये)न। एवमाह **श्रीशुकः**—'तमङ्कमारूढमपाययत्स्तनं स्नेहस्नु(स्नु)तं सस्मितमीक्षती मुखम्। अतृप्तमुत्सृज्य य(ज)वेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ स जातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमण्डभाजनम्। भित्त्वा मृषाश्रु दृषदश्मना रहो जघास हैयंगवमन्तरं गतः ॥' इत्यादि। ततः समागत्यार्थध्वंसं पश्यन्त्या जनयित्र्या मात्रा कृतो धावो गृहीतुं पश्चाच्छीघ्रगतिर्यस्य पलायमानस्येति तथा। मुनिगणानां दुर्लभो भावो मानसलाभोऽपि यस्य मातृभीतस्येति तथा। ननु तादृशो मात्रा कथं धृतस्तत्राह—विदिता सवित्र्या मातुः पीडा येन। परिहृता धावनलीला येन तत्र तत्संबोधने तथा। मातुः परिश्रमं ज्ञात्वा धावनान्निवृत्त इत्यर्थः। धृतो हैयंगवस्य गन्धः सौरभ्यं येन। कलितः स्वीकृत उलूखले मातृकर्तृको बन्धो येन। एवमाह **श्रीशुकः**—'स्वमातुः खिन्नगात्राया विस्रस्तकबरस्रजः। दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने ॥' इत्यादि। क्षणं निबद्धतया स्थितोऽयं चापल्यं त्यक्ष्यतीति तं विहायान्यत्र मातरि स्थितायां दृष्टमर्जुनयोस्तर्वोर्मूलं येन। किमर्थमेतत्तत्राह—सुरमुनेर्नारदस्य कृष्णेन भगवता वां शापविमोक्षो भावीति या वाक् तस्यानुकूल प्रतिपालक हे। ततः कृतो यमलार्जुनयोर्भङ्गो येन तिर्यगुलूखलं कर्षता तयोः मध्ये गच्छतेति तथा। ततो गुह्यकयोः शापविमुक्तयोः कुबेरपुत्रयोर्नुतौ धृतो रङ्गो येन। निजभक्तीकृतौ स्वसेवकतां नीतौ यक्षौ येन। उग्रशब्देन तत्रागतैः कथमेतयोरकस्मात्पतनमिति विस्मितैर्बल्लवैर्दृष्ट हे। हे सुस्मितमुखपुट। हे हृष्ट। कुतस्तात तवैतद्बन्धनमिति प्रहसता नन्देन विमोचितो बन्धो यस्य ॥

बृहद्वनचरितानि रम्यत्वात्पुनराह—

बृहद्विपिनमण्डने कलुषमण्डलीखण्डने
व्रजप्रणयशंसने दनुजवृद्धिविध्वंसने।
मुहुर्धरणिरोचने महितबल्लवीलोचने
परिस्फुरतु कैशवे रतिरतीव नः शैशवे ॥ ९ ॥

**बृहदिति**। कैशवे केशवसंबन्धिनि शैशवे शिशुकर्मणि बालचरिते नोऽस्माकमतीव

रतिः परिस्फुरतु । कलुषमण्डलीनां पापराशीनां खण्डने । धरणिं रोचयति प्रीणयतीति तस्मिन् । महितानि सोत्सवानि बल्लवीनां लोचनानि यस्मात्तस्मिन् । स्फुटार्थमन्यत् ॥

अनुकूलाख्यमिदं छन्दः ।

**अनुकूलाख्यमिति** । 'एकादशकलधारि बुधजनमानसहारि । इदमनुकूलमवेहि लघुकमन्तमनुधेहि ॥' इति तदनुसारि तद्विरचितम् । आभीराख्यं चैतज्जगणान्तिमं चेदन्यत्र ॥

अथ वृन्दावने वत्सचारणादि ।

अथ बृहद्वनाद्वृन्दावने समागतस्य हरेर्लीला वर्णनीया । तत्सूचिकां प्रार्थनां तावदाह—

कदा वृन्दारण्ये मिहिरदुहितुः सङ्गमहिते
मुहुर्भ्रामं भ्रामं चरितलहरीं गोकुलपतेः ।
लपन्नुच्चैरुच्चैर्नयनपयसां वेणिभिरहं
करिष्ये सोत्कण्ठो निबिडमवसेकं विटपिनाम् ॥ १० ॥

**कदेति** । स्फुटार्थं पद्यम् । वेणिभिर्धाराभिः । 'वेणी सेतुप्रवाहयोः' इति हैमः । प्रेमावेशात्प्रतितरुमूलं रोदिष्यामीति भावः ॥

लीलामाह—

व्रजेन्दुरुपनन्दान्तरीणमतिनोदी मनोज्ञतरवृन्दावनान्तरनुमोदी ।
अनःस्थजनयित्र्या निजाङ्कमुपनीतः कुरङ्गनयनाभिः सहर्षमनुगीतः ।
प्रफुल्लपृथुवृन्दावनोपहृतरङ्गः कलिन्दगिरिपुत्रीतटान्तधृतसङ्गः ।
गिरीन्द्रकटकाङ्गीकृतोरुपरिपोषः समस्तसखिराजीविलासमणिकोषः ।
समीपभुवि वत्सप्रचारधृततर्षः सुहृत्सु गुरुखेलाभरेण कृतहर्षः ।
तरङ्गदुरुगेण्डुप्रविष्टचलदृष्टिः प्रणीतवरवंशीनिनादनवसृष्टिः ।
तरक्षुनखलक्ष्मीपरीतमृदुकण्ठः कटीरतटकूजद्विचित्रलघुघण्टः ।
समूढशिखिचूडाप्रणीतवरचूडः सुमञ्जुतरगुञ्जावलीभिरुपगूढः ।
सुहृद्भिरपि सार्धं प्रपन्नवृषवेषः कठोरतरवत्सासुरेभहरिरेषः ।
स्थविष्ठबकतुण्डप्रवेशकृतलीलस्तदङ्गगिरिकूटप्रभेदपविशीलः ।
सुहृद्भिरपि तुष्टैर्भुजाभिरभिमृष्टः सुरैश्च सुमनोभिर्वराभिरभिवृष्टः ।
तनोतु मयि तुष्टिं स्ववत्सकुलपाली प्रफुल्लकुसुमालीधरोऽद्य वनमाली ॥

**व्रजेन्दुरिति** । व्रजेन्दुर्वनमाली अद्य मयि तुष्टिं तनोतु । लीलागानात्तुष्यत्वित्यन्वयः । कीदृशः । उपनन्दस्य बृहत्तातस्य स्वतातमन्त्रिणोऽन्तरीणां मतिं नोदयति बृहद्वनाद्वृन्दा-

वनगमने संमतिदानाय प्रेरयतीति सः। यतो बृहद्वनादपि मनोज्ञतरे वृन्दावनेऽन्तस्तुमोदोऽस्यास्तीति सः। उपनन्दानुमन्त्रेण यात्रामाह—अनःस्थेति। निखिलैः सपरिकरैः सपरिच्छदैश्च व्रजजनैः शोभितपरिसरया सपुत्ररोहिणीसहितयानःस्थया रथारूढया जनयित्र्या यशोदया निजाङ्कं स्वक्रोडमुपनीतः प्रापितः। 'अनः शताङ्गः शकटः स्यन्दनः कथ्यते रथः' इति हलायुधः। कुरङ्गनयनाभिरपराभिः स्यन्दनमारूढाभिर्गोपीभिरनुगीतः। प्रफुल्ले विकसिततरुवल्लीके पृथुनि विस्तीर्णे वृन्दावन उपहृतः प्राप्तो रङ्गः परमानन्दो येन सः। कलिन्देति प्रकटार्थम्। एवमाह **श्रीशुकः**—'गोपवृद्धा महोत्पाताननुभूय बृहद्वने। नन्दादयः समागम्य व्रजकार्यममन्त्रयन्॥ तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः। देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः[1]। वनं वृन्दावनं नाम पशव्यं नवकाननम्। गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम्॥ तत्तत्रैवाद्य यास्यामः शकटान्युङ्क्त माचिरम्। गोधनान्यग्रतो यान्तु भवतां यदि रोचते॥ तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः। व्रजान्स्वान्स्वान्समादाय ययू रूढपरिच्छदाः॥ गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः। कृष्णलीलां जगुः प्रीता निष्ककण्ठ्यः सुवाससः॥ तथा यशोदारोहिण्यावेकं शकटमास्थिते। रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके॥ वृन्दावनं गोवर्धनं यमुनापुलिनानि च। वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप॥' इति। गिरीन्द्रकटके गोवर्धननितम्बेऽङ्गीकृतः प्राप्त उरुः परिपोष उत्सवो येन सः। 'हर्षः प्रमोदः प्रमदो मुत्तोषानन्दमुत्सवः' इति धनंजयः। समस्तानां सखिराजीनां ये विलासमणयस्तेषां कोषो भाण्डागारम्। समीपभुवि स्वनिवासपरिसरे वत्सानां प्रचारे धृतस्तर्षो वाञ्छा येन सः। गुरुखेलाभरेण सुहृत्सु मित्रेषु कृतहर्षः। खेलामाह—तरङ्गन्नुच्चनीचीभवन् (उरुः) यो गेण्डुः कन्दुकस्तस्मिन् प्रविष्टे चले दृष्टी नेत्रे यस्य सः। प्रणीता रचिता वरवंशीनिनादानां नवा सृष्टिर्येन सः। तरक्षोर्व्याघ्रस्य नखाभ्यां स्वर्णजटिताभ्यां या लक्ष्मीः शोभा तया परीतो युक्तो मृदुः कण्ठो यस्य सः। 'व्याघ्रो द्वीपी पुण्डरीकस्तरक्षुः शार्दूलः स्याच्चित्रकायो मृगारिः' इति हलायुधः। कटीरतटे श्रोणिमण्डले कूजन्ती झणत्कुर्वती विचित्रा रत्नखचिता लघुघण्टा किङ्किणी यस्य सः। समूढया प्राप्तया शिखिनश्चूडया शिखया प्रणीता युक्ता वरा चूडा केशपाशो यस्य सः। सुमञ्जिवति स्पष्टार्थम्। सुहृद्भिरपि कम्बलादिना कृतवृषवेषैः सार्धं प्रपन्नो लब्धस्तेन निर्मितो वृषवेषो येन सः। कठोरतरो यो वत्सासुरः स एवेभो हस्ती तस्मिन् हरिः सिंहः। तद्विदारकृदित्यर्थः। एवमाह **श्रीशुकः**—'अविदूरे व्रजभुवः सह गोपालदारकैः। चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ॥ क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित्। क्वचित्पादैः किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः॥ वृषायमाणौ नर्दन्तौ युयुधाते परस्परम्। अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा॥ कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः। वयस्यैः कृष्ण-

---

१. अत्रार्धचत्वारः श्लोका जातोपद्रवसूचका न लिखिताः, दशमस्कन्धैकादशाध्यायगतास्त्विमे श्लोकाः.

बलयोर्जिघांसुर्दैत्य आगमत् ॥ तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः । दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत् ॥ गृहीत्वापरपादाभ्यां सहलाङ्गूलमच्युतः । भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ॥ तं वीक्ष्य विस्मिता बालाः शशंसुः साधुसाध्विति । देवाश्च परिसंतुष्टा बभूवुः पुष्पवर्षिणः ॥' इति ॥ अथ बकासुरवधमाह—स्थविष्ठोऽतिस्थूलो यो बकः पूतनाभ्राता तस्य तुण्डे यः प्रवेशस्तेन कृता तद्विदाररूपा लीला येन सः । तदेवाह—तदङ्गं तद्वपुरेव गिरिकूटं शैलशिखरं तस्य प्रभेदे पविशीलो वज्रस्वभावः । 'अङ्गं वपुर्वर्ष्म पुरं च पिण्डम्' इति हलायुधः । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । ततो निहतबकासुरः सुहृद्भिः कर्तृभिर्भुजाभिरभिमृष्टः समाश्लिष्टः । तदा सुरैर्देवैः सुमनोभिर्मालतीभिरभिवृष्टः । 'सुमना मालती जातिः' इत्यमरः । तनोत्वित्यादि स्पष्टार्थम् ॥ एवमाह **श्रीशुकः**—'स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा । गत्वा जलाशयाभ्यासं पाययित्वा पपुर्जलम् ॥ ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् । तत्रसुर्वज्रनिर्भिन्नं गिरेः शृङ्गमिव स्थितम् ॥ स वै बको नाम महानसुरो बकरूपधृक् । आगत्य तरसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥ कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः । बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥ तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः । चच्छर्द सद्योऽतिरुषाक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां गतिः । पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥ तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः । समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥' इत्यादि ॥

वत्सपालकं कृष्णं प्रति कुपथभ्रमस्य स्वमनोवत्सस्य दमनं प्रार्थयति—

अपि स्फारामोदे प्रतिपदसुधाकोटिमधुरे
पुराणग्रामान्तर्वहति तव लीलारसझरे ।
मनोवत्सः पातुं विषयविषगर्ते विशति मे
कृपायष्ट्या तूर्णं दमय तममुं तर्णकपते ॥ ११ ॥

**अपीति** । हे तर्णकपते, तव लीलारसझरे पुराणग्रामान्तर्वहत्यपि सति मे मनोवत्सो विषयविषगर्ते पातुं प्रविशति तममुं कृपायष्ट्या तूर्णं दमय यथा तत्पानं न कुर्यात् । आमोदस्त्वद्गुणख्यातिरूपः सुगन्धः । पुराणानां श्रीभागवतादीनां ग्रामः समूहः स एव पुराणः प्राचीनो ग्रामः । स्फुटमन्यत् ॥

प्रफुल्लकुसुमालीनामेदं छन्दः ।

**प्रफुल्लेति** । 'प्रफुल्लकुसुमाली सतीयमतिमोदा । जसौ रगणनौ चेत्ततो गुरुकयुग्मम् ॥' इति तदनुसारि तत्तद्विरचितम् ॥

अथ वत्सचारणादिचरितम् ।

अथ ब्रह्ममोहनं वर्णयिष्यंस्तदादिममघमोक्षणं सूत्रयति—

आभासोऽपि श्रुतिपरिसरं तावकीनस्य नाम्नः
सर्पन्नल्पं लघुतरमघस्तो[म]मोक्षं करोति ।
नैतच्चित्रं सखिभिरखिलैरन्तरालं प्रविष्टो
यद्गोविन्द स्वयमयमघं मोक्षयस्येकमेव ॥ १२ ॥

**आभासोऽपीति** । हे गोविन्द, तावकीनस्य त्वदीयस्य नाम्न आभासोऽपि सांकेत्यादिनोच्चरितोऽपि तवाह्वयः श्रोतुः श्रुतिपरिसरं कर्णप्रान्तमल्पं किंचित्सर्पन् लघुतरमतित्वरयाघस्तोमात्पापवृन्दान्मोक्षं करोति । एवं स्थिते नैतच्चित्रं भवति । किमेतत्तत्राह— स्वयमयं सर्वेश्वरो नामी त्वमखिलैः सखिभिः सहान्तरालं देहमध्यं प्रविष्टः सन्नेकमेवाघं मोक्षयसीति । पक्षे पापरूपमघासुरम् ॥

काननान्तभुक्तिकाममुच्चनादपूरधाम-
शृङ्गबुद्धवत्सपालवल्गुबालचक्रवाल-
सङ्गलब्धतोषजालमग्रनुन्नवत्सपाल-
मद्भुतातिभूरिखेलमित्रसङ्गनीतवेल-
मङ्गरुद्धकाननस्य शार्वराञ्चिताननस्य
दावतुल्यलोचनस्य पूतिगन्धिमोचनस्य
मेघभागतानवस्य सर्परूपदानवस्य
वीक्षयातिविस्मितेन तस्य कुक्षिमाश्रितेन
वत्सपालमण्डलेन नीतखेदमुच्चलेन
तत्र मङ्क्षु संप्रविष्टमुद्धुतस्वभक्तिरिष्ट-
मेधिताङ्गरुद्धवातमर्दिताहिजन्मजात-
मीक्षयाभिजीवितेन डिम्भसंचयेन तेन
सार्धमेत्य सत्तडागतीरमाप्तभुक्तिराग-
मेषु भोक्तुमुद्यतेषु भूरिराजिसंततेषु
मध्यसीम्नि राजमानमर्पितेभडिम्भमान-
मत्र सर्वसंमुखास्यमुज्जिहानमन्दहास्य-

मध्वरोपपन्नभक्षमर्भकोपभोगदक्ष-
मिन्द्रमुख्यदेववर्गवीक्ष्यमाणकेलिसर्ग-
मेषु वत्सपालकेषु भक्षयत्सु बालकेषु
दूरगामिवत्सपुञ्जसंगमाय लब्धकुञ्ज-
मम्बुजन्मयोनिना तदुत्सुकेन वत्सजात-
मर्भमण्डलं च नीतमभ्रमाभिसंपरीत-
धीतयाधिगत्य हासमुद्वमन्तमिन्दुभास-
माशु तत्तदात्मरूपसंनिवेशितस्वरूप-
मेतदीयमातृतोषहेतुशीलरत्नकोष-
मुल्लसन्तमत्र वर्षमेधितानुरागतर्ष-
मब्जयोनिदृष्टतत्त्वमद्भुतातिशुद्धसत्त्व-
रूपवीक्षणातिमत्तगोकुलानुवृत्तियत्त-
पद्मजस्तुतानुभावमाहृतात्मगोष्ठशाव-
मम्बुजाक्ष भो भवन्तमाश्रयामि कुन्ददन्त
नन्दगोष्ठभूरिभाग चारुकुन्तलाग्रभाग
शोकपुष्पमञ्जरीक गन्धलुब्धचञ्चरीक
पीतकेलिपुण्डरीक वश्यवत्समण्डलीक
बाहुराजदङ्गदाय मित्रसङ्घरङ्गदाय
पादशोभिहंसकाय सुन्दरावतंसकाय
गुप्तचारुतर्णकाय क्लृप्तधातुवर्णकाय
गोपगोत्रवल्लभाय योगिवर्गदुर्लभाय
कर्णसङ्गिचम्पकाय दुर्गतानुकम्पकाय
तुभ्यमिद्धकीर्तिगाथ सर्वदा नमोऽस्तु नाथ
देहि देहि भक्तिलेशमप्यशेषपूरुषेश ॥

**काननान्तेत्यादि** । भो अम्बुजाक्ष, भवन्तमहमाश्रयामीत्युत्तरत्रान्वयः । कीदृशम् । काननान्ते वनमध्ये भुक्तौ जेमने कामो वाञ्छा यस्य तम् । उच्चस्य नादपूरस्य धाम गृहं यच्छृङ्गं गवलं तेन बुद्धस्य ज्ञातभगवद्वनक्रीडनभोजनेच्छस्य वत्सपालस्य वल्गुनः सुन्दरस्य

बालचक्रवालस्य शिशुवृन्दस्य सङ्गेन लब्धं तोषजालमानन्दराशिर्येन तम्। समानगुणशीलवयोभिर्गोपबालकैर्मिथो हितेच्छुभिः सह मिलित्वातिहृष्टमित्यर्थः। अग्रे नुन्ना वत्सांश्चारयितुं प्रेषिता वत्सपालाः केचिदनेके गोपदारका येन तम्। स्वयं किं चकार तत्राह— अद्भुता अतिभूरयः खेला यैस्तादृशानां मित्राणां सङ्गेन नीतातिवाहिता वेला येन तम्। विचित्रबहुक्रीडापण्डितैस्तैः सह तत्तत्क्रीडावेशादतिक्रान्तभोजनसमयमित्यर्थः। भवन्तं पुनः कीदृशम्। वत्सपालमण्डलेन नीतः प्राप्तः खेदो यम्। ननु तन्मण्डलेन कुतः खेद इत्यपेक्षायां हेतुगर्भं विशेषणम्—सर्परूपदानवस्य बकानुजस्याघस्य कुक्षिमाश्रितेन। प्रविष्टेनेत्यर्थः। कुतस्तेन तत्कुक्षेराश्रयणं कृतमित्यपेक्षायां हेतुगर्भं विशेषणम्—तस्य वीक्षयातिविस्मितेनेति। तमपूर्वपर्वताकारं गुहाकारं च तन्मुखं वीक्ष्य विस्मयाद्बाल्यचापल्याच्च तेषां तत्प्रवेशस्ततो हरेः खेद इत्यर्थः। तस्य कीदृशस्येत्याह—अङ्गेन रुद्धं काननं येन तस्य। अतिविस्तीर्णस्येत्यर्थः। शार्वरेणान्धतमसेनाञ्चितमाननं मुखं यस्य। दावो वनाग्निस्तत्तुल्ये लोचने यस्य। पूतिगन्धि दौर्गन्ध्यं मुञ्चतीति य(त)स्य। एतेन दावाग्निनिर्दग्धसत्त्वदुर्गन्धभ्रान्तिस्तेषां जातेति दर्शितम्। मेघं भजतीति तादृशमतानवं यस्येति। अत्युच्चस्येत्यर्थः। भवन्तं पुनः कीदृशम्। विपन्नानि मित्राणि विहाय कथं मया बहिः स्थेयमिति तत्रायकुक्षौ मङ्क्षु शीघ्रं [संप्रविष्टं] संविष्टम्। उद्धुतं दूरीकृतं स्वभक्तानां मित्राणां रिष्टमशुभं येन तैः सह मिलत्वेति तम्। 'रिष्टं पापाशुभयोः' इति हलायुधः। ननु तद्विनाशं विना कथं तद्रष्टि(द्रिष्ट)नाश इत्यपेक्ष्य विशिनष्टि—एधितेन तत्कण्ठमार्गमनुवर्धितेनाङ्गेन रुद्धो वातस्तत्प्राणवायुर्येन तम्। ततोऽर्दितो विदीर्णेन मूर्ध्ना प्राणं निर्गमय्य मारितोऽहिजन्मजातः सर्पजात्युत्पन्नोऽघासुरो येन तमिति। तेन डिम्भसंचयेन गोपबालकवृन्देन सार्धं सत्तडागतीरं स्वच्छपुलिनं सरस्तटमेत्य प्राप्याप्तो भुक्तिरागो जेमनेच्छा येन तम्। ननु सर्पविषस्पर्शव्याकुलेन तत्संचयेन सह कथं भोजनसुखं स्यादित्याशङ्कायां विशिनष्टि—ईक्षयामृतवर्षिण्याभिजीवितेन स्वस्थप्राणेनेत्यर्थः। भोजनावस्थितिवर्णनेन विशिनष्टि—एषु सखिषु भोक्तुमुद्यतेषु भूरिराजिभिर्बहुपङ्क्तिभिः संततेषु पद्मसहस्रदलवद्विस्तृतेषु सत्सु कर्णिकावत्तन्मध्यसीम्नि राजमानं समुपविष्टम्। अर्पित इभडिम्भतुल्येभ्यः सखिभ्यो मानः सत्कारो येन तम्। 'अर्दित—' इति पाठे खण्डितकलभशोभमित्यर्थः। अत्र सखिगोष्ठ्यामचिन्त्यशक्त्या सर्वसंमुखमास्यं यस्य तम्। एवमाह **श्रीशुकः**— 'कृष्णस्य विश्वक् पुरुराजिमण्डलै रम्याननाः फुल्लदृशो व्रजार्भकाः। सहोपविष्टा विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः॥' इति॥ उज्जिहानं सखिषु स्वस्वमातृराद्धभोजनप्रशंसिषु सत्सु(त्सू)दयमानं मन्दहास्यं यस्य तम्। तदेन्द्रादयस्तत्समाजं द्रष्टुमाजग्मुरित्याह—अध्वरेषु यज्ञेषूपपन्नानि भक्षाणि यस्य तम्। अर्भकैः सह दध्योदनाद्युपभोगे दक्षं निपुणम्। इन्द्रमुख्यैर्देववर्गैर्वीक्ष्यमाणो यज्ञेष्वध्वर्युभिर्मन्त्रैराहूतोऽपि यः कथंचित्संनिधत्ते स गोपडिम्भैः सह सतृष्णमन्नानि भुङ्क्ते इति विस्मयाविष्टैर्दृश्यमाणः

---

१. बहुभिः पङ्क्तिमण्डलैः.

सजग्धिकेलिसर्गो यस्य तम्। एवमेषु बालकेषु भक्षयत्सु सत्सु तृणानि(दि)लोभेन दूरगामिनां वत्सपुञ्जानां संगमाय संकलनाय 'पङ्क्तिविच्छेदो माभूत्। भुङ्ग्ध्वं यूयम्। एषोऽहं वत्सान् दृष्ट्वागच्छामि' इत्युक्त्वा लब्धा गिरिकुञ्जा येन तम्। कुञ्जेषु वत्सजातं तडागतीरेऽर्भमण्डलं चादृष्ट्वा ततश्चाघमोक्षकालिकदेवदुन्दुभिनादादागतेन तन्मोक्षणवीक्षणविस्मितेनान्यं मञ्जुमहिमानं द्रष्टुमुत्सुकेनाम्बुजन्मयोनिना ब्रह्मणैव नीतमित्यभ्रमाभिसंपरीतधीतया मध्याह्नरविप्रभावन्नित्यसिद्धया प्रज्ञयाधिगत्य विज्ञायेन्दुभासं हासमुद्गमन्तम्। सर्ववेदार्थविद्वरीयानप्येष मत्प्रभावमद्यापि नाधिजगामेति प्रहसन्तमित्यर्थः। नन्वस्तु हरौ सार्वश्यम्, ब्रह्मणि तस्य हासश्च ब्रह्महृतानां तेषां मातृषु समाधा(ना)य कं कमुपायं चकारेति चेत्तत्राह—आशु शीघ्रं तत्तदात्मरूपैस्तत्तद्वत्सबालकमूर्तिसंस्थानैः संनिवेशितं संस्थापितं स्वरूपमात्मा येन तम्। एवमाह **श्रीशुकः**—'यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं यावद्यष्टिविषाणवेणुदलशि[1]ग्यावद्विभूषाम्बरम्। यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं स[2]र्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ॥' इति। किमर्थमेवं बभौ तत्राह—एतेषां या मातरस्तासां तोषहेतुर्यच्छीलरत्नं तस्य कोषमिति। आत्मजानवीक्ष्य ताः खिन्नाः स्युरिति तत्तोषार्थमित्यर्थः। कृष्णे तासां मातृभावभावना याभूत्तत्सिद्ध्यर्थमित्यपरे। कियन्तं कालमेवमभात्तत्राह—अत्र व्रजे वने च वर्षं व्याप्योल्लसन्तं क्रीडन्तम्। एवमाह **श्रीशुकः**—'इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः। पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः॥' इति। एधिता व्रजजनेषु वर्धिता स्वतृष्णा येन तम्। एवमाह **श्रीशुकः**—'व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम्। शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत्॥' इति। अब्जयोनिना दृष्टं तत्त्वं स्वरूपं यस्य तम्। 'एकोऽपि सन् बहुधा यो विभाति' इति श्रुतिगीतमेकत्वमजहदेव यद्भ्रमवत्स्वरूपं यच्च वत्सवत्सपान्मृगत्तद्यस्य तेन दृष्टमित्यर्थः। एवमाह **श्रीशुकः**—'तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात्। व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः॥ चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः। सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः॥' इति। 'वत्सान् सखीनिव पुरा परितो विचिन्वदेकं स पाणिकवलं परमेष्ठ्यचष्ट' इति च॥ अन्यथा मैत्रीशैथिल्यप्रसङ्गः। ततोऽद्भुतमतिक्रान्तशुद्धसत्त्वं विज्ञानानन्दैकरसं यद्रूपं तस्य वीक्षणेनातिमत्तश्च गोकुलस्यानुवृत्तौ यत्तश्च प्रयत्नवान् यः पद्मजस्तेन स्तुतोऽनुभावो महिमा यस्य तम्। एवमाह **ब्रह्मा**—'तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्' इति। 'नौमीड्य तेऽभ्रवपुषे तडिदम्बराय' इत्यादि च। तत आज्ञां गृहीत्वा ब्रह्मणि स्वलोकं गते आहृता आत्मगोष्ठशावास्तैः सह जग्धिश्च कृता येन तम्। एवमाह **श्रीशुकः**—'ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान्। वत्सान् पुलिनमानिन्ये यथा पूर्वसखि स्वकम्॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा। नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम्॥ ततो

---

१. शिक् शिक्यम्. २. 'सर्वं विष्णुमयं जगत्' इत्यस्याः प्रसिद्धाया गिरो श्रुतिस्मृत्यन्यतरस्याङ्गवत् सा गीरेवार्थरूपेण प्रत्यक्षा यथा तथा बभूवेत्यर्थः.

हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः । दर्शयंश्चर्माजगरं न्यवर्तत वनाद्व्रजम् ॥' इति । हे कुन्ददन्त, हे नन्दगोष्ठभूरिभाग, तुभ्यं सर्वदा नमोऽस्तु । वने विहृत्य शत्रुं निहत्य व्रजमागच्छतो हरेः शोभां वर्णयन् तं संबोधयति—चारूणां कुन्तलानामग्राणि भजति तादृश्यशोकपुष्पमञ्जरी यस्य । गन्धलुब्धाश्चञ्चरीका यत्र तादृक् पीतं गौरं केलिपुण्डरीकं यस्य । तुभ्यं कीदृशायेत्याह—बाहुराजदित्यादि । स्फुटार्थम् । पादयोः शोभिनौ हंसकौ यस्य तस्मै । 'हंसकः पादकटकः' इत्यमरः । गुप्ताः पालिताश्चारुतर्णका येन तस्मै । कॢप्तो रचितो धातुभिर्वर्णको विलेपनं येन तस्मै । गोपगोत्रमाभीरसंततिर्वल्लभं प्रियं यस्य तस्मै । 'संततिर्गोत्रजनने' इत्यमरः । एवमाह **श्रीशुकः**—'बर्हप्रसूनवनधातुविचित्रिताङ्गः प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः । वत्सान् गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः[1] प्रविवेश गोष्ठम् ॥' इति । इद्धा दीप्ता कीर्तिगाथा यस्य । हे नाथ, हे अशेषपूरुषेश सर्वेश्वर, त्वं मह्यं भक्तिलेशमपि देहि देहि । यस्त्वं वैरिणेऽप्यघाय मोक्षानन्दमपि दत्तवानसीति भावः। एवं कौमारलीला हरेर्वर्णिताः ॥

स्वल्पमपि मे पाण्डित्यं त्वद्विषयत्वाद्विफलं न भवेदित्याह—

यां निर्वक्तुमभूत्प्रभुर्न हि चतुर्वक्त्रोऽपि ते माधुरीं
तामुद्घाटयताद्य यद्यपि सतां हासो मया स्वीकृतः ।
वैयर्थ्याय तथापि देव भविता नायं ममोपक्रमः
सर्वानर्थहरस्त्वदीयभजनाभासोऽपि यद्विश्रुतः ॥ १३ ॥

**यामिति** । यां ते माधुरीं निर्वक्तुं चतुर्वक्त्रो ब्रह्मापि प्रभुर्न भवेत्तामद्योद्घाटयता वर्णयता मनुष्येणैकवक्त्रेण मया यद्यपि सतां विदुषां हासः स्वीकृतः । 'सूरिः प्राज्ञः पण्डितः सन्मनीषी' इति हलायुधः । हे देव, तथापि ममोपक्रमस्त्वन्माधुरीवर्णनप्रारम्भो वैफल्याय न भविता । कुत एवं तत्राह—त्वदीयभजनाभासोऽपि सर्वानर्थहरः समूलाविद्याविनाशकृद्यद्विश्रुतः । 'सांकेत्यं पारिहास्यं वा' इत्यादि स्मरणात् ।

अशोकपुष्पमञ्जरी छन्दः ।

**अशोकेति** । दण्डकभेदोऽयम् । 'यत्र दृश्यते गुरोः परो लघुः क्रमात्स कथ्यते बुधैरशोकपुष्पमञ्जरी' इति तल्लक्षणं वृत्तरत्नाकरे ॥

अथ तालवनचरितम् ।

अतः परं पौगण्डलीला वर्णनीया । तत्र धेनुकवधं वर्णनीयं सूचयति—

स पातु मां यस्तृणराजराजीफलैर्विराजन्व्रजराजपुत्रः ।
सुखानि चक्राङ्ककरः सखीनां चक्रीवतां चक्रमुदस्य चक्रे ॥ १४ ॥

**स पात्विति** । स व्रजराजपुत्रो मां पातु । कीदृशः । यस्तृणराजराजीनां तालतरु-

---

1. गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः.

श्रेणीनां फलैः सखीनां सुखानि चक्रे । 'तृणराजाह्वयस्तालः' इत्यमरः । यद्यपि तदा सखायस्तत्फलानि न भक्षयामासुस्तथाप्युत्तरत्र तद्भक्षणेन तत्र विहारेण तेषां सुखसमृद्धिरभूदिति तथोक्तिः। चक्राङ्कः करे यस्य सः । किं कृत्वा। चक्रीवतां धेनुकादीनां रासभानां चक्रं वृन्दमुदस्य निहत्य । 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः' इत्यमरः ॥

जय धेनुलक्षशतगुप्तिदक्ष वनमण्डलान्तमनुसृत्य कान्त-
मुपलब्धहर्ष कृतकेलिवर्ष बलदेवगीतघनशाखिशीत-
वनराजिरूप पशुपालभूप कृतपक्षिवारचरितानुकार-
धृतमित्ररङ्ग रसवल्गदङ्ग पुरुमल्लयुद्धपटुबाहुरुद्ध-
बलदुर्दुरूढनिजमित्रकूट यमुनोपकूलतरुराजिमूल-
पदभद्रसेनकृतदुग्धफेनपटलानुकल्पनवपुष्पतल्प-
वरमध्यसुप्त सुहृदालिगुप्त वृषभानुबद्धमृदुरागनद्ध-
कलगीतहृष्ट सुबलाभिमृष्टकृतपद्मनिन्दचरणारविन्द
विटपावतानपरिवीज्यमान परिपक्वतालफललुब्धबाल-
कलवाक्यरूढहसितोपगूढमुखतारकेश धृतवीरवेश
घनतुङ्गतालविपिनान्तरालमुपलब्ध रामसहितात्मधाम-
धुतघूर्णदग्रतृणराट्समग्रफलवृन्दपातकृतहर्षजात
फलशब्दरुष्टखररूपदुष्टहरकामपालकृतहर्षमाल
तुरगारिकाल खरचक्रवालतृणवीतिहोत्र रमितात्मगोत्र
हतधेनुकाद्य विबुधाभिवाद्य तृणराजभङ्गभरजातरङ्ग
रिपुवर्गभीद मयि संप्रसीद ॥

**जयेति** । हे भगवन्, त्वं जयेत्यन्वयः । धेनुलक्षशतानां गोकोटीनां गुप्तौ पालने दक्ष हे । कान्तं वनमण्डलान्तमनुसृत्योपलब्धहर्ष हे । कृता केलिवर्षा येन हे तथाभूत । बलदेवाय तं प्रसादयितुं गीताः स्वेन श्लाघिता ये घनशाखिनो निबिडतरवस्तैः शीतासु शीतलासु वनराजिषु रूपं मूर्तिर्यस्य । यदुक्तं **भगवता**—'अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् । नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥' इति ॥ हे पशुपालभूप गोपराज । कृतेन पक्षिवाराणां हंसबर्हिशुकबकादिपतत्रिगणानां भाषणगमनादिचरितानुकारिण धृतो मित्राणां रङ्गो येन । रसेनानन्देन वल्गन्ति मनोज्ञीभवन्त्यङ्गानि यस्य । पुरुषु प्रचुरेषु मल्लयुद्धेषु

१. 'काराणां' इति भवेत्.

पट्टू यौ बाहू ताभ्यां रुद्धो निर्जितो बलैर्दुर्दुरूढो निजमित्रकूटः स्वमित्रगणो येन । 'दुल उत्क्षेपणे' इत्यस्माद्दुरपूर्वात्कूटप्रत्यये दुर्दुरूढो महाबलीत्यर्थः । यमुनोपकूले या तरुराजी तस्या मूलेषु यत्पदं स्थानं तत्र भद्रसेनेन तन्नाम्ना मित्रेण कृतं दुग्धफेनपटलानामनुकल्पं तुल्यं यन्नवपुष्पतल्पवरं तन्मध्ये सुप्त हे । तत्र सुहृदालिगुप्त हे । वृषभेन तन्नाम्ना मित्रेणानुबद्धो यो मृदुरागस्तेन नद्धं निबद्धं यत्कलगीतं स्वचरितसंबन्धि तेन हृष्ट हे । सुबलेन तन्नाम्ना मित्रेणाभिमृष्टे संवाहिते कृतपद्मनिन्दे पद्मोत्कृष्टे चरणारविन्दे यस्य । विटपावतानेन पुष्पिताशोकादिलघुशाखाव्यजनेन परिवीज्यमान हे । एवमाह **श्रीशुकः**—'क्वचिच्च कलहंसानामनुकूजति कूजितम् । अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित् ॥ चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः । अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः ॥ नृत्यतो गायतः क्वापि वल्गतो युद्ध्यतो मिथः । गृहीतहस्तौ गोपालान्हसन्तौ प्रशशंसतुः ॥ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः । वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः । अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः । गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥' इति ॥ एवं नानाविहारस्वापावुपवर्ण्य तालवनचरितं वर्णयति—तत्रैव परिपक्वतालफलानां प्रसरत्सौरभ्यमाघ्राय तेषु लुब्धानां बालानां कलवाक्यै रूढं यद्धसितं तेनोपगूढो मुखतारकेशो वदनचन्द्रो यस्य ।'हे मित्राणि, नाद्य तालफलानि स्वाद्यानि । किंत्वाहवरस एव स्वाद्यो भावी' इति हसिताभिप्रायः । तत्रासुरवधाय धृतो वीरवेशो येन । घनानां तुङ्गानां तालानां यद्विपिनं तस्यान्तरालमुपलब्ध हे । रामसहितस्यात्मनः स्वस्य धाम्ना प्रभावेण धुतानां कम्पितानां घूर्णदग्राणां तृणराज्ञां तालतरूणां समग्रफलवृन्दपातेन कृतं हर्षजातं यस्य । पात्यमानफलशब्दरुष्टं खररूपं दुष्टं धेनुकासुरं हरति निहन्ति तादृशेन कामपालेन बलदेवेन कृता हर्षमाला यस्य । हे तुरगारिकाल । अश्वदानवनिहन्तुः खरदानवनिघातो न चित्र इति भावः । धेनुके निहते क्रोधादभिद्रवतां तद्बन्धूनां खराणां यानि चक्रवालानि वृन्दानि तान्येव तृणानि तेषां वीतिहोत्र वह्ने । एवमाह **श्रीशुकः**—'श्रीदामा नाम गोपालो रामकेशवयोः सखा । सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ राम राम महाबाहो कृष्ण दुष्टनिबर्हण । इतोऽविदूरे सुमहद्वनं तालालिसंकुलम् ॥ फलानि तत्र भूरीणि पतन्ति पतितानि च । सन्ति किंलवरुद्धानि धेनुकेन दुरात्मना ॥ प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् । वाञ्छास्ति महती राम गम्यतां यदि रोचते ॥ बलः प्रविश्य बाहुभ्यां तालान्संपरिकम्पयन् । फलानि पातयामास मतङ्गज इवौजसा ॥ फलानां पततां शब्दं निशम्यासुररासभः । अभ्यधावत्क्षितितलं सनगं परिकम्पयन् ॥ समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली । निहत्योरसि काशब्दं मुञ्चन्पर्यसरत्खलः ॥ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना । चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये । क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः ॥ [1]एवं चापततः कृष्णो

---

१. 'तांस्तानापततः' इति भागवते.

रामश्च नृपलीलया । गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजिषु ॥ तयोस्तदद्भुतं कर्म निशम्य विबुधादयः । मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥' इति ॥ धेनुकवधेन रमितान्यात्मगोत्राणि स्वबन्धवो येन । हतो धेनुकाद्यो येन । हे रिपुवर्गभीद धेनुकवधवित्रासितकंसादिकेत्यर्थः । त्वं मयि संप्रसीद प्रसादं कुरु ॥

सगणं धेनुकं निहत्य सखिभिः सह व्रजे गाः पालयन्तं हरिमाह—

पीनापीनभरोद्गतैरनुदिनं याः क्षीरपूरैर्बला-
दम्भोजाक्ष विडम्बयन्ति निबिडं क्षीराम्बुधेर्वैभवम् ।
तासां राजतगण्डशैलपटलीपाण्डुत्विषां मण्डलं
धेनूनां परिपालयन्तमटवीकुञ्जे भवन्तं भजे ॥ १५ ॥

**पीनेति** । हे अम्भोजाक्ष, अटवीकुञ्जे विरहन्तं भवन्तमहं भजे । कीदृशम् । राजतगण्डशैलपटलीनामिव पाण्डुत्विषामतिशुभ्राणां धेनूनां मण्डलं परिपालयन्तम् । धेनूर्विशिनष्टि—याः पीनापीनभरोद्गतैरतिस्थूलोधोभारसंस्रु(स्नु)तैः क्षीरपूरैः क्षीराम्बुधेर्वैभवं विडम्बयन्ति । अनुदिनं नित्यम् । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । एवमुक्तं ब्रह्मसंहितासु— 'स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहान्' इति ॥

कलगीतनाम छन्दः ।

**कलगीतेति** । 'सगणं निधाय जगणं विधाय । कविसौख्यधाम कलगीतनाम ॥' इति तदनुसारि तद्विरचितम् । मधुभारनामेदमन्यत्र ॥

अथ कालियदमनम् ।

कालियदमनं वर्णयितुमाह—

कालियस्य फणरत्नकुट्टिमं कुट्टयन्पदसरोजघट्टनैः ।
मङ्गलानि वितनोतु ताण्डवे पण्डितस्तव शिखण्डशेखरः ॥ १६ ॥

**कालियस्येति** । ह्रस्वमध्यो दीर्घमध्यश्च कालियशब्दः । 'नागे कालीयकालियौ' इति शब्दभेदप्रकाशात् । फण एव रत्नकुट्टिमम् । 'कुट्टिमं मणिबद्धा भूः' इत्यमरः । पदसरोजयोर्घट्टनैश्चलनैः । प्रहारैरित्यर्थः । कुट्टयन् प्रतापयन् । शिखण्डशेखरो धृतचन्द्रकावतंसो नन्दसूनुः । तव मङ्गलानि वितनोतु विस्तृणातु । कीदृशः । ताण्डवे दाक्षिणात्योद्दण्डनृत्यकलायां पण्डितोऽतिनिपुणः ॥

जगद्विनाशिसंगमं गरुत्मतागजङ्गमं
भुजङ्गमण्डलीपदं पतङ्गनन्दिनीह्रदं

---

१. 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्येवं पाठः.

विषाग्निदग्धनीरजं निरीक्ष्य तस्य तीरजं
मुदाधिरुह्य दर्पतः कदम्बमुग्रसर्पतः
क्षणादशङ्कितस्ततः पतन्गुरुः समन्ततः
पयो विकीर्णवानलं परिज्वलद्विषानलं
धनुःशते सतां गतिर्भुजोद्धताम्बुसंहतिः
करालदृष्टिदारुणैः फणैर्मणिप्रभारुणै-
र्युतेन लोकदाहिना विनद्य कालियाहिना
रुषोद्भटेन वेष्टितः प्रपन्नबालचेष्टितः
ततोऽद्भुतावलोकतः समेत्य तीव्रशोकत-
स्तनुस्खलत्पटालिभिर्महार्तनादशालिभि-
र्बलोपदेशसारतस्तदा ह्रदावतारतः
शनैर्निवृत्तलालसैर्मुहुर्व्यथाकुलालसैः
सदारवृद्धबालकैः समस्तधेनुपालकै-
र्विलोकितः स्मिताननः कृतोरगावमाननः
प्रणुन्नभोगरोधनः सुहृद्गणाधिशोधनः
श्रिताण्डजेन्द्रविभ्रमः स्फुरत्करालविक्रमः
स्वमूर्धरत्नपिञ्जरं निरस्य नागकुञ्जरं
प्लुतेन तस्य रङ्गतः फणाङ्गणेषु संगतः
प्रणीतदिव्यनर्तनः कृतोत्सवानुवर्तनः
प्रसूनवृन्दवर्षिभिः खलार्दनेन हर्षिभिः
सपद्मभूपिनाकिभिर्नभस्यनल्पनाकिभिः
स्तुतो विचित्रबालकः सुलास्यतश्च लालकः
सखि स्वबाल्यचञ्चलं परिभ्रमदृगञ्चलं
सुशोभनाङ्गहारकं भुजङ्गदर्पदारकं
प्रणीतदिव्यहस्तकं विलासकम्पिमस्तकं
विकासिहास्यकोरकं विलोलकण्ठडोरकं

रसादमुं समग्रतः स्फुटं नटन्तमग्रतः
सुतं विलोकयाधुना त्वमीक्षणेन साधुना
व्रजेश्वरीति योषितां गिरं प्रमोदघोषितां
निशम्य लब्धमोदया विलोकितो यशोदया
खलप्रमर्दने खरः श्रिया ह्यनङ्गशेखरः
फणव्रजे मुहुः प्लुतः फणावतीगणैः स्तुत-
स्तदातिदक्षिणाशयः फणीश्वरे कृताभयः
क्षणादमूभिरर्चितः परार्ध्यगन्धचर्चितः
श्रुतिप्रसक्तकैरवः फणिव्रजेष्वभैरवः
स्वबन्धुवृन्दनन्दनः कृतार्यपादवन्दनः
प्रहर्षतोऽविलम्बया विचुम्बितस्त्वमम्बया
जय प्रभो कृपानिधे विलासरत्नवारिधे
नतार्तिपूरशातन प्रसीद मे सनातन ॥

**जगदित्यादि** । हे प्रभो कृपानिधे, हे विलासरत्नवारिधे, हे नतार्तिपूरशातन भक्तदुःखप्रवाहशोषिन्, हे सनातन, त्वं जय । मे प्रसीदेत्युत्तरेणान्वयः । कीदृशस्त्वम् । पतङ्गनन्दिन्या यमुनाया ह्रदं विषाग्निदग्धनीरजं निरीक्ष्य तस्य ह्रदस्य तीरजं तटोत्पन्नं तार्क्ष्यानीतामृतबिन्दुनिषेकाददग्धं कदम्बं दर्पतो मुदाधिरुह्य उग्रसर्पतः कालियादशङ्कितो गुरुर्धृतविश्वभारः सन् । ततः कदम्बात्पतन् धनुःशते तटप्रदेशे समन्ततः पयो विकीर्णवान् । तत्परिमिते तत्तटप्रदेशह्रदजलमुच्चिक्षेपेत्यर्थः । ह्रदं कीदृशम् । सर्पव्याप्तत्वाज्जगद्विनाशी संगमो यस्य तम् । गरुत्मता तार्क्ष्येण सौभरिशप्तेन अगा अगम्या जङ्गमा मत्स्या यस्य तम् । अतो भुजङ्गमण्डलीनां पदं निवासस्थानम् । पयः कीदृक् । परिज्वलन् विषानलो यत्र तत् । पुनः कीदृशस्त्वम् । सतां गतिः । भुजाभ्यामुद्धतान्दोलिताम्बुसंहतिर्जलराशिर्येन सः । कालियाहिना विनद्य घोरनादं कृत्वा वेष्टितः । कीदृशेन । करालदृष्टिदारुणैर्मणिप्रभारुणैः फणैर्युतेन । 'करालं विकटं तथा' इति हलायुधः । पुनः कीदृशेन । लोकदाहिना विषाग्निभिर्लोकान् दहता । रुषोद्भटेन । एवमाह **श्रीशुकः**—'तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः । कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः । पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन्धनुःशतमनन्तबलस्य किं तत् ॥ तस्य ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य । आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥' इत्यादि । प्रपन्नबालचेष्टितः प्रकाशितमौग्ध्यः ।

सदारवृद्धबालकैः समस्तधेनुपालकैर्निखिलैर्गोपैः कर्तृभिः अद्भुतावलोकतो भूकम्पोल्कापातवामनेत्रादिस्फुरणानामासन्नभयशंसिनां वीक्षणात्तीव्रशोकतो ह्रदतटीं समेत्य विलोकितः। कालियनिबद्धतया निश्चेष्टतया च दृष्ट इत्यर्थः । तैः कीदृशैः । तनुभ्यः स्खलन्ती पटालिर्येषां तैः । धावद्भिरित्यर्थः । महार्तनादशालिभिः शोकस्फुत(ट)हृदयतयोच्चक्रन्दद्भिः । ननु कृष्णैकायुषस्ते ह्रदं कुतो न विविशुस्तत्राह—बलोपदेशसारतो कृष्णः सर्पं विमर्द्य त्वरयैवायामीति रामवाक्यार्थबलं प्राप्य तदा ह्रदावतारतः शनैर्निवृत्तलालसैः । तथापि मुहुर्व्यथाकुलालसैर्मुहुरभ्युदितेन दुःखनिवहेन हतप्रभैः । एवमाह **श्रीशुकः**—'कृष्णप्राणान्निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम् । प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् ॥' कृष्णश्च तदा व्रजौकसां स्वप्रेष्ठानां प्रेमपराकाष्ठामास्वाद्य तदानन्दाय स्मिताननः । ततः कृतमुरगस्य कालियस्यावमाननमवज्ञा येन सः । तत्कथं तत्राह—प्रणुन्नं प्रमथ्यमानेन वपुषा दूरीकृतं भोगेन कालियदेहेनात्मरोधनं वेष्टनं येन सः । तेन सुहृद्गणानामाधिं मनःपीडां शोधयत्यपनयतीति सः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । नन्वेतावता [त]च्छोधनं न स्यात्तत्राह—श्रितः स्वीकृतोऽण्डजेन्द्रस्य गरुडस्य विभ्रमो येन सः । स्फुरन् करालो विकटो विक्रमो यस्य सः । स्वमूर्धस्थै रत्नैः पिञ्जरं पीतं नागकुञ्जरं निरस्य तिरस्कृत्य रङ्गतः कौतुकात्प्लुतेन कूर्दनेन तस्य नागकुञ्जरस्य फणाङ्गणेषु संगतः प्राप्तः सन् तेषु प्रणीतं दिव्यनर्तनं येन सः । एवमाह **श्रीशुकः**—'एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वधिरूढ आद्यः । तन्मूर्धरत्ननिकरस्प···र्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त ॥' इति । कृतं गतस्योत्सवस्यानुवर्तनं पुनरावर्तनं येन सः । पुनः कीदृशः । नभसि स्थितैरनल्पनाकिभिर्बहुदेवैः स्तुतः । तैः कीदृशैरित्यपेक्षायां प्रसूनेत्यादीनि त्रीणि स्पष्टार्थानि । पुनः कीदृशः । विचित्रबालकोऽद्भुतडिम्भः । सुलास्यतः शोभननृत्याच्च लालकः । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । पुनः कीदृशः । हे सखि व्रजेश्वरि, त्वं साधुनेक्षणेनामुं सुतं रसादनुरागादवलोकयेति प्रमोदेन घोषितामुक्तां योषितां गोपस्त्रीणां गिरं निशम्य लब्धमोदया यशोदया मात्रा विलोकितः । सुतं कीदृशमित्यपेक्षायाम्—स्वबाल्येत्यादीनि दश पदानि स्फुटार्थानि । तत्राङ्गहारो नृत्येनाङ्गविक्षेपः । हस्तकं नृ(?)हस्तचेष्टा । डोरकं पदकगुणः । समग्रतः समग्रमक्षतम् । सर्वाङ्गमित्यर्थः । पुनः कीदृश इत्यपेक्षायाम्—खलेत्यादीनि दश विशेषणानि स्फुटार्थानि । खरस्तीक्ष्णः । श्रियानङ्गस्य कन्दर्पस्यापि शेखरः शिरोऽवतंसः । फणाव्रजेषु मुहुरन्यकृतप्लुतः कृतकूर्दनः । ततः फणावतीनां कालियपत्नीनां गणैः 'हे स्वामिन् सर्वेश सर्वस्रष्टः, त्यजेमं पन्नगम् । देहि नः किङ्करीभ्यः पतिसौभाग्यम्' इति स्तुतः । दक्षिणाशयः सरलचित्तः । क्षणादुत्सवात् । अमूभिः फणावतीभिः । ताभिरेव परार्ध्यगन्धेन चर्चितः । अभैरवः प्रसादसुमुखः । 'आभीरं भीषणं भीष्मं भैरवं च भयावहम्' इति हलायुधः । एवमाह **श्रीशुकः**—'इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः । मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः ॥ तं पूजयामास तदा नागपत्न्यश्च सादरम् ॥ दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः । दिव्यग-

न्धानुलेपैश्च महत्योत्पलमालया ॥ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् । सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव सामृतजला यमुना निर्विषाभवत् ॥' इति । ततः कृतमार्याणां नन्दादीनां रामस्य च पादवन्दनं येन तैराशिषाभितेन सः । प्रहर्षतोऽविलम्बया सत्वरयाङ्के विदधीनयाम्बया मात्रा विचुम्बितः । जय प्रभो इत्यादिकं योजितं प्राक् ॥

सर्पमर्दनं कृष्णं प्रति स्वचित्तसर्पमर्दनं प्रार्थयति—

कामं दामोदर मम मनःपन्नगः पीनभोगो
दुष्टाशीभिः कुटिलवलनैः क्षोभयत्येष लोकम् ।
तद्विक्रान्तस्त्वमुदितपदद्वन्द्वपङ्केरुहाङ्कं
कुर्वन्दर्वीकरदमन हे ताण्डवैर्दण्डयामुम् ॥ १७ ॥

**काममिति** । हे दामोदर, हे दर्वीकरदमन कालियमर्दित, एष मम मनःपन्नगो लोकं क्षोभयति । कीदृशः । पीनः पुष्टो यो भोगो राजार्हदिव्यरूपरसाद्यनुभवः स एव पीनः स्थूलो भोगः कायो यस्य सः । कैः क्षोभयतीत्यपेक्षायामाह—दुष्टा या आशिषस्तत्तद्भोगेच्छास्ता एव दुष्टा विषरूपा आशिषो दंष्ट्रास्ताभिः कुटिलानि यानि वलनानि पराहितचेष्टितानि तान्येव कुटिलानि जिह्मानि वलनानि गमनानि तैश्चेति परम्परितरूपकाङ्गं रूपकम् । तत्तस्माद्विक्रान्तोऽतिबली त्वममुं मन्मनःपन्नगम् । उदितः पदद्वन्द्वपङ्केरुहयोरङ्कश्चिह्नं यस्मिन् तथाभूतं कुर्वन् । ताण्डवैर्दण्डय दमय । यदेवं कालियं कृतवानसि मम मनःपन्नगे दुर्दान्ते स्थिते कथं ते पन्नगदमनत्वमिति भावः । तथा च मच्चित्तेऽप्य पादौ प्रकाशय तस्य दुर्वासनामादावपनयेति ॥

अनङ्गशेखरच्छन्दः ।

**अनङ्गेति** । 'लघुगुरुर्निजेच्छया यदा निवेश्यते तदेष दण्डको भवत्यनङ्गशेखरः' इति रत्नरत्नाकरे तल्लक्षणम् ॥

अथ भाण्डीरक्रीडनादि ।

तत्र भाण्डीरवटविहारं वर्णनीयमाह—

भाण्डीरस्य तटान्ते तरुखण्डाखण्डलस्य रणशौण्ड ।
सखिमण्डलानि बाढं विक्रीडय पुण्डरीकाक्ष ॥ १८ ॥

**अथेति** । आदिशब्देन प्रलम्बवधदावाग्निपाने ग्राह्यम् । **भाण्डीरस्येति** । हे रणशौण्ड युद्धनिपुण । भाण्डीरस्य वटस्य तटान्ते सखिमण्डलानि बाढं विक्रीडय विहारय । कीदृशस्येत्याह—तरुखण्डेति । वृक्षसमूहेन्द्रस्य । अतिविस्तीर्णस्य घनपलाशिनो रविपथस्पर्शिनो मणिनिबद्धतटस्येत्यर्थः । डवर्गानुप्रासो वीरव्यञ्जकः ॥

क्रीडामाह—

सुहृदावलिपरिवीतः श्रुतिहरमुरलीगीतः
सुरभीवीथ्यनुसारी वरपीताम्बरधारी
पीनोज्ज्वलभुजदण्डः शिरसि स्फुरितशिखण्डः
शशिखण्डाभललाटः पीवरहृदयकपाटः
खरमिहिरातपवासे प्रसरत्यपि शुचिमासे
धृतमधुलक्ष्मीभारं परिहृतदावविकारं
धेनुमनोहरशादं पिककृतपञ्चमनादं
षड्जोद्गारिमयूरं विसृमरसौरभपूरं
विकसितचारुशिरीषं स्फुटमल्लीनिबिरीषं
वृन्दावनमतिहृष्टः सबलः स्वयमभिविष्टः
कल्पितभुजसंग्रामः क्वचिदीहितविश्रामः
कुत्रचिदभिनवतुम्बैः क्वचिदतिकोमलकुम्भैः
क्व च परिपाकिमगुञ्जैः क्व च बिल्वामलपुञ्जैः
क्रीडन्नद्भुतचर्यः केलिषु पण्डितवर्यः
पीवरकुतुकाधारे द्वन्द्वीभावविहारे
कल्पितनिर्भरराग‌ः कृतसखिवर्गविभागः
शीतलमरुदनुकूले भाण्डीरद्रुममूले
कृत्वा बल्लववेशं प्रविशन्तं दनुजेशं
जानन्नेव विलासी स्वीकृतवान्खलशासी
जैत्रीकृतबलपक्षः सुदुरूहक्रमदक्षः
श्रीदामप्रियकामः सुररिपुवाहितरामः
क्षपयन्प्रलम्बकायं हलिना निर्मितमायं
दैवतपरिणतलीलः सुहृदानन्दनशीलः
तत्र विदूरं याताः सुरभीर्लघुपदपाताः
सममन्विष्यन्गोपैः शङ्कितनिजधनलोपै-
र्मुञ्जावलिविकराले विपिने क्वचन विशाले

लब्धाखिलधवलाकस्तुङ्गितसुखपरिपाकः
पीतभयंकरदावः प्रकटोल्लसदनुभावः
प्रणतजनोत्सवकारी त्वं भाण्डीरविहारी
गोकुलजनरससिन्धो जय जय दुर्विधबन्धो ॥

**सुहृदिति** । हे गोकुलजनरससिन्धो, हे दुर्विधबन्धो दीनपालक, त्वं जय जयेत्यन्तिमेनान्वयः । कीदृशस्त्वमित्यपेक्षायां सुहृदावलीत्याद्यष्टपदी विस्फुटार्था । पुनः कीदृशः । सबलः साग्रजः सन् स्वयं वृन्दावनमभिविष्टः प्रविष्टः । कर्तरि क्तः । कीदृशं वृन्दावनमित्यपेक्षायामाह—खरेति । खराणां तीव्राणां मिहिरातपानां रविकिरणानां वासे समाश्रये शुचिमासे ज्येष्ठे प्रसरति प्रवर्तमानेऽपि सति धृतो मधुलक्ष्म्या वसन्तसंपत्तेर्भारो येन तत् । एवमाह **श्रीशुकः**—'ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्शरीरिणाम् । स च वृन्दावनगुणैर्वसन्त इव लक्षितः ॥ वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् । गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥' इति । परिहृतो दावविकारो वनाग्निदाहो यतस्तत् । धेनूनां मनोहराः शादा हरिततृणानि यत्र तत् । 'शादः कर्दमशस्ययोः' इति हैमः । पिकेत्यादि द्वयं स्फुटार्थम् । विसृमरो दूरप्रसारी सौरभपूरो यस्य तत् । तत्पूरं संपादयन् विशिनष्टि—विकसितेति । स्फुटाभिर्मल्लीभिर्निबिरीषं सान्द्रम् । 'निबिडं निबिरीषं च' इति हलायुधः । पुनः कीदृशः । कल्पितः कृतो भुजसंग्रामो बाहुयुद्धं येन सः । क्वचित्तरुच्छाये ईहितो विश्रामो येन सः । कुत्रचित्प्रदेशेऽभिनवैस्यं(तु)म्बैरलाबुफलैः क्रीडन् । एवमग्रेऽपि योज्यम् । कुम्भैः कुम्भवृक्षफलैः । क्व च बिल्वपुञ्जैरामलकपुञ्जैश्च । अद्भुता चर्या क्रीडा यस्य सः । यतः केलिषु पण्डितवर्योऽतिनिपुणः । एवमाह **श्रीशुकः**—'क्वचिद्बिल्वैः क्वचित्कुम्भैः क्वचित्कमलमुष्टिभिः । अस्पृश्यनेत्रबन्धाद्यैः क्वचित्खगमृगेहया ॥' इत्यादिना । एतदेव प्रपञ्चयन् विशिनष्टि—पीवरकुतुकाधारे महाविनोदाश्रये द्वन्द्वीभावेन विहारे कल्पितो निर्भररागो येन सः । तद्विहारे प्रकारं दर्शयन् विशिनष्टि—कृतेति । केचिद्बलपक्षं सखायः कृताः, केचित्तु स्वपक्ष इत्यर्थः । क्वैष विहारोऽभूत्तत्राह—शीतलेत्यादि । तत्रैकं चित्रमभूदित्याह—कृत्वेति । बल्लववेशं कृत्वा सखिमध्ये प्रविशन्तं दनुजेशं जानन्नेव सखित्वे स्वीकृतवान् । कुत एवं कृतवांस्तत्राह—विलासी खलशासीति । तं खलं न्यायेन निहन्तुमित्यर्थः । तत्कथं तत्राह—जैत्रीकृतो बलपक्षो येन सः । यतः सुदुरूहे क्रमे परिपाट्यां दक्षश्चतुरः । बलपक्षे विजयिविसति(?)मत्स्वत्वेन कल्पितः प्रलम्बः पराजितो बलं वहन्नवतारमुल्लङ्घ्य गमिष्यतीति क्रमविज्ञ इत्यर्थः । मया तस्य वधो माभूदिति भावः । श्रीदाम्नः प्रियं कामयते वाञ्छतीति । बलपक्षस्येतत्तेन निर्जितस्तं वहन्नित्यर्थः । सुररिपुणा प्रलम्बेन वाहितो रामो येन सः । हलिना बलदेवेन निर्मितमायं प्रलम्बकायं क्षपयन् विनाशयन् । ततो दैवतेत्यादिद्वयं स्पष्टार्थम् । एवमेवाह **श्रीशुकः**—'पशूंश्चारयतो गोपैस्तद्वने रामकृष्णयोः । गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया ॥ तं जानन्नपि दाशार्हो

भगवान्सर्वदर्शनः। अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित्। हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥ कृष्णसंघट्टिनः केचिदासन् रामस्य चापरे। यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥ वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम्। भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ उवाह कृष्णो भगवाञ्श्रीदामानं पराजितः। वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम्। वहन्द्रुततरं प्रागादवरोहणतः परम् ॥ अथागतस्मृतिरभयो रिपुं बलो विहायसार्थमिव हरन्तमात्मनः। रुषाहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥ दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना। गोपाः सुविस्मिता आसन्साधु साध्विति वादिनः ॥ पापे प्रलम्बे निहते देवाः परमनिर्वृताः। अभ्यवर्षन्बलं माल्यैः शशंसुः साधु साध्विति ॥' इति। एवं प्रलम्बवधमुक्त्वा दावाग्निविनाशं वर्णयति—तत्रेति। तत्र वने तृणलोभेन विदूरं यातास्तत एव लघुपदपाताः शीघ्रगाः सुरभीर्गोपैः सममन्विष्यन् मृग्यम्। कीदृशैः। शङ्कितो निजधनानां गवां लोपो यैस्तैः। चिन्ताकुलैरित्यर्थः। ततः किमभूत्तत्राह—मुञ्जावलिभिः शरश्रेणिभिर्विकराले विकटे क्वचन विशाले विपिने लब्धा अखिला धवला गावो येन सः। ततस्तुङ्गितो गीतो गोधनलाभेन वर्धितः सुखपरिपाको येन सः। एवमुक्तं श्रीशुकः(केन)—'क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः। स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् ॥ तेऽपश्यन्तः पशून्गोपाः कृष्णरामादयस्तदा। जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ॥ मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम्। संप्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तयन् ॥' इति। तदुत्तरं तत्रैव मुञ्जाटव्यां दावाग्निरकस्मादुद्भूतं च सखीन्निमीलिताक्षीन् कृत्वा न्यापदित्याह। ततस्तासां सुखसमृद्धिरभूदित्याह—प्रणतेति। एवमाह श्रीशुकः—'ततः समन्ताद्दवधूमकेतुर्यदृच्छयाभूत्क्षयकृद्वनौकसाम्। समापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः ॥ कृष्ण कृष्ण महाबाहो हे रामामितविक्रम। दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः ॥ वचो निशम्य कृपणं बन्धूनां भगवान् हरिः। पीत्वा मुखेन तान् कृच्छ्राद्योगाधीशो व्यमोचयत् ॥' इति। पुनर्भाण्डीरस्य(स्या)पि तैरुन्मीलितारनिवि(विन्द)स्मितैः सखिभिः सह विजहारेत्याह—भाण्डीरेति ॥

कृतोत्कलीलं कृष्णं प्रणमति—

कलितश्रीदामानं श्रीदामानन्दिकेलितुन्दिलितम्।

वन्दे रामावरजं रामावरजङ्गमद्युतरुम् ॥ १९ ॥

कलितेति। रामावरजं कृष्णं वन्दे। कीदृशम्। कलितं वक्षसि धृतं श्रियो सभीपा(?) दाम येन तम्। श्रीदामानमानन्दयति या तद्वहनरूपा केलिस्तया तुन्दिलितं पुष्टम्। रामाणां वरं जङ्गमद्युतरुं चलत्कल्पवृक्षम् ॥

द्विपदिका छन्दः।

द्विपदिकेति। 'द्विपदी परिगदिता सा द्वादशकलयुक्ता या' इति तदनुसारि तद्विरचितम् ॥

अथ वर्षाशरद्विहारचरितम् ।

वर्ण्यं वर्षादिविहारं सूचयति—

प्रेमोल्लासनशीला बल्लवमल्लस्य विजयते लीला ।
यन्माधुरीं विपञ्ची विरञ्चिसूनोः प्रपञ्चयति ॥ २० ॥

**प्रेमेति** । बल्लवमल्लस्य कृष्णस्य लीला वर्षाशरत्क्रीडा विजयते । कीदृशी । प्रेमोल्लासनं भक्तभावबन्धनं शीलं यस्याः(यस्याः) सा । तस्या महिमानं वदन् विशिनष्टि—विरञ्चिसूनोर्नारदस्य विपञ्ची वीणा यस्या माधुरीं प्रपञ्चयति विस्तृणाति ॥

मेघसमयपूतिरचित वृष्टिषु तरुकन्दरचित
नीपककुभपुष्पवलित सान्द्रविपिनलब्धललित-
भक्तपरिषदिष्टवरद हारिविभवधारिशरद-
लंकृतबहुपक्षिभरितकाननकृतदिव्यचरित
वेशतुलितनर्तकवर चन्द्रकचितचारुकबर
गोपयुवतिधैर्यमथनरूप तदभिनीतकथन
लोचनफल वेणुवलनवल्गदधरवक्रकलन
सर्वसुकृतवैभवधरवेणुरसितरज्यदधर
वेणुमधुरनादनटितकेकिनिवह मेघघटित-
सेव जनितमुक्तयवसधेनुनिचयचित्तरभस-
रूपविलसदङ्गवलनमोहितसुरवृन्दललन
भिल्लयुवतितोषिमसृणशस्यमिलितपादघुसृण
हारिहरिणयोषिदमलनेत्रसुखदवक्रकमल
दास्यनिरतशैलरचितसेवन पशुपाशखचित
पाहि करुण मद्विधजनमीश्वर दुरवापभञ्जन ॥

**मेघेत्यादि** । हे ईश्वर, मद्विधं जनं पाहीत्यन्तिमेनान्वयः । मेघसमये वर्षणवेलायां या पूतिर्गवां पालनं तया रचितं पश्चात्संचारलक्षणं यस्य । वृष्टिषु सतीषु तरुतलं कन्दरं चित प्राप्त हे । अरुणोर्मीषादिकमार्द्रं माभूदिति तदा तत्र तत्र स्थितेत्यर्थः । नीपानां ककुभानां चार्जुनानां पुष्पैर्वलित कृतवेश हे । सान्द्रेषु विपिनेषु लब्धा या ललिता मनोज्ञा भक्तपरिषत्सखिगोष्ठी तस्यै सह भोजनादिलक्षणानिष्टान् वरान् ददातीति तथा । इति वर्षाविहारो वर्णितः । एवमाह **श्रीशुकः**—'क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति । निर्विशन् भगवान्रेमे कन्दमूलफलाशनः ॥ दध्योदनमुपानीतं शिलायां सलिलान्तिके । संभोजनी-

यैर्बुभुजे गोपैः संकर्षणान्वितः ॥' इति । तेषु लवायै मुनिगोष्ठ्यै इष्टान् परान् ददातीति तथेत्यन्ये । अथ शरद्विहारमाह—हारीत्यादिना । हारिणो रुचिरान् यस्य विभवान् धरति या शरत्तयालंकृतेषु बहुभिर्हंसादिपक्षिभिर्भरितेषु काननेषु कृतानि दिव्यानि चरितानि येन । एवमुक्तं **श्रीशुकेन**—'इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना । न्यविशद्वायुना वातं सगोगोपालकोऽच्युतः ॥ कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरः[शर]न्महिध्रम् ।' इत्यादि । वेशेत्यादिद्वयं स्फुटार्थम् । यदुक्तम्—'बर्हापीडं नटवरवपुः' इत्यादि । हे गोपयुवतिधैर्यमथनरूप । ताभिस्तद्युवतिभिरभिनीतं कथनं यस्य । यदुक्तम्—'तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् । नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप ॥' इति । हे लोचनफल । वेणोर्वलनेन वादनेन वल्गन्तौ संकुचितीभवन्तावधरौ यत्र तादृग्वक्त्रं कलयति दर्शयतीति तथा । एवमवर्णि गोपीभिः—'अक्षण्वतां फलमिदं न परं विदामः सख्यः प्रसूननुनिवेशयतोर्वयस्यैः । वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकयक्षमोक्षम् ॥' इति । सर्वं सुकृतवैभवं धरति यो वेणुस्तेन रसितः स्वादितो रज्यन्नरुणोऽधरो यस्य । यदुक्तं ताभिः—'गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ।' इत्यादि । इह वेणोः सुकृतित्वं बोध्यम् । वेणोर्मधुरेण नादेन नटिताः केकिनिवहा येन । यदुक्तं ताभिः—'गोविन्दवेणुमनु मत्तमयूरनृत्यम्' इति । न च वेण्विति त्रिरूपादानात्कथितपदत्वं दोष उद्देश्यप्रतिनिर्देश्यवद्विषयत्वेनादोषत्वात् । छत्राकारेणोपरि चलता मेघेन घटिता रचिता सेवा यस्य । शरदर्कमरीचिस्पर्शशङ्किना वारिवाहेन कृतच्छायेत्यर्थः । यदुक्तं ताभिः—'सख्युर्व्यधात्स्ववपुषाम्बुद आतपत्रम्' इति । जनितो निष्पादितो वेणुनादानुभवेन मुक्तयवसानां त्यक्ततृणकवलानां धेनुनिचयानां················ । वलनेन भङ्ग्या मोहिता सुरवृन्दानां ललना येन । यदुक्तं ताभिरेव—'कृष्णं निरीक्ष्य वनितोत्सवचारुवेशं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् । देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकवरा मुमुहुर्विनीव्यः ॥' इति । भिल्लयुवतीः पुलिन्दतरुणीस्तोषयति तादृशं मसृणेषु कोमलेषु शस्येषु तृणेषु मिलितं च पादघुसृणं यस्य । कान्ताकुचस्पर्शाद्युत्पादयोर्लग्नं कुङ्कुमं हरिततृणलग्नं पुलिन्द्यो मुखेषु लिम्पन्त्यः कामतापं त्यजन्तीति भावः । यदुक्तं ताभिः—'पूर्णाः पुलिन्द्य उरुगाय पदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन । तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥' इति । हारिण्यो रमणीया या हरिणयोषितो मृग्यस्तासां यान्यमलानि नेत्राणि तेभ्यः सुखदं वक्त्रकमलं यस्य । यदुक्तं ताभिरेव—'धन्याः स्म मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम् । आकर्ण्य वेणुरणितं सह कृष्णसाराः पूजां दधुर्विरचिता प्रणयावलोकैः ॥' इति । दास्यनिरतेन शैलेन रचितं सेवनं यस्य । यदुक्तं ताभिरेव—'हन्तायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः(?) । मानं तनोति सह गोगणयोस्तयोर्यत्पानीयसूयवसकन्दरकन्दमूलैः ॥' इति । पशूनां अधृष्यगवां पादकर्षणार्थेन पाशेन खचित युक्त हे गोपप्रवरेत्यर्थः । यदुक्तं ताभिरेव—'नियोगपाशलक्षणयोः' इति । हे करुण दयालो ॥

अथ वृन्दावनविहारिणि हरौ स्नेहं प्रार्थयति—

घनप्रणयघट्टनोद्धुरितघोषसीमन्तिनी-
प्रपञ्चितजगत्त्रयीश्रुतिविटङ्कविक्रीडिते ।
शरद्विहसिताटवीकुहरभूविहारप्रिये
रतिस्त्वयि तरङ्गिनी मम सलीलमुन्मीलतु ॥ २१ ॥

**घनेति** । हे कृष्ण, त्वयि मम रतिरुन्मीलतु प्रकाशताम् । रतिः कीदृक् । तरङ्गिनी वेगवती । त्वयि कीदृशि । घनप्रणयेन सान्द्रस्नेहेन यद्धट्टनं चापलं तेनोद्धुरितासु घूर्णितासु घोषसीमन्तिनीषु प्रपञ्चितं विस्तारितं च जगत्त्रय्यास्त्रिलोकीरमण्याः श्रुतिविटङ्कः कर्णाभरणं च विक्रीडितं यस्य तस्मिन् । शरदि विहसिताया विकसिताया वृन्दाटव्या या कुहरभूर्गर्भप्रदेशस्तत्र यो विहारः स प्रियो यस्य तस्मिन् ॥

हारिहरिणच्छन्दः ।

**हारिहरिणेति** । 'हारिहरिणमेतदमलमस्ति भसनलेन सरुचि ।' इति तदनुसारि तद्विरचितम् ॥

अथ वस्त्रहरणम् ।

वर्ण्यं कन्यकावस्त्रहरणं संक्षेपात्तावदाह—

स्मेराभिः सलिले कलिन्ददुहितुर्मग्नाभिराकन्धरं
स्कन्धन्यस्तसमस्तपट्टवसनो नर्मोक्तिभङ्गीपटुः ।
निर्व्याजं व्रजकन्यकाभिरसकृद्भव्याभिरभ्यर्थितः
पायात्तुङ्गकदम्बशाखिशिखरारूढस्त्रिलोकीं हरिः ॥ २२ ॥

**स्मेराभिरिति** । हरिस्त्रिलोकीं पायात् । कीदृशः सन् । स्कन्धयोर्न्यस्तानि निहितानि समस्तानां कन्यकानां पट्टवसनानि येन सः । तुङ्गमुच्चं कदम्बशाखिनः शिखरमारूढः । वसनप्राप्तये व्रजकन्यकाभिरसकृन्मुहुर्मुहुरभ्यर्थितः । निर्व्याजमच्छलं यथा स्यात्तथा । कीदृशीभिः । भव्याभिर्मङ्गलमूर्तिभिः । आकुल्या न प्रगल्भाभिरित्यर्थः । कलिन्ददुहितुर्यमुनायाः सलिल आकन्धरमाकण्ठं मग्नाभिः । लज्जया तस्मान्निर्गन्तुमशक्ताभिरित्यर्थः । 'शिरोधरागलः कण्ठः' इति हलायुधः । पुनः कीदृशः । नर्मोक्तिभङ्गीपटुः परिहासरसनिपुणः । अत्र महाचौरस्य त्रिलोकीपालकत्वनिरूपणाद्विरोधाभासः स्वैकान्तिभक्तैकान्तित्वं च व्यज्यते ॥

निजगुणोदयोल्लासलोभिता गिरिसुताव्रतारम्भशोभिताः
पशुपकन्यकाः सूरजावने रचितमज्जनाः प्रेक्ष्य पावने
त्वरितमागतो लुञ्चिताम्बरः प्रियकमाश्रितो रङ्गिणां वरः

सपदि लोकयन्गोष्ठबालिका भृकुटिवल्लरीभङ्गुरालकाः
स्मितपरिस्फुरद्वक्त्रमण्डलः स्फुटितमालतीक्लृप्तकुण्डलः
सरभसं ततः शीतवेपितैः प्रणयकोपिभिः सुष्ठुहेपितै-
र्वदनविस्फुरत्काकुजल्पनैर्विहितसामभिर्भेदकल्पनैः
सिचयसंचयं संघमाकुलैर्झटिति याचितः कन्यकाकुलैः
पृथुतरांसयोरर्पितांशुकः सितरदोल्लसन्मञ्जुलांशुकः
प्रकटिताग्रहैर्भूपहेलिभिः सखिकुलाहृतैर्जल्पकेलिभि-
स्तरुपुरस्तटे तास्तदा बलादचिरमानयन्गोकुलाबलाः
मुदितमुग्धधीः केलिनर्मदः सकलबल्लवीवृन्दशर्मदः
प्रकटमम्बरीभूतहस्तकाः सविधमागता नम्रमस्तकाः
स पटुरात्मनो वाक्यकारिका धृतमहोत्सवः प्रेक्ष्य दारिकाः
सलिलमज्जने व्यज्य नम्रतां व्रतविधेर्वदन्सुष्ठु भग्नतां
शिरसि कारयन्नस्य पूर्तये प्रसभमात्मने क्षेममूर्तये
मधुरमञ्जलिं मञ्जुलोचनः प्रणयिनीमनस्तापमोचनः
किमपि कन्यकालीभिरानतः प्रणयसंकुलादाशु मानतः
सुखभरादमूरत्र तर्पयन्वसनसंचयं तूर्णमर्पयन्
कृतकुमारिकाचित्तदोहदः सकलसुन्दरीप्रेममोहदः
प्रणतमण्डलाभीष्टकामधुक्कमनबल्लवीमल्लिकामधु-
स्त्वमखिलेश मामिन्दिरालय व्रजमहेन्द्र हे देव पालय ॥

**निजेत्यादि** । हे देव हे अखिलेश हे इन्दिरालय हे व्रजमहेन्द्र, त्वं पालय मामित्यन्तिमेनान्वयः । कीदृशस्त्वम् । पशुपकन्यकाः प्रेक्ष्य त्वरितं ज(य)द्भावेनाकृष्यमाणः । ताः कीदृशीः । निजानामसाधारणानां पुरुषोत्तमत्वप्रेमवश्यत्वादीनां कृष्णगुणानामुदयेन यो व्रजराजधान्यामुल्लासस्तेन लोभिताः । गिरिसुतायाः कात्यायन्या यन्मार्गशीर्षविभातस्नानसाङ्गार्चनलक्षणं व्रतं तदारम्भेण शोभिताः । साङ्गतयानुष्ठितस्य कृष्णपतिफलकस्य गिरिसुतार्चनव्रतस्योद्यापनाय सूरजावने यमुनाम्भसि रचितमज्जनाः स्नान्तीः । तत्रागत्य किं चकार तत्राह—लुञ्चितानि तटधृतानि तासामम्बराणि वासांसि येन सः । तान्यादाय प्रियकं कदम्बमाश्रितोऽधिरूढः । गोष्ठबालिकाः सपदि लोकयन् सन् स्मितेत्यादिलक्षणः । अथैता मद्वश्यतामागताः परीक्षे प्रेमाणमासामिति भावः । ताः कीदृशीः ।

भ्रुकुटिवल्लरीसंसक्ता भङ्गुरा अलका यासां ताः । सरभसं सहर्षं यथा स्यात्तथा कन्यकाकुलैर्झटिति सिचयसंचयं वसनवृन्दं याचितः । 'सिचयो वसनं चीरमाच्छादो सिक् चैलवाससी' इति हैमः । कीदृशैस्तैः । शीतेन वेपितैः कम्पितैः । राजपुत्रस्य प्रणयिनश्च तवैतत्किं युक्तमिति प्रणयकोपिभिः । सुष्टुहेपितैर्लज्जासिन्धुनिमग्नैः । वदनेषु विस्फुरन्ति तव दास्यो वयमिति काकुजल्पनानि येषां तैः । हे गोकुलश्लाघ्य हे धर्मज्ञेति विहितसामभिः कृतप्रियभाषणैः । वासांसि न दास्यसि चेत् कंसायाचक्ष्महे इति भेदकल्पनैः एवमुक्तं ताभिः—'मानयं भोः कथास्त्वां तु नन्दगोपसुतं प्रियम् । जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥ श्यामसुन्दर ते दास्यः करवाम तवोदितम् । देहि वासांसि धर्मज्ञ नो चेद्राज्ञे ब्रुवामहे ॥' इति । एवमपि संभ्रमाकुलैर्भगवन्निति सादरैः । पृथुतरयोः सुपीनयोरंसयोरर्पितानि तासामंशुकानि वासांसि येन सः । सितेषूज्ज्वलेषु रदेषूल्लसन्तो मञ्जुला अंशवः किरणा यस्य सः । किं कुर्वन् । जल्पकेलिभिर्वाग्विलासैस्ता गोकुलाबलास्तदा तरुपुरस्तटे प्रियकपिण्डिकाग्रे बलादानयन् । कीदृशैः । यूयं चेन्मम दास्यस्तर्ह्यत्रैवागत्य वासांसि गृह्णीतेति प्रकटिताग्रहैः । कंसं भूपमाश्रित्य गर्वायध्वे चेत् स वराकः किं नः कर्तुं शक्नुयादिति भूपहेलिभिः । सखिकुलेन पक्ष्मा(शा)न्दं वयसा भगवन्तमन्तरागृहेषु स्थातुमक्षमन्मित्रगणेन हे सखे कृष्ण, एवमेवैतदित्यादृतैः सत्कृतैः । मुदितेत्यादि पदत्रयं प्रकटार्थम् । पुनः कीदृशः स कृष्णः । पटुः शुद्धभावपरीक्षायां निपुणः । दारिका गोपकन्यका आत्मनो वाक्यकारिकाः प्रेक्ष्य धृतमहोत्सवोऽतिहृष्टः । ताः कीदृशीः । अम्बरीभूता हस्ता यासां ताः । पाण्याच्छादितरहस्याङ्गय इत्यर्थः । तादृशतया सविधमागताः । नम्रमस्तकास्त्रपानिमग्नाः । पुनः किं कुर्वन् । सलिलमज्जने स्नाने नग्नतां विवस्त्रतां व्यङ्गीकृता व्रतविधेर्भग्नतां वदन् । यत्फलमुद्दिश्येदं व्रतमाचरितं तन्न भविष्यति जलदेवतावज्ञया तस्य भङ्गादिति कथयन्नित्यर्थः । तर्हि कथमस्मद्व्रतमिदमक्षतं भवेदिति सचिन्तास्ता जानन्नतितान्तं तद्भावं परीक्षामासेत्याह—अस्य व्रतस्य पूर्तये क्षेममूर्तये आत्मने स्वस्मै मधुरमञ्जलिं कारयन् । निखिलफलरूपे मङ्गलमूर्तौ मयि नियोजिताञ्जलितया नमस्कृते व्रतमिदं साङ्गं सफलं स्यादिति तास्तथाकुर्वन्नित्यर्थः । ततो मञ्जुलोचनस्तत्सर्वाङ्गवीक्षायां विकसितनेत्रः । ततः प्रणयिनीति विदितस्वासक्तीमां तासां मनस्तापान्मोचयतीति सः । ततोऽतिप्रसन्नाभिः कन्यकालीभिः किमपि भावगर्भं यथा स्यात्तथा प्रणयसंकुलात्प्रेमव्याप्तान्मानतः कान्तजातीयसत्कारादाशु शीघ्रमानतः प्रणतः । अमूः कुमारिकाः । सुखभरात् यः संकल्पो मयानुमोदितोऽचिरादेव फलवानभावीति स्वीकारोक्तिप्रादुर्भूतादानन्दातिशयात्तर्पयन् । तूर्णं वसनसंचयं अर्पयन् सन् कृतं कुमारिकाणां तासां चित्तदोहदं मनोवाञ्छितं येन सः । 'अथ दोहदम् । इच्छाकाङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ।' इत्यमरः । यदर्थं व्रतमाचेरुः स स्वयं मिलित इत्यर्थः । सकलाभ्यः सुन्दरीभ्यः स्कन्धनिहितवस्त्रतावगतात्यङ्गीकाराभ्युदितं प्रेममोहं ददातीति सः । एवमेवास्य भक्तपरितोषि शीलमित्याह—प्रणतमण्डलीनामभीष्टान् कामान् वाञ्छिताभोग्यान्

दोग्धि पूरयतीति सः । कान्तसुखतात्पर्येण कमना मनोज्ञा या बल्लव्यस्ता एव मल्लिकास्तासु मधुर्वसन्तः । सुतरां तदभीष्टपूरक इत्यर्थः ॥

व्रजकुमारीप्रसादनेन तवाद्भुता कीर्तिरभूदित्याह—

विदधीनयापि धवलं तव जगदेवाद्य कीर्तिचन्द्रिकया ।
केशव पशुपालीनां चित्रं द्विगुणीकृतो रागः ॥ २३ ॥

**विदधीनयापीति** । हे केशव, अद्य तव कीर्तिचन्द्रिकया जगद्धवलं विदधीनयापि पशुपालीनां रागो द्विगुणीकृत इति चित्रम् । धवलं शुक्लम्, पक्षे निष्पापम् । रागोऽरुणता, पक्षे प्रेमा । अत्र कारणकार्यगुणविपर्ययात्मा विषमोऽलंकारः । स च श्लेषाङ्को बोध्यः ॥

इन्दिरा छन्दः ।

**इन्दिरेति** । 'नगणतो रराविन्दिरा लगौ' इति तदनुसारि तद्विरचितम् ॥

अथ यज्ञपत्नीप्रसादः ।

अथ यज्ञपत्नीप्रसादं वर्णनीयं सूचयति—

परितोषयितुं न यायजूकैस्त्वमनूचानजनैश्च नासि शक्यः ।
रतिहार्य रतिं ददस्व वन्दे तव गोविन्द सदा पदारविन्दम् ॥ २४ ॥

**परीति** । हे रतिहार्य रत्यैव हर्तुं वशीकर्तुं शक्य, हे गोविन्द गोपालस्वामिन्, यायजूकैरनूचानजनैश्च त्वं परितस्तोषयितुं शक्यो नासि न भवसि । 'इज्याशीली यायजूकः' इति । 'अनूचानः प्रवचने साङ्गे धीति' इति चामरः । अतो रतिं भावं ददस्व । तदर्थं तव पदारविन्दं सदाहं वन्दे । उपनयनादि कर्मवतामपि विप्राणां न त्वत्प्रसादस्तच्छून्यानामपि तत्पत्नीनां स बभूवेति कर्मणामन्वयव्यतिरेकाभ्यां भगवदनुग्रहं प्रति कारणता निरस्ता किंतु सत्सङ्गस्यैव तं प्रति सेत्युक्तम् । एवमेवोक्तं तत्प्रसङ्गे याजिकैः—'धिग्जन्म नस्त्रिविद्वियां धिग्व्रतं धिग्बहुज्ञताम् । धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ नासां द्विजातिसंस्कारो न शौचं न क्रियाः शुभाः । अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे । भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥' इति सत्प्रसङ्गश्चासां गम्यः ॥

रङ्गतस्तोषितज्ञातिना संगतो धेनुकारातिना
कर्णपालीस्फुरत्पल्लवैर्वेष्टितः सर्वतो बल्लवै-
र्गोपसीमन्तिनीकामुकः काननोत्सङ्गसङ्गामुकः
क्लृप्तवृन्दाटवीमाननः प्रेक्षितस्मेरगोपाननः
संस्तुवन्भूरुहां संपदः श्लाघयन्व्याजतः संप(शंत्र)दः
स्वान्सखीन्क्षुद्भरोत्तापितान्प्रेमभिः प्रार्थनामापितान्

प्रेषयन्नध्वरेऽदूरतः ख्यापितब्राह्मणक्रूरतः
कल्पितब्राह्मणावज्ञया प्रेष्टसंक्रामितप्रज्ञया
लङ्घितक्षेमभाक्सत्रया पूरिकापूरितामत्रया
स्थालिकान्यस्तसद्भक्तया स्नेहसंपत्तितोऽभ्यक्तया
रत्नपात्रीधृतक्षीरया काननोपक्रमे धीरया
भाजनन्यस्तसंयावया कौतुकोत्तुङ्गसंरावया
गौरवान्निर्भरोत्तालया प्रेक्षितो ब्राह्मणीमालया
स्पर्धमानं रुचा हाटकं धारयन्नुज्ज्वलं शाटकं
सख्युरंसे करं दक्षिणं न्यस्य लोकत्रयीरक्षिणं
विस्फुरन्नर्तकालंकृतिः संचरत्किङ्किणीझंकृतिः
कान्तिभिर्निन्दितेन्दीवरः सुन्दरोरस्तटे पीवरः
संचरन्मञ्जरीकुण्डलः श्लाघितब्राह्मणीमण्डलः
कृष्ण हे सुन्दराकुण्ठया प्रेरितास्तूर्णमुत्कण्ठया
रक्ष नः संगता दूरतः स्वान्तिके त्वं यतः सूरतः
क्ष्मासुरीकाकुमित्यग्रतः शीलयन्व्यञ्जितव्यग्रतः
सर्वथादत्ततद्वाञ्छितः कीर्तिविञ्छोलिकालाञ्छितः
प्रेषितब्राह्मणीकोऽमलः पल्लवादप्यलं कोमलः
सद्गुणैरिन्द्रियामोदनं भुक्तवान्भोजयन्नोदनं
मत्तमातङ्गलीलाकरः किंकरानन्दिशीलाकरः
सर्वदा विभ्रमारम्भवान्खेलताद्गोकुलेऽलं भवान्
संततं दारुणापद्धतं पाहि गोविन्द मामुद्धतम् ॥

**रङ्गत इत्यादि** । हे गोविन्द, भवान् गोकुले खेलतात् क्रीडतु । संततं दारुणयापदा हतं उद्धतं दुःशीलं च मां पाहीत्यन्तिमेनान्वयः । भवान् कीदृशः । धेनुकारातिना बलदेवेन संगतः । कीदृशेन । रङ्गतो विस्मये ज्ञानेन तोषिता ज्ञातयो येन तेन । गोपसीमन्तिनीनामेव कामुकस्तासामेव कान्तः । काननोत्सङ्गेषु वनगह्वरेषु सङ्गमुकः संगमशीलः । कॢप्तं कृतं वृन्दाटव्या माननं श्लाघा येन सः । तदेवाह—भूरुहां वृन्दाटवीतरूणां संपदः संस्तुवन् । एवमाह **श्रीशुकः**—'निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः । आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥ पश्यतैतान्महाभागान्परार्थैकान्तजीवितान् ।

वातवर्षातपहिमान्सहतो वारयन्ति नः ॥' इत्यादिना श्लाघयन् व्याजतस्तेषां संपदो दायी। यदा क्षुद्भरेणोत्तापितान् स्वान् सखीन् अदूरतो निकटेऽध्वरे यज्ञे प्रेषयन्। कीदृशान्। प्रेमभिरस्तानि न कृष्ण मयि क्षुद्बाधेतेति कृष्णविषयकैः प्रार्थनामापितान्। यद्यपि हरेस्तन्मित्राणां च नित्यतृप्तत्वात्क्षुद्बाधा नैव संभवति तथापि स प्रभुर्भावग्राही कदादिदस्म(?)दं निक[ट]मागच्छेत्, अस्मत्तोऽन्नानि याने(चे)त दीनबन्धुरिति भक्तानां ब्राह्मणीनामिच्छयैव न क्षुत्तेषामाविर्बभूवेति ज्ञेयम्। अध्वरात्परावृत्तैरलब्धान्नैः सखिभिः ख्यापिता ब्राह्मणानां क्रूरता येन सः। ते ब्राह्मणास्त्वदीयेभ्योऽप्यस्मभ्यमन्नानि न ददुर्न च वाचापि सच्चक्रुरिति सखायः प्रोचुरित्यर्थः। ततश्च मद्भक्ता ब्राह्मणीः प्रति व्रजेतेति कृष्णप्रेषितैः सखिभिर्याचितानया सत्वरतागतया ब्राह्मणीमालया प्रेक्षित इत्यन्वयः। तन्मालया कीदृश्या। कल्पिता कृता ब्राह्मणानां स्वपतीनामवज्ञा निषेदो(धो)ल्लङ्घनलक्षणा यया। कुत एतत्तत्राह—प्रेष्ठे परमप्रेमास्पदे परमात्मनि कृष्णे संक्रामिता प्रज्ञा बुद्धिर्यया। लङ्घितं क्षेमभाक्कल्याणनिलनूतं सत्रं बहुयजमानको यागो यया। भगवते किमुपायनमानीयाजग्मुस्तत्राह—पूरिकेत्यादीन्यष्टौ विशेषणानि विशदार्थानि। अमत्राणि पात्राणि। भक्तान्यौदनानि। कौतुकेन कृष्णसंनिधिगमनविनोदेनोत्तुङ्गः संरावः शब्दो यस्यास्तया। कृष्णविषयकाद्गौरवान्निर्भरमुत्तालया सत्वरया। 'अमत्रं भाजनं पात्रं स्थालं तुल्यार्थमुच्यते। अन्धः कूरं भक्तं दीधितिरन्नं तथौदनं भित्सा। उत्तालस्त्वरितो ज्ञेयः' इति हलायुधः। पुनः कीदृशः। रुचा हाटकं स्वर्णं स्पर्धमानं तत्तुल्यमुज्ज्वलं शाटकं पटं धारयन्। लोकत्रयीरक्षिणं दक्षिणं करं सख्युरंसे न्यस्य विस्फुरन् भ्राजमानः। नर्तकालंकृतिर्नटवरवेषः। एवमवर्णि **श्रीशुकेन**—'श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे। विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥' इति। इतः पराणि पञ्च विशेषणानि स्पष्टार्थानि। तत्र ब्राह्मणीनां श्लाघा हे महाभागा हे मदेकान्तभक्ता इत्येवं प्रशंसा। पुनः कीदृशः। हे कृष्ण हे सुन्दर। अकुण्ठया प्रबलयोत्कण्ठया प्रेरिता दूरतस्तूर्णं संगता नोऽस्मान् स्वान्तिके रक्ष न त्यज, यतः त्वं सूरतः कृपालुरसीति क्ष्मासुरीणां ब्राह्मणीनां काकुमग्रतः शीलयन् शृण्वन्। इति शब्दस्यास्थानस्थत्वं छन्दोऽनुरोधात् षोढव्यम्। कान्तभावनिविष्टमनसामासां ब्राह्मणीनां गोपराजकुमारेण मया कथं समाधानं स्यात्कथं वा भजद्भावानुसारिता मम स्थाल्यत्ती(स्यती)ति व्यञ्जिता व्यग्रता येन सः। ततः किं चकार तत्राह—सर्वथा सर्वैः प्रकारैरदत्तानि किंतु देहान्तरेण मां मिलिष्यथेत्येवं दत्ती(त्ता)नि तद्वाञ्छितानि येन सः। यदुक्तं ताः प्रति—'न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह। तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ ॥' इति। ततः कीर्तिविञ्छोलिकया मर्यादासेतुत्वभक्तभावानुसारित्वगुणकृतया यशःश्रेण्या लाञ्छितश्चिह्नितः। ततः प्रेषिता गृहान् प्रति गमिता ब्राह्मण्यो येन सः। एवममलो निष्कलङ्कः। पल्लवान्नूतनाम्रादिपत्रादप्यलं कोमलः। तासामार्तिं विज्ञाय खिद्यमानमना इत्यर्थः। ततः किं

चकार तत्राह—सद्गुणैर्मार्दवौज्ज्वल्यसौरभ्यादिभिरिन्द्रियामोदनमोदनं सखीन् भोजयन् स्वयं भुक्तवान् । मत्तमातङ्गस्य या लीला तां करोतीति निदर्शनालंकारः । किंकरान् सेवकानानन्दयति यानि शीलानि चरितानि तेषामाकरः खनिः । 'चरित्रं चरितं शीलम्' इति हलायुधः । नित्यमेवैवंविध्यभृदित्याह—सर्वदा विभ्रमाणां विलासानामारम्भो यस्य विद्यते सः । अवशिष्टं योजितं प्राक् ॥

भगवत्करुणया यज्ञपत्नीनां पुमर्थसिद्धिरभूत्तत्पतीनां तु तत्करुणाशून्यानां न तत्सिद्धिरिति व्यञ्जयन्नाह—

दुःखोच्छित्तिः परममधुरानन्दपूरानुभूतिः
सेयं दामोदर तदुचिता साधनानुष्ठितिर्वा ।
सत्तां धत्ते न कमलभुवोऽप्यन्तरेणार्तबन्धो
कारुण्यं ते मुहुरहमतः प्रार्थये तस्य बिन्दुम् ॥ २५ ॥

**दुःखेति** । हे आर्तबन्धो श्रीकृष्ण, ते कारुण्यं दयामन्तरेण विना कमलभुवश्चतुर्मुखस्यापि दुःखोच्छित्तिरविद्याध्वंसः सत्तां न धत्ते । न भवतीत्यर्थः । परममधुरस्यानन्दपूरस्यानुभूतिर्लाभः सत्तां न धत्ते । दुःखहानिपरमानन्दप्राप्तिलक्षणो मोक्षस्त्वत्कृपासाध्य इत्यर्थः । ननु ज्ञानवैराग्यसाध्यो मोक्षः श्रूयते तत्राह—तदुचिता मोक्षोपयोगिनी साधनानामनुष्ठितिश्च त्वत्कारुण्यमन्तरेण सत्तां न धत्ते । त्वत्कृपयैव ब्रह्मापि मोक्षसाधनान्याचरति नान्यथेत्यर्थः । एवं सति का कथान्येषाम् । अतस्तस्य कारुण्यस्य बिन्दुमहं मुहुरर्थये । तुल्ययोगितालंकारः । एवमुक्तं ब्रह्मणा—'तत्तेऽनुकम्पां सुसमीक्ष्यमाणो भुञ्जान एवात्मकृतं विपाकम् । हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ एषोऽनुकम्प्यो मयि नाथवानिति अथापि ते देव पदाम्बुजद्वये ॥' इत्यादि ॥

मत्तमातङ्गलीलाकरच्छन्दः ।

**मत्तेति** । 'यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको मत्तमातङ्गलीलाकरः' इति वृत्तरत्नाकरे तल्लक्षणम् ॥

अथ गोवर्धनोद्धरणम् ।

वर्णनीयं गोवर्धनोद्धरणचरितं संक्षिप्य तावदाह—

अमन्दमदमण्डलैरलमखण्डमाखण्डलं
न्यरुद्ध रभसेन यः पृथुमुदस्य गोवर्धनम् ।
अचण्डकरमाधुरीपटलदण्डितुण्डश्रियं
तमात्तवरमण्डनं मकरकुण्डल त्वां भजे ॥ २६ ॥

**अमन्देति** । हे मकरकुण्डल त्वामहं भजे । कीदृशः । अचण्डकरस्य माधुरीपटलं दण्डयति तिरस्करोति तादृक् तुण्डश्रीर्मुखकान्तिर्यस्य तम् । आत्तानि धृतानि वराणि

मण्डनानि कटककेयूरादीनि येन तम् । रभसेन हर्षेण यः पृथुमतिगुरुं गोवर्धनं गिरिमुदस्तीकृत्य अमन्दमदमण्डलैरुत्कटगर्वैर्वृन्दैरखण्डं पूर्णमाखण्डलमिन्द्रमलमित्यर्थं न्यरुद्ध न्यवारयत् ॥

विस्तरेण तच्चरितमाह—

हेतुवादजजल्पितव्रजवासबाध्वरमर्दने
भूसुरोत्करगोमहीधरपूजनोत्सववर्धने
पर्वतार्चनसंपदर्जनहेतुतापरिबोधके
कल्पितातुलसूपसंकुलशष्कुलीदधिमोदके
पुष्पवन्दनधातुचन्दनमण्डिताखिलगोधने
गोपमण्डलकल्पिताचलसानुकन्दरशोधने
उद्भटारवभूधरोत्सवसञ्जिताखिलबन्धुले
तत्परिक्रमपूजनक्रमभूरिसंभ्रमसंधुते
क्ष्माधरोपमविग्रहोत्तमभुक्तविस्फुरदोदने
मङ्गलाकरविस्फुरद्धरवृन्दवल्लवमोदने
रुष्टवासववृष्टिसंप्लवखिन्नगोकुलवेष्टिते
त्राससंकुलबन्धुमण्डलशर्मदाद्भुतचेष्टिते
दक्षिणेतरपाणिपुष्करशीलितातुलपर्वते
विभ्रमाङ्कुरनिर्धुतोद्धुरजम्भमर्दनगर्विते
गोत्रगह्वरवासिताम्भरविह्वलात्मसुहृज्जने
कारितोद्भवदद्भुतार्णवबान्धवव्रजमज्जने
नन्दिताशयमित्रसंचयवीक्षितस्फुरदानने
मेदुरस्मितकौमुदीकृतरक्तयौवतमानने
भीतनन्दितविस्मयान्वितमातृपाण्युपलालिते
चारुचञ्चललोचनाञ्चलराधयापि निभालिते
मारुतोन्मदचण्डनीरदमण्डलाशनिवारणे
संपदन्धितशक्रसंचितगर्वचर्वणकारणे
सप्तवासरहस्तसंस्तरशायितातुलपर्वते

निर्मदीकृतशक्रसंवृतनीरदेक्षणनिर्वृते
मञ्जुभाषितमुद्रया कृतबान्धवावलिनिष्क्रमे
कौतुकोच्चलमित्रमण्डलगीतमङ्गलविक्रमे
पादयोज्ज्वलतन्निजस्थलयोजितप्रवराचले
सर्वदा व्रजबान्धवव्रजरक्षणव्रतनिश्चले
फुल्लवल्लवनाथयोर्नवहर्षवीक्षणसक्षणे
कुङ्कुमाक्षतपल्लवाक्षतबल्लवीकृतरक्षणे
छन्नभानुनि शैलसानुनि पीठितप्रवरांशुके
भीतलज्जितशक्रवन्दितपादपङ्कजपांशुके
स्मेरसंमुखविस्फुरन्मुखलुप्तवासवभीभ्रमे
तन्मनोहरवर्णनिर्भरभारतीभरविभ्रमे
गोशिवप्रदमिन्द्रतापदमेत्य निर्भरनन्दिते
गायदम्बरलम्बितुम्बुरुरागडम्बरवन्दिते
मुग्धसौरभदिग्धसौरभदुग्धपूरकृतोक्षणे
कल्पिताखिलपिष्टपातुलतापमण्डलमोक्षणे
मत्तकोकिलविभ्रमे किल माधव त्वयि संमुखी
वर्ततां मम पूरुषोत्तम लोलबुद्धिशिलीमुखी ॥

**हेत्स्विति** । हे माधव, पक्षे हे वसन्त, हे पुरुषोत्तम, मम लोलबुद्धिशिलीमुखी चपलधीभ्रमरी त्वयि संमुखी वर्ततामित्युत्तरेणान्वयः । शक्रवत्स्वद्वैमुख्यमस्या बिनाशायेति भावः । 'मधुकरमधुपमधुव्रतशिलीमुखभ्रमरभृङ्गपुष्पलिहः' इति हलायुधः । त्वयि कीदृशीत्याह—हेतुवादाज्जातो यो जल्पितव्रजो वाक्यसमूहस्तेन वासवस्येन्द्रस्याध्वरं यज्ञं मर्दयतीति तस्मिन् । कारीरीप(पु)त्रेष्टिज्योतिष्टोमादिकमैवान्वयव्यतिरेकाभ्यां फलप्रदं प्रतीतम्, देवता त्वाज्यादिवत्कर्माङ्गम्, न हि कर्मणा विना सा फलं दत्ते, इति प्राणिकर्मानुगुण्येन प्रवृत्ता प्रकृतिश्चलेन रजसा स्वकार्यभूतां मेघमालां प्रवर्तयति सा वारि वर्षतीति चन्द्रस्य हिमवर्षित्ववन्मेघस्याम्बुवर्षित्वं स्वभाव एवेति किमत्रेन्द्रेणेति शुष्कतर्कोत्थापनं हेतुवादः । तेन परमतेन स्वाभीष्टमिन्द्रस्यानादरमापाद्य वैदिकं विप्रादिपूजनं प्रवर्तितवानिति विशिनष्टि—भूसुरोत्कराणां विप्रगणानां गवां महीधरस्य च भक्तवर्यस्य गोवर्धनस्य गिरेः पूजनोत्सवं वर्धयतीति तस्मिन् । पर्वतार्चनस्य संपदर्जने हेतुतां बोधयतीति तस्मिन् । यदुक्तम्—'तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः । य

इन्द्रयागसंभारास्तैरयं साध्यतां मखः ॥ हूयन्तामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः। अन्नं बहुगुणं तेभ्यो देयं वो धेनुदक्षिणाः ॥ अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः। यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥' इति। गिरिरेष तृणोदकादिभिर्गाः पालयति याभ्योऽस्माकं जीविकेत्यभिधायिनीत्यर्थः। भूसुरादिपूजोत्सवाय कल्पिता निष्पादिता अतुलसूपसंकुलाः शष्कुल्यादयो येन तस्मिन्। शाल्यन्नादीनामुपलक्षणमेतत्। पुष्पादिभिर्मण्डितान्यखिलानि गोधनानि येन तस्मिन्। वन्दनमरुणचूर्णम्। गोपमण्डलैः कल्पितमचलस्य गिरेः सानूनां कन्दराणां च शोधनं मार्जनं येन तस्मिन्। उद्भटो महानारवः शब्दो यत्र तादृशे भूधरोत्सवे सज्जितासक्ति नीताखिलबन्धुता सर्वज्ञातिसमूहो येन तस्मिन्। तस्य पर्वतस्य यः परिक्रमः पूजनक्रमश्च तत्र तत्र यो भूरिसंभ्रमो बहुत्वरा तेन संधुते व्याप्ते। क्ष्माधरोपमेन गिरितुल्येन विग्रहोत्तमेन भुक्तानि विस्फुरन्त्योदनानि येन तस्मिन्। यदुक्तम्—'कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः। शैलोऽस्मीति वदन्भूरि बलिमादद्बृहद्वपुः ॥' इत्यादि ॥ मङ्गलाकराः कल्याणखनयो विस्फुरन्तश्चातो वराः श्रेष्ठा ये वृन्दभूता बल्लवास्तान् मोदयतीति तस्मिन्। रुष्टेन वासवेन कृतया वृष्ट्या यः संप्लवो मज्जनं तेन खिन्नं यद्गोकुलं तेन वेष्टिते। इन्द्रत्रासससंकुलस्य बन्धुमण्डलस्य शर्मदमद्भुतं चेष्टितं यस्य तस्मिन्। तादृक् चेष्टितं किमित्याह— दक्षिणेतरेण वामेन पाणिपुष्करेण शीलित उत्पाट्य धृतोऽतुलः पर्वतो येन तस्मिन्। विभ्रमाङ्कुरेण विलासमञ्जरेण निर्धुतमुद्धुरस्य दृप्तस्य जम्भमर्दनस्येन्द्रस्य गर्वितं येन तस्मिन्। गोत्रगह्वरेऽतिविचित्रेऽतिविस्तीर्णे गिरिगर्ते वासिता अम्भरविह्वला अतिवृष्टिव्याकुला आत्मनः सुहृज्जना येन तस्मिन्। तेन चेष्टितेन कारितमुद्भवत्यद्भुतरसार्णवे बान्धवव्रजानां मज्जनं येन तस्मिन्। वृष्टित्रासे निवृत्ते नन्दिताशयैर्मित्रसंचयैर्वीक्षितं विस्फुरद्भ्राजमानमाननं यस्य तस्मिन्। मेदुरया स्मितकौमुद्या कृतं रक्तस्य स्वस्मिन्ननुरागिणो यौवतस्य चन्द्रावल्यादियुवतिवृन्दस्य माननं सत्कारो येन तस्मिन्। तदोर्ध्वस्थितं गिरिराजं वीक्ष्य भीता, कौतुकाक्रान्तं तन्मुखमालक्ष्य नन्दिता, 'कथमयं बालो नवनीतकोमलोऽपि गिरिमीदृशं धत्ते' इति विस्मयान्विता च या माता तस्याः पाणिभ्यामुपलालिते। तदानीं चारुचञ्चललोचनाञ्चलया राधयापि निभालिते। 'एतस्मिन्नपि जनसंबाधे हरिरेष मयि निहितदृष्टिर्धृतगिरिरप्यस्ति, अतोऽस्मै स्मितसुधां वितरामि, यया पुष्टो गिरिं बिभृयात्' इति वक्रं परिदृष्टे इत्यर्थः। तया चोभयत्र रसवृष्टिरभूदिति व्यज्यते। मारुतोन्मदा ये चण्डनीरदमण्डला ये च शक्रनिर्मुक्ता अशनयस्तेषां वारणे निवारके। तथा सति संपदन्धितेनैश्वर्यमत्तेन शक्रेण संचितस्य गर्वस्य यच्चर्वणं तस्य कारणे हेतौ। कर्तरीत्यर्थः। कियन्तं कालं गिरिं दधार तत्राह—सप्तवासरं व्याप्य हस्तसंस्तरे करतल्पे शायितोऽतुलः पर्वतो येन तस्मिन्। सप्तवासरमिति त्रिभुवनमित्यादिन(व)त्। एवं निर्मदीकृतेन शक्रेण संवृतानां नीरदानामीक्षणेन निर्वृते परिहृष्टे। इदानीं झञ्झानिलो निवृत्तः, निर्मलश्चाकाशोऽभूत्, वायुश्च मन्दः सुगन्धिः प्रसरति, गिरिगर्तादितो निःसर्तव्यं

रोचते चेदिति मञ्जुभाषितमुद्रया कृतो बान्धवावलीनां ततो निष्क्रमो येन तस्मिन् । तदा कौतुकोच्चलैर्मित्रमण्डलैर्गीतो मङ्गलविक्रमो यस्य तस्मिन् । बन्धुषु सपरिच्छदेषु निर्गतेषु पादपैरुज्ज्वले तन्निजस्थले योजितः संस्थापितोऽतुलो निरुपमः पर्वतो येन तस्मिन् । महान्तमेतं कार्यभारं कृ(कु)तः स्वीचकार, तत्राह—सर्वदेति । यदुक्तं स्वयमेव—'तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये[1] स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥' इत्येतत् । ततः फुल्लयोः स्वपुत्रविक्रमहेतुकहर्षेण रोमाञ्चितयोर्व्रजनाथयोः पित्रोर्यन्नवं हर्षवीक्षणं तेन सक्षणे । पित्रोः सेवार्थे संपन्नोऽहमद्येति सोत्सवे इत्यर्थः । तदा कुङ्कुमैरक्षतैः पल्लवैश्चाम्रादिकिसलयैरक्षताः पूर्णपाणयो या बल्लव्यस्ताभिः कृतं रक्षणं स्वस्तिवाचनपूर्वकं यस्य तस्मिन् । अथ विजयिनं कृष्णं प्रति शरणार्थिनः शक्रस्यागमनमाह—छन्नेति । छन्नो भानुर्येन तस्मिन्नत्युच्चे शैलस्य सानुनि प्रस्थे विषये शक्रेण पीठितं प्रवरांशुकं यस्मै तस्मिन् । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । हंसतूलीनिभृतविचित्रपट्टाम्बरनिर्मितास्तरणपृष्ठोपधानशोभितं शक्रेण संस्थापितं रत्नसिंहासनमधिष्ठित इत्यर्थः । 'सर्वेश्वरोऽयं महापराधे मयि क्रुद्ध्येत्' इति भीतेन, 'भृत्यस्य मे नेदृशं कर्म युक्तम्' इति लज्जितेन च शक्रेण वन्दिताः पादपङ्कजयोः पांशवो रजांसि यस्य तस्मिन् । हे सर्वेश क्षमस्या(स्वा)ज्ञस्य दासस्य मेऽपराधानिति शक्रेण कृतपादवन्दने इत्यर्थः । 'मे सर्वेशत्वं त्वयेदानीं ज्ञातम्' इति स्मेरेण, 'अपराधं कुर्वतापि त्वया कश्चिन्म(न्मे) मनोरथः साधितः' इति संमुखेन, विस्फुरतातिप्रसन्नेन च मुखेन लुप्तो वासवस्य भीभ्रमो येन तस्मिन् । तस्य वासवस्य मनोहरो वर्णनिर्भरो 'गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम् । स्थीयतां स्वाधिकारेषु भवद्भिर्दम्भवर्जितैः ॥' इत्यादिलक्षणो यस्यास्तां भारतीं बिभर्ति तादृशो विभ्रमो यस्य तस्मिन् । भीतं लज्जितं च शक्रं प्रियवचसाश्वासितवतीत्यर्थः । गोशिवप्रदं गवां मङ्गलदातृ । इन्द्रतापदमेत्य निर्भरेणातिशयेन नन्दिते । गवामिन्द्रो भूत्वातिहृष्टे इत्यर्थः । 'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां गास्यन्ति भुवि शाश्वतम् ॥' इति हरिवंशे । तदा गायन्नम्बरवर्ती नभोवर्ती यः सनारदस्तुम्बुरुस्तस्य रागडम्बरेण वन्दिते । ततो मुग्धेन सौरभेण दिग्धो यः सुरभ्या गोर्दुग्धपूरस्तेन कृतमुक्षणमभिषेको यस्य तस्मिन् । ततः कल्पितं कृतमखिलानां पिष्टपानां देवानामतुलस्य तापमण्डलस्य मोक्षणं येन तस्मिन् । मत्तकोकिलस्येव विभ्रमो वाग्विलासो यस्य तस्मिन् । मञ्जुभाषिणीत्यर्थः । माधवेत्यादिकं योजितं प्राक् ॥

हरेर्वामभुजाग्रे स्थितस्य गिरेः शोभामतिचारुत्वाद्वर्णयति—

श्यामोत्तुङ्गभुजार्गले विनिहितः कृष्णेन वृष्टिच्छटा-
धौतैर्धातुभिरेष तालकुनटीमुख्यैर्गिरिर्गौरितः ।

---

१. 'गोपाये रक्षिष्यामि' इति श्रीधरस्वामिनः.

शुद्धाष्टापदकल्पितस्य विपुलच्छत्रस्य लक्ष्मीभरं
विभ्रद्गारुडरत्ननिर्मितमहादण्डस्य विभ्राजते ॥ २७ ॥

**श्यामेति** । कृष्णेन श्यामोत्तुङ्गभुजार्गले विनिहितस्तस्योपरि स्थापित एष गिरिर्विभ्राजते । कीदृशः । वृष्टिच्छट्यधौतैस्तालकुनटीमुख्यैर्धातुभिर्गौरितः पीतीकृतः । तत्रोत्प्रेक्षा । किं कुर्वन् भ्राजते—शुद्धैरष्टापदैः स्वर्णैः कल्पितस्य रचितस्य गारुडरत्नेनेन्द्रनीलेन निर्मितो महान् दण्डो यस्य तस्य विपुलच्छत्रस्य लक्ष्मीभरं बिभ्रदिति सादृश्ये पर्यवसानान्निदर्शनालंकारः ॥

मुग्धसौरभं छन्दः ।

**मुग्धेति** । 'मुग्धसौरभनाम धेहि रसौ जजौ च भरौ यदा' इति । तदनुसारि तद्विरचितम् । चर्चरीत्यन्यत्र ॥

अथ नन्दाहरणम् ।

अथ वरुणमन्दिरान्नन्दानयनं संक्षेपतस्तावदाह—

नन्दापहारचकितस्य किरीटशृङ्ग-
भृङ्गावलीपरिचितं सलिलेश्वरस्य ।
हृद्यं सनन्दनदुरापपरागगन्धं
वन्दे मुकुन्द तव देव पदारविन्दम् ॥ २८ ॥

**नन्देति** । हे मुकुन्द हे देव, तव पदारविन्दमहं वन्दे । कीदृशम् । सलिलेश्वरस्य वरुणस्य किरीटशृङ्गाणि मुकुटाग्राण्येव भृङ्गावली तया परिचितं वेष्टितम् । पुनः कीदृशम् । सनन्दनेनापि दुरापः परागगन्धो यस्य तत् । सलिलेश्वरस्य कीदृशस्येत्याह—**नन्देति** । चकितस्य भीतस्य । 'दरितश्चकितो भीतस्त्रस्तो भीरुश्च कातरः' इति हलायुधः ॥

नीराधिपभृत्याहृतगोपेश्वरमार्गाश्रित
लब्धाम्बुधिनाथालय पाशीडितलीलाचय
शुद्धोज्ज्वलवाणीसुध दासायितपाशायुध
मन्तुक्रमसंमार्जन तन्निर्मितहर्षार्जन
भक्त्यर्पितनन्देक्षण लब्धातुलचित्तक्षण
पित्रा सह गेहं गत मातृक्रमहारिव्रत
सर्वाद्भुतसंदर्शनचित्तान्वितनन्दानन
संकर्णितलोकोत्तरतत्तन्निजचर्याभर-

संभावितसर्वेश्वरभावोत्सुकगोपोत्कर-
हृद्येङ्गितसंवेदनसंकल्पिततत्साधन
दिव्यहृदमध्यार्पितगोधुग्गणसंदर्शित-
सच्चिन्मयलोकोत्तम निष्कासितगोपभ्रम
संधुक्षितबन्धुव्रज संचारितकीर्तिध्वज
गोपीगणशर्माकर मां पालय दामोदर ॥

**नीरेति** । हे दामोदर, मां पालयेति परेणान्वयः । नीराधिपभृत्येन 'कलार्धो द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि । आ मध्याह्नात् क्रियाः सर्वाः कर्तव्याः शंभुशासनात् ॥' इति शास्त्रार्थानभिज्ञेन वरुणसेवकेनाहृतस्य तल्लोकं नीतस्यैकादशीमुपोषितस्य कलामात्रायां द्वादश्यां पारणादराभिनिवेशिनस्तच्छास्त्रबलेनारुणोदयात्पूर्वमेव स्नानादिवैदिकक्रियासिद्धये जलं प्रविष्टस्य गोपेश्वरस्य पितुर्मार्गमाश्रित हे । पितृसेवकविज्ञापनया तदन्वेषणाय प्रवृत्तेत्यर्थः । लब्धोऽम्बुधिनाथस्यालयो येन । 'प्रचेता वरुणः पाशी यादः पतिरपां पतिः' इत्यमरः । पाशिना वरुणेनेडितो लीलाचयो यस्य । वरुणं प्रति शुद्धोज्ज्वला च वाणीसुधा यस्य । दासायितः पाशायुधो यस्य । मन्तुक्रममपराधग्लानिं संमार्जयति वरुणस्येति तथा । तेन दास्यभक्तिभृता वरुणेन निर्मितं हर्षार्जनं यस्य । वरुणसपर्यापरितुष्टेत्यर्थः । भक्त्यार्पिते नन्दे ईक्षणे येन हे । विनयेन पितरं पश्यन्नित्यर्थः । पितरं वीक्ष्य लब्धोऽतुलश्चित्तक्षणो हृदयोत्सवो येन । इतो द्वयं स्फुटार्थम् । सर्वैरद्भुतसंदर्शनैर्वरुणवैभवतत्कृतस्वपुत्रसत्कारवीक्षणैश्चिन्तान्वितं विस्मययुक्तं नन्दाननं यस्मात् । नन्दमुखात् संकर्णितः श्रुतो लोकोत्तरोऽलौकिको यस्तत्तन्निजचर्याभरः स्वपुत्रस्तुतिपूजालक्षणस्तेन संभावितो यः कृष्णस्य सर्वेश्वरभावस्तस्मिन्नुत्सुकस्य गोपोत्करस्य हृद्यं यदिङ्गितं हरिरस्मान् स्वलोकं दर्शयत्वित्येवंविधं तस्य संवेदनेन दर्शयिष्यामि(मी)ति संकल्पितं तत्साधनं येन हे तादृश । कथं तत्स्यादिति चेत्तत्राह—दिव्यस्य हृदस्याक्रूरतीर्थस्य मध्येऽर्पितो निमज्जितो यो गोधुग्गणो गोपसमूहस्तस्मै संदर्शितः सच्चिन्मयो ब्रह्मात्मको लोकोत्तमो व्रजान्तर्भूतो व्रजस्यैव प्रकाशविशेषो येन । एवमाह श्रीशुकः—'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद्ब्रह्म ज्योतिः सनातनम् ॥ ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः । ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात्पुरा ॥' इति । एवं निष्कासितोऽस्मात्परिदृश्यमानाद्व्रजादुत्तमो लोकोऽस्तीति गोपानां भ्रमो येन । तेन संधुक्षितः परिहर्षितो बन्धुव्रजो येन । एवमाह श्रीशुकः—'नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः । कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मिताः ॥' इति । एवं संचारितः कीर्तिध्वजो भक्तवाञ्छितपूरकत्वलक्षणो येन । गोपीगणानां शर्माकर सुखखने हे दामोदर ॥

प्रकरणनिष्कृष्टार्थमाह—

लोको रम्यः कोऽपि वृन्दाटवीतो नास्ति क्वापीत्यञ्जसा बन्धुवर्गम् ।
वैकुण्ठं यः सुष्ठु संदर्श्य भूयो गोष्ठं निन्ये पातु स त्वां मुकुन्दः ॥ २९ ॥

**लोक इति** । वृन्दाटवीतो दृश्यमानाद्वृन्दावनात्तु कोऽपि रम्यो लोकः क्वापि नास्तीति बोधयितुं बन्धुवर्गं प्रति यो वैकुण्ठं परमव्योमोर्ध्वप्रदेशस्थत्वेन शास्त्रप्रसिद्धं गोलोकं सुष्ठु दृश्यमानव्रजान्तर्भूततया संदर्श्य प्रदर्श्य तेन तस्य भ्रान्तिमपनीय भूयः पुनस्तं गोष्ठं दृश्यमानं व्रजमेव निन्ये स मुकुन्दस्त्वां पातु । ननु सच्चिन्मयो लोकश्चेद्व्रजस्यैव प्रकाशस्तर्हि व्रजवैपरीत्यभानं कुत इति चेत् भगवति नरदारकत्ववत्तदिति गृहाण ॥

संफुल्लच्छन्दः ।

**संफुल्लेति** । 'छन्दस्तायतो लौ यदि संफुल्लकनामाभवति' इति ॥ तदनुसारि तद्विरचितम् ॥

अथ रासक्रीडा ।

वर्णनीयाया रासलीलाया निखिलभगवल्लीलाभ्योऽतिशयितत्वं तावदाह—

परिस्फुरतु सुन्दरं चरितमत्र लक्ष्मीपते-
स्तथा भुवननन्दिनस्तदवतारवृन्दस्य च ।
हरेरपि चमत्कृतिप्रकरवर्धनः किं तु मे
बिभर्ति हृदि विस्मयं कमपि रासलीलारसः ॥ ३० ॥

**परीति** । लक्ष्मीपतेः परमव्योमनाथस्य लक्ष्म्या सह पारमैश्वर्यप्रधानं चरितवृन्दं तत्तच्छास्त्रख्यातमत्र जगति परिस्फुरतु । तथा तदवतारवृन्दस्य नृसिंहवराहादेश्च तत्परिस्फुरतु । तेन तेन मे न विस्मयः । किं तु रासलीलारसो मे हृदि कमप्यनिर्वाच्यं विस्मयं बिभर्ति । कीदृशः । हरेर्नन्दसूनोरपि स्वयं भगवतस्तल्लीलाकर्तुश्चमत्कृतिप्रकरवर्धनः । यदुक्तम्—'सन्ति यद्यपि मे प्राज्या लीलास्तास्ता मनोहराः । न हि जाने स्मृते रासे मनो मे कीदृशं भवेत् ॥' इति ॥

शारदविधुवीक्षणमधुवर्धितमदपूर
इष्टभजनवल्लभजनचित्तकमलसूर
गोपयुवतिमण्डलमतिमोहनकलगीत
मुक्तसकलकृत्यविकलयौवतपरिवीत
योषिदमलनेत्रकमलल्लोभिदशनमाल

---

१. 'तात्तगणात्परीभूताद्यगणात्परीभूतौ लघू' इत्यर्थः. यद्वा 'छन्दस्ततत्तयौ' इति पाठो भवेत्.

कौतुकभरनिर्मितखरनर्मवचनजाल
तन्निशमनसाश्रुनयनभीरुभिरभिनीत
वल्लभजनखेदशमनविभ्रमभरवीत
श्यामविमलकान्तिपटलधूतमदनलक्ष
रक्तिमधरयोषिदधरचुम्बमस्वनदक्ष
विग्रहपदयौवतमदवीक्षणपरिलीन
चण्डिमधरभक्तनिकरमानभुजगवीन
लोलगतिभिरार्तमतिभिराभिरनभिदृष्ट
पुष्पगुरुषु वल्लितरुषु भूरिषु परिपृष्ट
लब्धनलिनगन्धपुलिनगोप्यनुकृतलील
शश्वदमितरङ्गरमितराधिक वरशील
फुल्लसुषमवन्यकुसुममण्डितदयिताङ्ग
केलितलिनवक्रनलिनभृङ्गिततदपाङ्ग
निर्भररतिवर्धनमतिनिह्नुतनिजदेह
प्रेमशरणवल्लभगणमानसकुशलेह
दृष्टविकलराधनिखिलयौवतपरिहूत
भूरिरुदिततत्तदुदितवीथिभिरभिभूत
विक्लवतनुगोपसुतनुलोचनपदवीत
चारुहसन पीतवसन कुङ्कुमभरपीत
नन्दितमतिघोषयुवतिवाससि विनिविष्ट
तुष्टिरचनचारुवचनधूतहृदयरिष्ट
संमदचयफुल्लहृदययौवतततरास
कुन्दरदनचारुवदनशोभितमृदुहास
द्विद्वियुवतिमध्यवसतिवर्धितरुचिकाम्य
लुब्धललितभृङ्गवलितचम्पकततिसाम्य
स्वस्वसविधबोधिविविधवेशयुवतिहृद्य
शंकरमुखदैवतसुखवर्धिनटनविद्य

मोहितशशिमण्डल वशिखेचरमुनियोष
किंकिणियुतनूपुररुतलम्भितपरितोष
सौरभपुरमिष्टखपुररञ्जितमधुरास्य
सुष्टुमहितगीतसहितयौवततततलास्य
विश्वकरणधैर्यहरणकारणकलगान
रक्तिभिरुपरुद्धपशुपभीरुकलितमान
कूजिवलयताण्डवलयघूर्णितसुरराजि
कोमलरणषट्पदगणगुञ्जितभरभाजि
तत्र रहसि रासमहसि संभृतवरशोभ
मौक्तिकशुचिसुस्मितरुचिसृष्टयुवतिलोभ
मार्जितरतिखिन्नयुवतिमण्डलमृदुगण्ड
प्रेमललहकामकलहपण्डितभुजदण्ड
विभ्रमपरवल्गुनखरचिह्नितनववाम
सौष्ठवयुतकान्तिभिरुत काममनसिकाम
शीतसलिलकेलिकलिलचित्तयुवतिसिक्त
दीव्यदचिरजातरुचिरदीप्तिभिरतिरिक्त
देवरचितपुष्परचितवृष्टिभिरभिवृष्ट
प्रेमसरलकेलितरलगोष्ठसुतनुदृष्ट
विस्फुरदिभनायकनिभ मञ्जुलजलखेल
चञ्चलकरपुष्करवरकृष्टयुवतिचेल
रत्नभवनसंनिभवनकुञ्जविहितरङ्ग
रागनिरतयौवतरतिचिह्नविलसदङ्ग
संधृतनय नन्दतनय सुन्दर जय वीर
यामुनतटमण्डलनट रासरचनधीर
पापिनि मयि दुर्गतिजयिपादभजनलेश
धेहि करुण दृष्टिमरुणलोचन निखिलेश ॥

शारदेति । शारदस्य विधोर्वीक्षणमेव मधु तेन वर्धितो मदपूरो यस्य हे । शर-

चन्द्रदर्शनमस्तेत्यर्थः ॥ इष्टं वाञ्छितं भजनं कृष्णानुकूल्यं येषां तादृशानां वल्लभजेनतानां गोपाङ्गनानां चित्तकमलेषु सूर सूर्य हे । तन्मनोविकासकेत्यर्थः ॥ गोपेति स्फुटार्थः । हे वंशीनादाहूतगोपयुवतीकेत्यर्थः ॥ मुक्तानि सकलानि गेहकृत्यानि यैस्तादृशानि विकलानि वंशीनादमाधुर्येण विह्वस्तानि यानि यौवतानि युवतिवृन्दानि तत्संनिधिमागतानि तैः परिवीत परिवेष्टित हे ॥ योषितां व्रजाङ्गनानां यानि अमलानि नेत्रकमलानि तेषां लोभो दिदृक्षालक्षणो विद्यते यस्यां तादृशी दशनमाला यस्य ॥ कौतुकभराय तद्व्यञ्जकवक्रवचनश्रवणलक्षणा[य] निर्मितं खरं दुःसहं नर्मवचनजालं येन । तच्च 'कुलाङ्गनाभिर्निशि वनं कस्मादागतम्, गर्हितमेतत्, शरच्चन्द्राञ्चितं वनं द्रष्टुमागतं चेत्तर्हि जातमेव तत्, मां चेद्द्रष्टुमागतास्तर्हि सर्वे मयि न केवलं भेनत्य (?) एवारज्यन्ति, अतःपरं त्वरया गृहगमनमेवोपयुक्तम्, इत्येवंरूपं बोध्यम् । तस्य खरस्य नर्मवचनजालस्य निशमनेन श्रवणेन साश्रुनयनाभिर्भीरुभिर्गोपाङ्गनाभिरभिनीत हे । 'भामिनी भीरुरङ्गना' इति धनंजयः॥ 'त्वदेकप्रपन्नास्त्वै(स्त्वयै)वाहूता निश्यस्मान् प्रति नेदृग्वाक्यं तव रसिकशेखरस्योचितम्' इति कृतानुनयेत्यर्थः । ततो वल्लभजनानां प्रियाणां तासां खेदशमनो यो विभ्रमभरस्तेन वीत व्याप्त हे ॥ तदा श्यामेन विमलेन कान्तिपटलेन धूतं कम्पितं मदनानां लक्षं येन हे । प्रियापरिषद्वैशिष्ट्येन मदनमोहनच्छविभरेत्यर्थः । रक्तिमधराणां विद्रुमरुचीनां योषिदधराणां चुम्बनस्वने दक्ष निपुण हे । एवमवर्णि श्रीशुकेन—'इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः । प्रसह्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः । उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः । क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयांचकार ॥' इति ॥ तदा विग्रहस्य रासनृत्यप्रतिकूलस्य विरोधस्य पदमाश्रयो यो यौवतमदो युवतीनां गर्वः स्वदत्तसौभाग्यहेतुस्तस्य वीक्षणेन परिलीन तत्रैवान्तर्हित हे । 'कायसंग्रामविस्तारप्रविभागेषु विग्रहः' इति विश्वलोचनकारः॥ अन्तर्धाने फलमाह—चण्डिमधरस्य सकोपस्य भक्तनिकरस्य तस्य युवतिगणस्य यो मानभुजगोऽहमुत्कृष्टास्मीति गर्वसर्पस्तस्मिन् वीन गरुड हे । मद्विच्छेदेन गर्वे विनष्टे सत्वै(वैं)क्रमत्येन रासो भावीति भावेनान्तर्हितेत्यर्थः । एवमुक्तं श्रीशुकेन—'एवं भगवतः कृष्णाल्लब्धमाना महात्मनः । आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ तासां तत्सौभगमदं वीक्ष्य मानं च केशवः । प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥' इति ॥ अन्तर्धाने सति लोलगतिभिरार्तमतिभिस्ताभिर्युवतिभिरनभिदृष्ट हे । ताभिर्भूरिषु पुष्पगुरुषु [वल्लितरुषु] च परिपृष्ट हे । एवमाह श्रीशुकः—'अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः । अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् । पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥' इत्यादि । लब्धो नलिनानां गन्धो यत्र तादृशी(शि) पुलिने गोपीभिरनुकृता लीला पूतनावधशकटभङ्गादिका यस्य ।

---

१. 'जनानां' इत्येव पाठो मूलानुसारी.

एवमुक्तं श्रीशुकेन—'इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः । लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिका ॥' इत्यादि । यदा हरिरन्तरधात्तदा श्रीराधां नीत्वैवान्तरधादित्याह—शश्वन्निरन्तरममितेन रङ्गेन(ण) रमिता राधिका येन । सर्वोत्कृष्टायाः श्रीराधिकाया आभिरूप्येण सत्काराद्वरं शीलं स्वभावो यस्य । तदेवाह—फुल्ला सुषमातिशोभा येषां तादृशैर्वन्यकुसुमैर्मण्डितानि दयितायाः श्रीराधाया अङ्गानि येन ॥ केलितलिनमद्भुतक्रीडास्पदं यत् स्वस्य वक्त्रनलिनं तस्मिन् भृङ्गितस्तदपाङ्गो दयितानेत्रान्तो येन । 'तल्पं च तलिनं स्मृतम्' इति हलायुधः । एवमाह श्रीशुकः—'तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः । वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ कस्याः पदानि चैतानि याताया नन्दसूनुना । अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ अनयाराधितो नूनं भगवान् हरिरीश्वरः । यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥' इति । इत्थं च श्रीराधायाः परमोत्कर्षः साधितः । अथ सर्वैकमत्यं विना रासो न भवेदतस्तत्संपादनाय प्रवृत्त इत्याह—निर्भरेण सर्वैकमत्यातिशयेन या रतिः रासक्रीडा तद्वर्धनी या मतिः राधिकातोऽप्यन्तर्धाने सति सर्वैकमत्यं स्यादिति बुद्धिस्तया निह्नुतोऽन्तर्धापितो निजदेहो येन हे । राधिकाकृतकार्येत्यर्थः । प्रेमशरणस्य स्नेहाधीनस्य वल्लभगणस्य प्रियानि च यस्य मानसकुशलं यतस्तादृगीहा यस्य हे । निखिलप्रेयसी शुभदचेष्टितेत्यर्थः । सर्वैकमत्येन राससुखाय कृतसर्वान्तर्धानेति यावत् । दृष्टा विकला दुःखिता राधा येन तादृशेन निखिलेन यौवतेन परिहूताहूत हे । एवमाह श्रीशुकः—'यां गोपीमनयं कृष्णो विहायान्याः स्त्रियो वने । सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् । न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यते । अन्विच्छन्त्यो भगवतो मार्गं गोप्यो विदूरतः । ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥' इति । राधिका प्रेमाणं वीक्ष्य तस्यां परित्यक्तेर्ष्येण सर्वैक्यमत्यहेतुकरासार्थिना कृष्णेनैवं कृतमिति तास्मिन्ननसूयुना युवतिगणेन हे रसिकमणे देहि दर्शनमित्याकारिने(?)त्यर्थः ॥ स्वसौभाग्यं पश्चादायान्तीः स्वसखीः प्रतिदर्शयितुं श्रीराधाया इदं चेष्टितं सर्वैक्यमत्येन राससुखाय हरेस्तथा चेष्टितमिति बोध्यम् । भूरीणि रुदितानि यासु तथाभूतायास्तासां तत्तदुदितवीथ्यो 'जयति तेऽधिकम्' इत्यादिवाक्यश्रेणयस्ताभिरभिभूतताधीन्यं नीत हे । विक्लवतनूनां कान्तविच्छेदविह्वलदेहानां गोपसुतनूनां लोचनपदवीमित हे । हे चारुहसन, हे पीतवसन, हे कुङ्कुमभरपीत । एवमाह श्रीशुकः—'इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा । रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः । पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥' भगवद्दर्शनेन नन्दितमतीनां घोषयुवतीनां वाससि पीततां नीत उत्तरीयचये विनिविष्ट प्रेमसिद्धान्तोपदेशाय ताभिराचार्यतयासने निवेशितेत्यर्थः । एवमाह श्रीशुकः—'तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः । स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीकॢपन्नासनमात्मबन्धवे ॥' इति । तुष्टिं रचयन्ति यच्चारु मनोहरं वचनं तेन धूतं

तद्धृदयानां रिष्टं रूक्षोऽयं नन्दसूनुरित्यशुभं येन भजतीरस्मानबलाः कस्मान्निशि त्यक्तवानसीति पृष्टो मदर्थंत्यक्तं लोकवेदस्वानां वो मदनुरागवृद्धये क्षणिकस्त्याग इत्युत्तरिते तदेकहितेच्छूनामस्माकं भावं नाद्याप्ययमगृह्णादिति तासामप्रसादमालक्ष्य तादृशीनां मदेकान्तभक्तानां भवतीनां सदैवाह मृण्ववा(?)स्मीति 'न पारयेऽहं निरवद्य संयुजां स्वसाधुकृत्यं विबुधायुषापि वः। या माभजन्दुर्जरगेहश्शृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥' इति पारमार्थिकमुत्तरं ददौ। तेन तासां प्रसादोऽभूदित्यर्थः। या भवत्यो दुर्जरगेहशृङ्खलाः संवृश्च्य मामभजन्, ताः संवृश्च्याहं या भवतीर्मा भजन्ताभजमित्यर्थः। ततश्च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति प्रतिज्ञातानिर्वाहादहमन्येवेत्यर्थः। ततः प्रेमवश्यतावेदि भगवद्वचनोद्भूतेन—संमदचयेन हर्षराशिना फुल्लहृदयं यस्य तेनैकमत्यवता यौवतेन ततो रासो येन हे तादृश। कुन्दतुल्यै रदनैश्चारुणि वदने शोभितो मृदुहासो यस्य हे तादृश। द्वयोर्द्वयोर्युवत्योर्मध्ये या वसतिरवस्थितिस्तया वर्धिता या रुचिस्तया काम्य स्पृहणीय हे। एवमाह श्रीशुकः—'रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः। योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः॥ प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः॥' सर्वासां युगपत्सांनिध्यं गतिलाघवादिति व्याख्यातारः। तत्रोपमा—लुब्धं ललितैर्भृङ्गैर्वेलितायाश्चम्पकततेः साम्यं येन। श्रीशुकस्त्वेवमाह—'तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः। मध्येमणीनां हैमानां महामारकतो यथा॥' इति। स्वस्वसविधे कृष्णं बुध्यन्ते या विविधवेशा युवतयस्तासां हृद्य मनोहर हे। शंकरमुखानां दैवतानां सुखवर्धिनी नटनविद्या यस्य हे। शिवादिविस्मापकलास्येत्यर्थः। रासलास्येन मोहिताः शशिमण्डलादयो येन। वशिनः खेचरा नभश्चारिणो गन्धर्वादयः, मुनियोषा ऋषिपत्न्यः, किंकिणीभिर्युतानां नूपुराणां रुतैर्लम्भितः शंकरादीन्प्रति प्रापितः परितोषो येन। भगवद्रासक्रीडादर्शनाय शंकरादयः समागतास्ते सर्वे रासोत्सवानन्देन मोहिता यथाधिकारमेव लीलांशान् ददृशुः। परिचारिकया योगमायया रहस्यांशानामाच्छादनात्। एवमाह श्रीशुकः—'यं मन्येरन्नभस्तावद्विमानशतसंकुलम्। दिवौकसां सदाराणामौत्सुक्यनिभृतात्मनाम्॥ ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः। जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम्॥ वलयानां नूपुराणां किङ्किणीनां च योषिताम्। स प्रियाणामभूच्छब्दस्तुमुलो रासमण्डले॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः। कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत्॥' इति। सौरभस्य पुरं निवासस्थानं यन्मिष्टं ताम्बूलं यश्चैलालवङ्गादियोगी खपुरः क्रमुकफलं तेन रञ्जितं मधुरास्यं यस्य सप्रियस्य हे तथाभूत। 'खपुरः क्रमुके भद्रे'। सुष्ठु महितेन सम्यक्पूजितेन गीतेन सहितं यद्यौवतं तेन ततं लास्यं यस्य। एवमवर्णि श्रीशुकेन—'उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः। कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम्॥ काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः। उन्निन्ये पूजिता तेन प्रीयतां साधु साध्विति॥' इति। विश्वेषां शंकरादीनां यानि करणानि श्रोत्रनेत्रमनांसि तेषां धैर्यहरणे कारणं कलगानं यस्य। रक्तिभिरनुरागैरुपरुद्धा नियन्त्रिता याः पशुपभीरवो गोपाङ्गनास्ताभिः कलितो मानः सत्कारो यस्य। एवमाह श्रीशुकः—

'गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन। मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः(?)॥' इति। तत्र रहसि विजातीयजनवर्जिते रासमहसि तन्नृत्योत्सवे संभृता वरशोभा येन। 'त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्' इति शुकोक्तेः। तत्र रासमहसि कीदृशे। कूजीनि झणत्कारीणि वलयानि कङ्कणानि यत्र तथाभूतेन ताण्डवलयेन घूर्णितः सुरराट् शक्रो येन तस्मिन्। कोमलो मृदुलो रणः शब्दो यस्य षट्पदगणस्य गुञ्जितभरं भजति तस्मिन्। सौरभलब्धभृङ्गध्वनियुक्त इत्यर्थः। मौक्तिकशुचिरत्युज्ज्वला या सुस्मितरुचिस्तया सृष्टो जनितो युवतीनां लोभः स्वस्मिन् वाञ्छा येन। स्वपाणिना मार्जिता रतिखिन्नानां युवतिमण्डलानां मृदुगण्डा येन। प्रेम्णा लल्यते ईप्स्यते यः कामकलहः समाश्लेषादिस्तस्मिन् पण्डितौ भुजदण्डौ यस्य। एवमवर्णि श्रीशुकेन—'कृत्वा तावन्तमात्मानं यावतीर्व्रजयोषितः। रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया॥ तासामतिविहारेण श्रान्तानां वदनानि सः। प्रामृजत्करुणः प्रेम्णा शंतमेनाङ्गपाणिना॥' इति। विभ्रमपराः कुचक्षतक्रियासक्ता ये वल्गुनखरास्तैर्वक्षसि विहिता नवा वामा येन। बाहुप्रसारपरिरम्भा इत्याद्युक्तेः। सौष्ठवयुताभिः प्रशस्ताभिः कान्तिभिरुत ख्यात हे। उङ्शब्दे धातुः। काममनसि काम हे। साक्षी मन्मथ इत्युक्तेः। हे मन्मथाधिकसौन्दर्येत्यर्थः॥

अथ जलक्रीडामाह—शीतानां सलिलानां केलिभिः कलिलानि व्याप्तानि चित्तानि यासां ताभिर्युवतिभिः सिक्त हे। दीव्यन्त्योऽचिरजातास्तात्कालिक्यो या रुचिरा दीप्तयः कान्तयस्ताभिरतिरिक्त समधिक हे। देवरचितैर्विचित्रैः पुष्पै रचिताभिर्वृष्टिभिरभिवृष्ट हे। प्रेम्णा सरलाभिः केलिषु तरलाभिर्गोपसुतनुभिर्दृष्ट निरीक्षितकेलिचापल्य हे। विस्फुरन् यदिभनायको गजराजस्तन्निभ तत्सदृश हे। हे मञ्जुलजलखेल। चञ्चलं यत्करपुष्करं पाणिपद्मं पक्षे पाणिरूपकरिशुण्डाग्रं तेन वरेण कृष्टानि युवतीनां चेलानि येन। 'द्विरदकराग्रे पद्मे खड्गफले व्योम्नि मद्यभाण्डमुखे। अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम्॥' इति हलायुधः। रत्नभवनसंनिभवनकुञ्जेषु विहितो रङ्गो येन। रागनिरतं तस्मिन् सानुरागं यद्यौवतं तत्कृतैरतिचिह्नैर्विलसन्त्यङ्गानि यस्य। एवमाह श्रीशुकः—'सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग। वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः॥ ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे। चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः॥' इति। सम्यग्भृतः प्रीतिरीतौ नयो न पारयेऽहं निरवद्यसंयुजामित्याद्युक्तलक्षणो येन। त्वं जय। हे यामुनतटमण्डलनट, हे रासरचनधीर। दुर्गतिमविद्यां जययत्यं(?)पदन्ति तादृशः शृङ्गारानुसारी पादभजनलेशोऽपि यस्य। एवमाह श्रीशुकः—'विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः। भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः॥' इति। हे करुण दयानिधे, पापिनि मयि दृष्टिं कृपाकटाक्षं निधेहि। हे अरुणलोचन, हे निखिलेश, इति॥

उक्तमर्थमनुसरन्नाह—

रम्भोरूनिकुरम्बनिर्भरपरीरम्भेण लब्धद्युते-
विभ्राणस्य तडित्कदम्बविलसत्कादम्बिनीविभ्रमम् ।
क्रीडाडम्बरधूतजम्भमथनस्तम्बेरमोरुश्रियो
रासारम्भरसार्थिनस्तव विभो वन्दे पदाम्भोरुहम् ॥ ३१ ॥

**रम्भोर्विति ।** हे विभो, तव पादारविन्दमहं वन्दे । तव कथंभूतस्य । रासारम्भेण यो रसः परमानन्दस्तमर्थयते प्रतिक्षणं वाञ्छति तच्छीलस्य । तत्कथमित्यपेक्षायां विशिनष्टि—रम्भोरूणां व्रजसुभ्रुवां निकुरम्बस्य समूहस्य यो निर्भरपरीरम्भस्तेन लब्धद्युतेः । तत्रोपमा—तडित्कदम्बैर्विद्युद्वृन्दैर्विलसन्ती या कादम्बिनी मेघमाला तस्या विभ्रमं भ्रान्तिं बिभ्राणस्य । एवमाह श्रीशुकः—'कृष्णवध्वो गायन्त्य········स्तडित इव ता मेघचक्रे विरेजुः' इति । क्रीडाडम्बरेण धूता तिरस्कृता जम्भमथनस्तम्बेरमस्येन्द्रगजस्योर्वी श्रीर्येन तस्येति । स्वक्रीडयैरावतं तिरस्कुर्वत इत्यर्थः ॥

ललितभृङ्गच्छन्दः ।

**ललितभृङ्गेति ।** 'विद्धि ललितभृङ्गमखिलवन्दिहृदयलोभि । पञ्चकयतिधारि भसनजे तनगलशोभि' इति । तदनुसारि त्ताद्विरचितम् ॥

रासरसिकं कृष्णं पुनः स्तौति—

उल्ललब्लवललनाधरपल्लवचुम्बनोल्लसितम् ।
नौमि समल्लीमाल्यं हरिमिह हल्लीसकोत्फुल्लम् ॥ ३२ ॥

**उल्लेति ।** हरिमहं नौमि । कीदृशम् । उल्लानां हरिमीप्सन्तीनां बल्लवललनानां येऽधरपल्लवास्तेषां चुम्बने उल्लसितं सहर्षं मल्लीमाल्येन सहितं हल्लीसके रासनृत्ये उत्फुल्लं सरोमाञ्चम् ॥

अथ सुदर्शनादिमोचनम् ।

अथ वर्णनीयं सुदर्शनादिमोचनं व्यञ्जयन्नाह—

बिभ्रतं श्रवणसीम्नि शारदं पद्ममुज्ज्वलकलाविशारदम् ।
बल्लवीहृदयहारनायकं हन्त चित्त भज गोष्ठनायकम् ॥ ३३ ॥

**बिभ्रतमिति ।** हन्तेति हर्षे । हे चित्त, गोष्ठनायकं व्रजयुवराजं कृष्णं भज । कीदृशम् । श्रवणसीम्नि कर्णोपान्ते शारदं पद्मं बिभ्रतम् । उज्ज्वलस्य शृङ्गारस्य कलासु विशारदं निपुणम् । स्फुटमन्यत् ॥

भूरुहोल्लसदम्बिकावनमण्डलान्तरभूमिपावन-
मब्जसंभवकन्यकोदकनिर्मिताप्लवमक्षिमोदक-

वारिदोज्ज्वलकान्तिडम्बरमाप्तकाञ्चनभास्वदम्बर-
मात्तबल्लवराड्भुजंगममूर्तिकल्पितपादसंगम-
मुग्रसंकटभाक्सुदर्शनशापमोचनमिष्टदर्शन-
मात्मवल्लभनन्दमोचनमुद्धृताखिलबन्धुशोचन-
माश्रयामि भवन्तमुज्ज्वलकान्तिकन्दलधूतकज्जल
मानितोज्ज्वलशर्वरीमुखमाप्तपूर्वजसङ्गमुन्मुख-
बल्लवाखिलवल्लभातुलनेत्रखञ्जनविभ्रमाकुल-
मद्भुतामलगीतमोहितबल्लवीकुलमात्तलोहित-
चन्दनं खलयक्षनायकभीतयौवतशान्तिदायक-
मुग्रविग्रहयक्षमर्दनमङ्गनागणरङ्गवर्धन-
माप्तगुह्यकरत्ननन्दितपूर्वजं भुवनेन्द्रवन्दित-
पादपद्म भवन्तमाहितगोकुलोत्सवमङ्गनाहित
नौमि माधव मां कृपालय दुर्गतं जगदीश पालय ॥

**भूरुहेति** । हे उज्ज्वलकान्तिकन्दलधूतकज्जल श्यामसुन्दर, भवन्तमाश्रयामीति परत्रान्वयो द्रष्टव्यः । कीदृशम् । भूरुहैर्वृक्षैरुल्लसच्छोभमानं यन्मथुरोपान्तवर्त्यम्बिकावनमण्डलं तदन्तरे या भूमिस्तां पावयति स्वचरणसंचारेणेति तम् । तत्र वहन्त्या अब्जसंभवकन्यकायाः सरस्वत्या उदके निर्मित आप्लवः स्नानं येन तम् । तत्र स्नान्तीभिः कान्ताभिः सह कृतालापादिकमित्यर्थः । अक्षिमोदको नेत्रानन्दको वारिदादप्युज्ज्वलः कान्तिडम्बरश्छविविस्तारो यस्य तम् । मेघमालयेन कान्तिघटया जननेत्राण्यावृत्य कृतकान्तास्पर्शमित्यर्थः । आप्तं धृतं काञ्चनमिव भास्वदम्बरं येन तम् । एतदन्तरे आत्तः पादे गृहीतो बल्लवराड् व्रजनाथो नन्दो येन तादृशो यो भुजंगमः सर्पस्तस्य मूर्तौ देहे कल्पितः पादसंगमो येन तम् । चरणस्पृष्टभुजंगमित्यर्थः । ततः किमभूत्तदाह—उग्रमतिघोरमङ्गिरःकोपजनितं सर्पयोनिप्राप्तिलक्षणं संकटं भजति यः सुदर्शनस्तदाख्यो विद्याधरस्तस्याङ्गिरोदत्तं शापं सर्पयोनिदूरीकरणेन मोचयतीति तम् । इष्टं दर्शनं यस्य तम् । आत्मनः स्वस्य वल्लभो यो नन्दस्तं सर्पान्मोचयती[ति] तम् । उद्धृतमपनीतमखिलानां बन्धूनां व्रजनाथक्लेशनिमित्तकं शोचनं येन तम् । इति सुदर्शनमोक्षणं वर्णितम् । एवमाह श्रीशुकः—'एकदा देवयात्रायां गोपाला जातकौतुकाः । अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् । आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥ गावो हिरण्यं वासांसि मधुमध्वन्नमादृताः । ब्राह्मणेभ्यो ददुः प्रीता देवो नः प्रीयतामिति ॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः । रजनीं तां महाभागा नन्दसनन्दकादयः ॥ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः । यदृच्छ-

यागतो नन्दं शयानमुरगोऽग्रसीत ॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् । सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः । ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः ॥ अलातैर्दह्यमानोऽपि नामुञ्चत्तमुरंगमः । तमस्पृशत्पदाभ्येत्य भगवान्सात्वतां पतिः ॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः । भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ तमपृच्छद्धृषीकेशः प्रणत समवस्थितम् । दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः । कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः । यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च । सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥' इति ॥ अथ शङ्खचूडवधं वर्णयितुं विशिनष्टि—हे भुवनेन्द्रवन्दितपादपद्म, हे अङ्गनाहित, हे माधव, हे जगदीश, भवन्तमहं नौमि । दुर्गतं मां पालयेत्यन्तेनान्वयः । कीदृशः । मानितं सत्कृतमुज्ज्वलायाः शर्वर्या मुखं येन तम् । वासन्तिकशुक्लरात्रिप्रदोषे गोवर्धनोपान्ते होरिकोत्सवक्रीडार्थं कान्ताभिः सह निर्गतमित्यर्थः । आप्तः पूर्वजस्य निजप्रेयसीगणसहितस्य नीलाम्बरस्य सङ्गो येन तम् । उन्मुख्यः संमुखीना या अखिला बल्लववल्लभाः सर्वा गोपस्त्रियस्तासां ये नेत्रखञ्जनास्तेषां विभ्रमैराकुलम् । स्वप्रेयसीनां तासां कटाक्षबाणैर्विद्धचित्तमित्यर्थः । अद्भुतेनामलेन गीतेन मोहितं बल्लवीकुलं येन तम् । होरिकोचिता गाथा गायन्तमित्यर्थः । आत्तं धृतं लोहितचन्दनं कुङ्कुमं येन तम् । एतन्मध्ये समागतात्खलायक्षनायकाच्छङ्खचूडाद्भीताय यौवताय मा भैरिति शान्तिं ददातीति तम् । कथं शान्तिस्तत्राह—उग्रविग्रहमतिकायं यक्षं मर्दयति निहन्तीति तम् । तेनाङ्गनागणस्य रङ्गं वर्धयतीति तम् । आप्तेन गुह्यकस्य शङ्खचूडस्य रत्नेन नन्दितः पूर्वजो येन तम् । बलायोपढौकितस्यमन्तकमित्यर्थः । एवमाह श्रीशुकः—'कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः । विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ निशामुखं मानयन्तावुदितोडुपतारकम् ॥ एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् । शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ तयोर्निरीक्षतो राजँस्तन्नाथं प्रमदाजनम् । क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ तमन्वधावद्गोविन्दो यत्र यत्र स धावति । जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः ॥ अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः । जहार मुष्टिनैवाङ्ग सह चूडामणिं विभुः ॥ शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम् । अग्रजायाददत्प्रीत्या पश्यन्तीनां च योषिताम् ॥' इति । अङ्गनाहितेति पश्यन्तीनां चेति तद्रत्नं होरिकापारितोषिकतया ज्येष्ठान्येयमिति श्रीराधायां व्यञ्जितमिति ध्वन्यते ॥

लीलाद्वयं पुनः स्मरन्नाह—

जयति महोत्सवविद्या विद्याधरशापमर्दिनी मूर्तिः ।
परिभूतशङ्खचूडचूडामणिरखिललोकस्य ॥ ३४ ॥

**जयतीति** । स्फुटार्थं पद्यम् । महोत्सवविद्या नित्यानन्दसंविद्रूपा ॥

कान्तिडम्बरच्छन्दः ।

**कान्तिडम्बरेति** । 'कान्तिडम्बरमन्ततोलघु पूर्वतो रसजैश्च वैभवि' इति । तदनुसारि तद्विरचितम् ॥

अथ गोपिकागीतम् ।

अथ गोपीगीतं वर्णयिष्यँस्तासां गेयं कृष्णं तावद्वर्णयति—

निर्यासः श्यामलिम्नां परिणतिरमलप्रेमलक्ष्मीभराणां
साक्षात्कारः कृपाणामखिलमधुरतासंपदां संप्रदायः ।
गाम्भीर्यं विभ्रमाणामुपचितिरमितश्चातुरीणां चिरं वो
भूयादाभीरनारीकुचकलशतटालंकृतिर्मङ्गलाय ॥ ३५ ॥

**निर्यास इति** । आभीरनारीणां कुचकलशतटेऽलंकृतिः सच्छोभाकरः । श्रीकृष्ण इत्यर्थः । सा कीदृशीत्याह—श्यामलिम्नां निर्यासः सारः । इन्द्रनीलमणिरिव चाकचिक्यशालिश्यामरूपप्रसारक इत्यर्थः । अमलानां प्रेमलक्ष्मीभराणां परिणतिर्निर्हेतुकस्नेहसंपत्तिपरिणामकस्तत्प्रदातेत्यर्थः । कृपाणां साक्षात्कारः प्रकाशकः । महादयालुरित्यर्थः । अखिलानां मधुरतानां संप्रदायः । सर्वजातीयमाधुर्यमार्गप्रवर्तक इत्यर्थः । विभ्रमाणां विलासानां गाम्भीर्यम् । विविधाङ्गवत्त्वाद्गम्भीराणां दुरवगाहानां नानालीलानां कारक इत्यर्थः । चातुरीणाममित उपचितिर्वृद्धिः । तत्तद्विलासेषु वैदग्धीविवृद्धिकर इत्यर्थः । मालारूपकमत्रालंकारः । हेत्वलंकारश्च मालात्मा बोध्यः । 'असाधारणानि विशेष्यं लक्षयति' इति न्यायेनात्र विशेष्यस्य व्रजराजसुतस्य हरेर्लाभः । 'अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्' इत्यादिपद्ये रवेरिवेति ज्ञेयम् ॥

दिवसविरहार्तयुवतिकृतवार्त पृथुलतरवामभुजशिखरधाम-
विलसदवतंस वदनधृतवंश सुरनगरयोषिदखिलमतिमोषि-
मधुरतरगीत पशुनिवहवीत सरिदुदकपूरविरतिविधिशूर
कमलभवभर्गमुखविबुधवर्गमतिदुरनुमानरसदकलगान
मदयदवलोकमुषितनतशोक हृतहरिणजात कलितसुखवात
गिरिशमुखदेवकृतचरणसेव मदजनितघूर्णनयन रसपूर्ण
गतिविजितनाग धृतघुसृणराग युवतिदिनतापहरमधुरलाप
चटुल नटवेश कृपय मथुरेश ॥

**दिवसेत्यादि** । गोपिकाः कृष्णमेवं गायन्ति—दिवसविरहेणार्ताभिर्युवतिभिः कृता वार्ता यस्य । पृथुलतरे वामभुजशिखरे धाम्ना विलसन्नवतंसः कुण्डलं यस्य । हे वदनधृतवंश । सुरनगरयोषितामखिलां मतिं मुष्णाति हरति तादृशं मधुरतरगीतं यस्य । हे पशु-

निवहवीत गोवृन्दवेष्टित । सरितां यमुनादीनां य उदकपूरास्तेषां विरतिविधे स्तम्भकरणे शूर समर्थ हे । कमलभवश्च भर्गः शिवश्च तन्मुखा ये विबुधवर्गास्तेषां मतिभिर्दुरनुमानं किमेतदित्यनुमातुं दुःशकं रसदं कलगानं यस्य । मदयन् हर्षकारि(री) योऽवलोकस्तेन मुषितो नतशोको येन । हृतं वेणुनादेनाकृष्टं हरिणजातं येन । कलितः स्वीकृतः सुखवातो मन्दसुगन्धशीतलः पवनो येन । गिरिशमुखैर्देवैः कृता चरणप्रणतिरूपा सेवा यस्य। मदेन तारुण्यकृतेन जनिता घूर्णा ययोस्तादृशे नयने यस्य । हे रसपूर्ण । हे गतिविजितनाग । हे धृतघुसृणराग । युवतीनां दिनतापहरो मधुरो लापः कथा यस्य । हे चटुल । हे नटवेश । हे मथुरेश । त्वं मयि कृपय । एवमवर्णि श्रीशुकेन—'गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः । कृष्णलीलां प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् । कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः। काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात्। दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम्। स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ सवनसस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः। कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः । गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ मन्दवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन । बन्दिनस्तमुपदेवगणा ये गीतवाद्यबलिभिः परिवव्रुः ॥ वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः । कृत्स्नगोधनमुपोह्य दिनान्ते । गीतवेणुरनुगेडितकीर्तिः ॥ मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली । बदरपाण्डुवदनो मृदुगण्डं मण्डयन्कनककुण्डललक्ष्म्या ॥ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते । मुदितवक्त्र उपयाति दुरन्तं मोचयन्व्रजगवां दिनतापम् ॥' इति ॥

वेणुनादं स्तुवंस्तस्य लाभं प्रार्थयति—

जगदुद्धुरमाधुरीधुरीणामधुना मन्दिरमिन्दिरादुरापा ।
मम तर्षभरान्मुरान्तक त्वन्मुरलीनादसुधाधुना धुनीताम् ॥ ३६ ॥

**जगदिति** । हे मुरान्तक, त्वन्मुरलीनादरूपा सुधाधुनी पीयूषनदी मम तर्षभरान् तृष्णातिशयानधुना धुनीतामपनयतु । अयं मत्कर्णगोचरस्त्वद्वेणुनादोऽस्त्वित्यर्थः । सा कीदृशी । जगति विश्वस्मिन्नुद्धुराः सगर्वाः या निखिलोत्कृष्टवस्तुगता [माधुरी] मधुर्यस्तद्भूता या धुर्या भारभूताः संपदस्तासां मन्दिरं वसतिरित्यर्थः । इन्दिरा परमव्योपायिप(?)महिषी श्रीदेवि(वी) तया दुरापा दुर्लभा । तस्या गोकुललीलायामनङ्गीकारादिति भावः ॥

## मुखदेवच्छन्दः ।

**मुखदेवेति** । 'भणत मुखदेवमिह नसलशोभि' इति । तदनुसारि तद्विरचितम् । इदमेव करहाम्बीत्यन्यत्र पठ्यते ॥

अथारिष्टवधादिकम् ।

वृषकेशिव्योमानां वधं वर्णयिष्यँस्तेष्वतिबलिष्ठत्वात्केशिनो वधं संक्षेपात्तावदाह—

तुरगदनुसुताङ्गग्रावभेदे दधानः
कुलिशघटितटङ्कोद्दण्डविस्फूर्जितानि ।
तदुरुविकटदंष्ट्रोन्मृष्टकेयूरमुद्रः
प्रथयतु कुशलं वः कैशवो वामबाहुः ॥ ३७ ॥

**तुरगेति** । व्याख्यातमिदं बिरुदावल्यां ग्रन्थान्तरत्वात् । इह तस्य···पौनरुक्त्यम् । तदुरुविकटेत्यनुकूलालंकारः । भुजचर्वणाय प्रवृत्ताभिर्दंष्ट्राभिर्भुजालंकाराणां विमार्जनात् । यदुक्तम्—'अनुकूलं प्रातिकूल्याद्यदि स्यादनुकूलता' इति काव्यकौस्तुभे ॥

वृषदनुजजनितरुजपशुपकुलतोषणं
स्वकरतलनिनदखलवृषभपरिरोषणं
दयितवरभुजशिखरनिहितभुजदण्डकं
जगदसुखविकटमुखदनुजमदखण्डकं
निबिडबलचटुलमिलदनङ्गदपनोदनं
गगनतलमिलदखिलसुरनिकरमोदनं
भुजविभवमहिमलवदलितवृषशृङ्गकं
तदभिहतिदलितदितितनुजतनुभङ्गकं
निजनिकटगतिविकटहयदनुजलोचितं
प्रणयभरमृदुलतरयुवतिगणशोचितं
अवगणितगुरुरणिततुरगखुरघट्टनं
निजललितगतिकलिततदुरुमदकुट्टनं
धनुरयुतपरिगमितहयदनुजविग्रहं
पृथुवदनभुजघटनकृततदतिनिग्रहं
भुजभुजगयुतितुरगरदहरणकारणं
तदुपचयविहितहयदनुजतनुदारणं
निजललितलवदलितजगदवशकेशिनं
प्रमदकुलरसचटुलपशुपसमवेशिनं

दरहसितरुचिरमितनुतिचतुरनारदं
गिरिशवरनिखिलसुरनिकरसुखभारदं
उरणदतिचपलमतिसुहृदवनखेलनं
तदपहृतिमिलदमतिदनुजकृतमेलनं
स्वसहचरनिकरहरदनुजकृतिवेदिनं
जगदभयवलदनयमयतनयभेदिनं
सकृदमलपदकमलविनतभयमोचनं
भज सदयमयि हृदय सरसिरुहलोचनम् ॥

**वृषेति** । अयि हृदय, त्वं सरसिरुहलोचनं भज । कीदृशम् । वृषदनुजेन जनिता रुजा व्यथा यस्य तादृशं पशुपकुलं तोषयतीति तम् । कथं तत्तोषस्तत्राह—स्वकरतलनिनदेन स्वभुजास्फोटनेन खलं वृषभं परिरोषयतीति तम् । दयितवरस्य सुबलस्य सख्युर्भुजशिखरे स्कन्धे निहितो भुजदण्डो येन तम् । जगतोऽसुखं यस्मात्तादृशं विकटं करालं मुखं यस्य तादृशस्य दनुजस्य तस्य मदं खण्डयति तदवगणनेनेति तम् । निबिडेन बलेन चटुलो यो मिलन्नभिमुखमागच्छन्ननड्वान् वृषस्तमपनुदति दूरे क्षिपतीति तम् । गगनतले व्योम्नि मिलतोऽखिलान् सुरनिकरान्मोदयति वृषवधोद्योगेनेति तम् । भुजविभवानां बाहुबलानां यो महिमा तस्य लवेन दलित उत्पाटिते वृषस्य शृङ्गे येन तम् । ताभ्यां शृङ्गाभ्यां याभिहतिस्ताडनं तेन दलितो मर्दितो दितिसुतस्य वृषस्य तनुभृङ्गो येन तम् । कीटमिव तं मर्दयन्तमित्यर्थः । एवं वर्णितं श्रीशुकेन—'अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः । महीं महाककुत्कायः कम्पयन्खुरविक्षताम् ॥ यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् । पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै ॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः । भगवानपि तं वीक्ष्य गोकुलं भयविद्रुतम् ॥ मा भैष्टेति गिराश्वास्य वृषासुरमुपाह्वयत् । इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः । सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ गृहीत्वा शृङ्गयोस्तं वा अष्टादशपदानि सः । प्रत्यपोवाह भगवान् गजं प्रतिगजो यथा ॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः । आपतत्स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्छितः ॥ तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले । निपीडयामास यथार्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥' इत्यादि ॥

अथ केशिवधं वर्णयितुं विशिनष्टि—निजनिकटे कृष्णसंनिधौ या गतिस्तया विकटो देवादिभयकारी यो हयदनुजः केशी तेन लोचितं दृष्टम् । प्रणयभरेण मृदुलतरो यो युवतिगणस्तेन किं भावीति शोचितम् । अवगणितमवज्ञातं गुरुरणितस्य कर्कशहेषारवस्य तुरगस्य तस्य खुरघट्टनं येन तम् । तत्पादाहतिं वञ्चयन्तमि-

त्यर्थः। निजया तद्वञ्चनचातुर्येण ललितया गत्या कलितं कृतं तदुरुमदस्य कुट्टनं येन तम्। परिभ्रमनाशितकेशिदर्पमित्यर्थः। धनुरयुतेऽयुतधनुःप्रमिते देशोपरिगमितः प्रक्षिप्तो हयदनुजस्य विग्रहः कायो येन तम्। पृथुनि व्यादत्ते तद्वदने यद्भुजस्य तप्तायसप्रख्यस्य वामबाहोर्घटनं प्रवेशनं तेन कृतस्तस्यातिनिग्रहः प्राणदण्डो येन तम्। भुजभुजगस्य युत्या तन्मुखे प्रवेशेन तुरगरदानां केशिदन्तानां हरणे निपातने कारणम्। तदुपचयेन भुजवृद्ध्या विहितं हयदनुजस्य तनुदारणं देहविदारणं येन तम्। निजललितलवेन खलीलालेशेनैव दलितो मारितो जगदवशः केशी येन तम्। प्रमदकुलेन रसेन च वीरेण चटुलं यत्पशुपसमं गोपसमूहं तत्र वेशिनम्। 'अशाला च' इति सूत्रेण समूहार्थसभान्तस्य तत्पुरुषस्य क्लीबत्वम्। केशिनं निहत्य बन्धून्मिलन्तमित्यर्थः। ततो दरहसितरुच्या ईषत्स्मितशोभया रमित आनन्दितो नुतिचतुरो नारदो येन तम्। नारदेन प्रहृष्टेनैकान्ते स्तुतमित्यर्थः। गिरिशः शिवो वरो येषु तेभ्यो निखिलेभ्यः सुरनिकरेभ्यः सुखभारं ददातीति तम्। कंसस्य देवविद्रोहिणः प्राणसममतिबलिष्ठं केशिनं निहत्य देवानानन्दयन्तमित्यर्थः। इति केशिवधो वर्णितः। एवमवर्णि श्रीशुकेन—'केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनोजवः। सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः॥ तं त्रासयन्तं भगवान्स्वगोकुलं तद्धेषितैर्वालविघूर्णिताम्बुदम्। आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत्स व्यनदन्मृगेन्द्रवत्॥ स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः। जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः॥ तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः। सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः॥ स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसापतद्धरिम्। सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले॥ दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा। बाहुश्च तद्देहगतो महात्मनो यथामयः संववृधे उपेक्षितः॥ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणावुदक्षिपन्। प्रभिन्नगात्रः परिवृत्तलोचनः पपात लेण्डं विसृजन्क्षितौ व्यसुः॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः। अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः॥' इति॥

अथ व्योमवधमाह—उरणन्तो मेषा इवाचरन्तो येऽतिचपलमतयः सुहृदः सखायस्तेषामवनमेव खेलनं यस्य तम्। 'अविरूर्णायुरुरभ्रोहुडुरुरणो वृष्णिमेषमेढ्रश्च' इति हलायुधः। तेषां सुहृदामपहृतये मिलन् योऽमतिर्धीशून्यो दनुजो व्योमासुरस्तेन कृतं मेलनं येन तम्। स्वसहचरनिकरान् हरति नीत्वा नीत्वा गिरिगुहायां मुद्रयति तादृशस्य दनुजस्य व्योमस्य कृतिं स्वमित्रहिंसालक्षणां क्रियां वेत्तीति तम्। जगत्यभयो निःशङ्को बलदनयो नीतिलेशशून्यो यो मयतनयस्तं भेत्तुं शीलमस्येति तम्। विदारितव्योममित्यर्थः। सकृदेकं वारममलयोः पदकमलयोर्यो विनतस्तस्य भयमविद्यां मोचयति निहन्तीति तम्। ईदृशस्य स्वमित्रवृन्दभयनिवारणं न चित्रमित्यर्थः। एवं

वर्णितं श्रीशुकेन—'एकदा ते पशून्पालाश्चारयन्तोऽद्रिसानुषु । चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥ तत्रासन्कतिचित्पालाश्चौराश्च कतिचिन्नृप । मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ मयपुत्रो महामायो व्योमो गोपालरूपधृक् । मेषायितानपोवाह प्रायश्चौरायितो बहून् ॥ गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः । शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् । गोपान्नयन्तं जग्राह वृकं हरिरिवौजसा ॥ स निजं रूपमास्थाय गिरीन्द्रसदृशं बली । इच्छन्विमोक्तुमात्मानं नाशक्नोद्ग्रहणातुरः ॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले । पश्यतां दिवि देवानां पशुमारममारयत् ॥ गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः । स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥' इति ॥

लीलात्रयं क्रमात् स्मरन्नाह—

येनारिष्टः प्रापितोऽभूदरिष्टं चक्रे केशी लीलयैवावकेशी ।
व्योमोऽलम्भि व्योमसाम्यं स कष्टाद्गोष्ठाधीशः सुष्ठु गोपायतान्नः ३८

**येनेति** । स गोष्ठाधीशः श्रीकृष्णो नोऽस्मान् सुष्ठु गोपायताद्रक्षतु । स क इत्याह—येनारिष्टो वृषासुरोऽरिष्टं मृत्युं प्रापितोऽभूत् । केशी च येनावकेशी विकीर्णकेशः, पक्षे विफलसंकल्पश्चक्रे । 'अवकेशी फलैर्वन्ध्यः' इत्यमरः । येन व्योमो दानवो व्योमसाम्यं शून्यतुलामलम्भि । लीलयेति सर्वत्र योज्यम् । अत्र प्रापणादिषु तिसृषु क्रियासु येनेत्येकस्य कर्तृकारकस्य संबन्धाद्दीपकमलंकारः ॥

व्रजलीलां वर्णयित्वा तामेव जिगासुः प्रार्थयति—

अपवर्गसुखस्पृहोरुवल्लीस्थलकूलंकषवीचिरम्बुजाक्ष ।
तव केलिसुधानदी मदीयं शिशिराङ्गी गलजाङ्गलं गतास्तु ॥ ३९ ॥

**अपवर्गेति** । हे अम्बुजाक्ष, तव केलिसुधानदी मदीयं गलजाङ्गलं कण्ठमरुदेशं गतास्तु प्राप्नोतु । 'जङ्गलस्त्रिषु निर्वारिदेशेऽस्त्री जङ्गलः पले' इति विश्वलोचनकारः । कीदृशी । अपवर्गसुखानि स्वैश्वर्यप्रधाना मोक्षानन्दास्तेषां स्पृहैवोरुवल्ली महालता तस्याः स्थलं तत्कथाश्रवणसभा तस्य कूलंकषाश्छन्त्यो वीचयस्तरङ्गाः शुश्रूषालक्षणा यस्याः सा । शिशिराङ्गी तादृशमोक्षसुखस्पृहातापशमनीत्यर्थः ॥

## गुच्छकभेदछन्दः ।

**गुच्छकभेदेति** । 'निखिलकविकलितरुचिशुचितगणपञ्चकं यदि तदनु रगणमनुभवति किल गुच्छकम्' इति तदनुसारि तद्विरचितम् ॥

व्रजलीलायां नैष्ठिकतां व्यञ्जयन्नाह—

पुरुषोत्तमस्य परितो गोकुलचरितामृतेन कृतसेकः ।
प्रेममरन्दस्यन्दं तनोतु मम चित्तमाकन्दः ॥ ४० ॥

**पुरुषोत्तमस्येति** । मम चित्तमाकन्दो हृदयाम्रतरुः प्रेममरन्दस्यन्दं तनोतु ।

'माकन्दस्तु रसाले स्यात्' इति विश्वलोचनः । कीदृशः । पुरुषोत्तमस्य नन्दसूनोर्गोकुलचारितामृतेन कृतसेको निषिक्तः ॥

अथ रङ्गस्थले क्रीडा ।

अथ वर्ण्यां रङ्गक्रीडां संक्षेपात्तावदाह—

क्रियाद्वः कल्याणं भुजसमरशौटीर्यकणिका-
विकासेनोद्धूय प्रकटबलमल्लप्रतिभटान् ।
भजन्स्वैरी रङ्गे मदकलमृगेन्द्रस्य ललितं
कचाकृष्टिक्रीडामथितमथुरारिर्मधुरिपुः ॥ ४१ ॥

**क्रियादिति** । मधुरिपुर्वः कल्याणं क्रियात् । कीदृक् । भुजसमरे बाहुयुद्धे शौटीर्यकणिकायाः पराक्रमलवस्यापि विकासेन प्रकटबलान्मल्लप्रतिभटान् चाणूरादिप्रतियोधानुद्धूय निहत्य मदकलमृगेन्द्रस्य मदोत्कटसिंहस्य ललितं क्रीडां भजन् । केसरीव तत्र कूर्दमान इत्यर्थः । यतः स्वैरी स्वतन्त्रः । कचाकृष्टिक्रीडया केशग्राहमाकर्षणेन मथितो मथुरारिः कंसो येन सः ॥

अथ विभक्तिसप्तकेन संबुद्ध्यन्तेन रङ्गक्रीडां वर्णयति—

यः पौरलोकारविन्दावलीहेलिरङ्गीकृतोत्तुङ्गरङ्गस्थलीकेलि-
रापीतकौशेयशोभोल्लसन्मूर्तिरावर्तिताशेषलोकोत्सवस्फूर्ति-
रुत्फुल्ललावण्यकल्लोलिनीसिन्धुराधिज्वराधीनदीनावलीबन्धु-
रक्षीणकण्ठीरवाकुण्ठविक्रान्तिरुग्रं ममर्दोरु दन्तीन्द्रमश्रान्ति
यं निर्मितोत्तुङ्गमातङ्गनिर्वाणमुर्वीमहानन्दवृन्दानि कुर्वाण-
मुद्धासिदानास्त्रबिन्दूर्मिवर्माणमानम्रसंतोषनिर्माणकर्माण-
मुन्मीलितास्तोकविस्तारतारुण्यमन्तस्तमस्तोमविध्वंसिकारुण्य-
मालोकयामास भिन्नारिमर्माणमग्रे जनश्रेणिरुद्दामशर्माण-
मुद्दण्डदोर्दण्डदर्पानुविद्धेन विस्मापितामन्दगन्धर्वसिद्धेन
पीनांसपिण्डोल्लसद्दन्तदण्डेन विद्योतिघर्माम्बुसंवीतगण्डेन
दीप्तेन्द्रनीलावलीराजदङ्गेन लब्धप्रलम्बारिगोपालसङ्गेन
मल्लावली येन रङ्गप्रवेशेन विक्षोभिता मङ्क्षु वीरेन्द्रवेशेन
मन्दस्मितारब्धकुन्दालिनिन्दाय वृन्दारकानन्दिपादारविन्दाय
चञ्चन्नखश्रेणिभाचक्रवालाय वक्षस्तटीलक्ष्यनक्षत्रमालाय

फुल्लीभवन्मल्लिचापप्रसर्पाय निर्वाहितापूर्वकन्दर्पदर्पाय
नार्यो मुहुर्दृष्टमाधुर्यचर्याय यस्मै स्पृहां चक्रुराभीरवर्याय
यस्माद्विलासेन रङ्गस्थले रन्तुरानम्रलोकातिशोकापदाहन्तु-
रिन्द्रादिवृन्दारकानन्दनिर्मातुरक्ष्णोर्विनोदेन वृष्ण्यन्धकान्पातु-
रार्याङ्गनातीव्रसाध्वीव्रतच्छेत्तुरव्यग्रमल्लाङ्गनातुष्टिनिर्भेत्तु-
रावल्गतः क्षोणीभर्तापि स त्रासमासाद्य विभ्रान्तधीवृत्तिरत्रास
यस्यार्दितोद्दण्डदुष्टाभिमानस्य कष्टं पितृभ्यां तु संदृश्यमानस्य
रङ्गस्थलीवल्गिपादप्रवालस्य भालान्तविश्रान्तकान्ताग्रवालस्य
पद्मावतीपुत्रहृन्मर्मकीलस्य सर्वात्मनाभीष्टयोर्युद्धलीलस्य
युद्धं परिस्फारशौटीर्यघोरस्य चाणूरमल्लेन वृत्तं किशोरस्य
यस्मिन्मुनिश्रेणिवक्त्रस्फुरन्नाम्नि विस्तीर्णवक्षःस्थलीविभ्रमद्दाम्नि
नव्योल्लसद्वारिवाहावलीधाम्नि निःशेषवीरोत्करोल्लङ्घनस्थाम्नि
प्रोद्यत्पदद्योतनिर्धूतपञ्चेषुसौन्दर्यदर्पोद्गमे रम्यमञ्चेषु
तुङ्गेष्ववस्थाय चक्रुर्विलक्षाणि भक्तिं प्रभौ भोजदाशार्हलक्ष्याणि
चाणूरमूर्धन्यमल्लेभपारीन्द्र स श्रीभवान्पातु मां गोपनारीन्द्र
सव्यभ्रमन्मुष्टिकोत्ताडिताळाङ्क नेपथ्यभारस्फुरद्धेनुपालाङ्क
विद्रावितोद्दामदुर्मल्लपालीक निःशङ्कलास्योल्लसत्पादनालीक
रम्याङ्गहारश्रियाकृष्टसाध्वीक ताभिर्निपीताङ्गसौरभ्यमाध्वीक
गोपाङ्गनानेत्रपानैकभृङ्गार पुष्पावलीलब्धसर्वाङ्गशृङ्गार
संदर्शितोदारमाधुर्यविस्तार विध्वंसनारब्धभोजेन्द्रनिस्तार
भो देवकीशौरिबन्धार्तिलुण्ठाक दिक्चक्रपालक्वणत्कीर्तिघण्टाक
भक्तोग्रसेनार्पितस्फीतसप्ताङ्ग मां रक्ष कुब्जाङ्गरागेण लिप्ताङ्ग ॥

य इति। सप्तानां यच्छब्दानां स श्रीभवानिति परवर्तिना तच्छब्देनान्वयः। यो रङ्ग-द्वार्युग्रं दन्तीन्द्रं कुवलयापीडाख्यं ममर्द निजघान अश्रान्ति यथा स्यात्तथा। यः कीदृक्। पौरा माथुरा ये लोकास्त एवारविन्दावल्यस्तासु हेलिः सूर्यः। पद्मानां भानुरिव माथुराणां विकासकृदित्यर्थः। 'ब्रध्नो हंसश्चित्रभानुर्विवस्वान्सूरस्त्वष्टा द्वादशात्मा च हेलिः' इति हैमः। अङ्गीकृत्तेत्यादिपदद्वयं प्रस्फुटार्थम्। रङ्गो युद्धभूमिः। 'रङ्गः स्यान्नृत्ययुद्धभुवोः' इत्युक्तेः। आवर्तिता परावर्तिताशेषाणां लोकानामुत्सवस्फूर्तिर्येन सः। उत्फु-

ल्लानां समुच्छलितानां लावण्यकल्लोलिनीनां सिन्धुः समुद्रः। आधिर्मनःपीडा तल्लक्षणस्य ज्वरस्याधीना या दीनावली तस्या बन्धुः। तज्ज्वरविनाशीत्यर्थः। अक्षीणस्यातिबलिनः कण्ठीरवस्य सिंहस्येवाकुण्ठा विक्रान्तिर्यस्य स इति प्रथमा विभक्तिः॥ जनश्रेणिर्यमग्र आलोकयामास। यं कीदृशम्। निर्मितः कृत उत्तुङ्गस्य मातङ्गस्य गजस्य निर्वाणो मोक्षो येन तम्। उर्वीति स्फुटार्थम्। उद्भासि प्रकाशमानं दानाम्बुबिन्दूर्मिभूतं गजमदजलैरुद्गीर्णाश्रुकणवीचिरूपं वर्म कवचं यस्य तम्। एवमुक्तम्। 'अंसन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कितः' इति। आनम्राणां संतोषनिर्माणमेव कर्म यस्य तम्। उन्मीलितं भ्राजमानमस्तोकविस्तारमतिविस्तीर्णं तारुण्यं यस्य तम्। अन्तस्तमस्तोमं गहनामविद्यां विध्वंसयति तादृक्कारुण्यं यस्य तम्। भिन्नमरेः कुवलयापीडस्य साम्बष्ठस्य मर्म येन तम्। उद्दामानि निरर्गलानि पौराणां शर्माणि सुखानि यस्मान्निहतगजात्रमिति द्वितीया॥ येन मल्लावली रङ्गप्रवेशेन मङ्क्षु शीघ्रं विक्षोभिता त्रासिता। येन कीदृशेनेत्याह—उद्दण्डाभ्यां दोर्दण्डाभ्यां दर्पो मदन्यो न कोऽपि बलीति गर्वस्तदनुविद्धेन तद्ग्रस्तेन। अतिभुजगर्ववतेति यावत्। विस्मापितेति पदत्रयं विशदार्थम्। दीप्तेन्द्रनीलावल्य इव राजन्त्यङ्गानि यस्य तेन। लब्धः प्रलम्बारेर्गोपालानां च सङ्गो येनेति। मित्रवृन्दसहितेनेत्यर्थः। वीरेन्द्रस्येव वेशो यस्य तेनेति तृतीया॥ नार्यो यस्मै स्पृहां चक्रुरनुरक्ता यत्र बभूवुरित्यर्थः। कीदृशायेत्याह—मन्दस्मितेति पदद्वयं स्फुटार्थम्। चञ्चन्ति तरलीभवन्ति नखश्रेणीनां भाचक्रवालानि कान्तिमण्डलानि यस्य तस्मै। वक्षस्तट्यामुरसि लक्ष्या दर्शनीया नक्षत्रमाला [यस्य तस्मै]। 'नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः। फुल्लीभवन्तौ चिल्लिचापौ भ्रूधनुषी प्रसर्पयति संचालयतीति तस्मै। चपलभ्रुव इत्यर्थः। निर्वाहितः स्वकान्ताभिर्व्रजाङ्गनाभिरनुभावितोऽपूर्वोऽन्यत्राजातः कन्दर्पदर्पो येन तस्मै। दृष्टा विज्ञैरनुभूता माधुर्यचर्या मनुष्यचेष्टा यस्य तस्मै। एवमाह श्रीशुकः—'कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मताम्' इति। कामिनां नायकानां दैन्यं युवत्यधीनतां स्त्रीणां नायिकानां दुरात्मतां मानेन नायकोद्वेजकतामेव रसराशिहेतुं दर्शयन्निति तदर्थः। आभीरवर्याय गोपराजकुमारायेति चतुर्थी॥ यस्मात् स प्रसिद्धः क्षोणीभर्ता कंसोऽपि त्रासमासाद्य विभ्रान्तधीवृत्तिरास दिदीपे। 'अस गतिदीप्त्यादानेषु' धातुः। भयहेतुकधीचापलविशिष्टः सन् शुशुभे इत्यतिभीत इति यावत्। यस्मात् कीदृशादित्याह—विलासेनेत्यादीनि चत्वारि विशेषणानि स्पष्टार्थानि। विलासेन क्रीडया नम्राणां लोकानामतिशोकापदमाहन्तीति तस्मादित्यन्वयः। आर्याणां सरलानामङ्गनानां तीव्राणि दृढानि साध्वीव्रतानि छिनत्तीति तस्मात्। इहाप्यक्ष्णोर्विनोदेनेति केचिद्योजयन्ति। स्वभर्तृशौर्येणाव्यग्राणां स्थिरधियां मल्लाङ्गनानां तुष्टिं निर्भिनत्तीति तस्मात्। आवल्गतः प्रगल्भान्तयुद्धातिचपलाद्वेति पञ्चमी॥ यस्य किशोरस्योल्लसत्तारुण्यस्य चाणूरमल्लेनान्धेण सह युद्धं वृत्तं बभूव। यस्य कीदृशस्येत्याह—अर्दितेत्यादिकं विस्फुटार्थम्। तत्र दुष्टः कंसः। पितृभ्यां नन्दवसुदेवाभ्याम्। पादप्रवालौ चरणपल्लवौ। 'वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे' इति विश्वलोचनकोषः।

भालान्ते विश्रान्ताः कान्ता मनोज्ञा अग्रवालाश्चूर्णकुन्तला यस्य । पद्मावती उग्रसेनपत्नी तत्पुत्रः कंसः । परिस्फारमतिविस्तीर्णं यच्छौटीर्यं गर्वस्तेन घोरस्य कंसादिभ्यो भयंकरस्येति षष्ठी ॥ यस्मिन् प्रभौ तुङ्गेषु रम्यमञ्चेष्ववस्थाय भोजदाशार्हलक्ष्याणि भक्तिं चक्रुः । कंसाज्ञया मञ्चेषु स्थितानि तानि यं प्रणेमुरित्यर्थः । कीदृशानीत्याह—विलक्षाणीति । सौन्दर्यातिशौर्यादीनि दृष्ट्वा विस्मितानीत्यर्थः । 'विलक्षो विस्मयान्वितः' इत्यमरः । यस्मिन् कीदृशीत्याह—मुनीत्यादीनि त्रीणि पदानि स्फुटार्थानि । निःशेषान् वीरोत्करान् लङ्घयति निरस्यति तादृक् स्थाम बलं यस्य तस्मिन् । प्रोद्यतो रङ्गविहाराय प्रकर्षेणोदयमानयोर्योतेन निर्धूतः पञ्चेषोः कन्दर्पस्य सौन्दर्यदर्पोद्गमो येन तस्मिन् । असमोर्ध्वसौन्दर्यवारिधावित्यर्थः । इति सप्तमी ॥ हे चाणूरमूर्धन्यमल्लेभपारीन्द्र, स श्रीभवान् मां पात्विति संबन्धः । चाणूराख्यो यो मूर्धन्यो निखिलमल्लश्रेष्ठो मल्लः स एवेभो गजस्तस्मिन् पारीन्द्र सिंह हे । हे गोपनारीन्द्र व्रजाङ्गनास्वामिन्, सव्ये वामभागे भ्रमन्तं मुष्टिकं तन्नामानं मल्लमुत्ताडयत्याहन्ति तादृशस्तालाङ्को बलदेवो यस्य । हे स्वाग्रजनिघातिन्मुष्टिकेत्यर्थः । नेपथ्यभारेषु रत्नाद्याभरणरचितवेशनिर्भरेषु स्फुरन्तो धेनुपालाङ्का वेणुशृङ्गादिकृतगोपवेशचिह्नानि यस्य । विद्राविता उद्दामा दुष्टानां मल्लानां पाली श्रेणिर्येन । 'चाणूरे मुष्टिके कूटे शले तोशलके हते । शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥' इति श्रीशुकोक्तेः । निःशङ्कं निर्भये लास्ये उल्लसती पादनालीके चरणपद्मे यस्य । 'बिसप्रसूनं नालीकं तामरसं महोत्पलम्' इति हैमः । रम्यया अङ्गहारश्रिया आकृष्टाः साध्व्यो येन । ताभिः साध्वीभिर्निपीतं सादरमाघ्रातमङ्गसौरभ्यमाध्वीकं यस्य । यदुक्तम्—'जिघ्रन्त इव नासाभ्याम्' इति । गोपाङ्गनानेत्राणि यद्रूपसुधापानं तस्य तत्पूर्णैकभृङ्गार हे । यदुक्तम्—'गोप्यस्तपः किमचरन्' इत्यादि । पुष्पावलीभिः सुदाम्नार्पिताभिः स्रग्भिर्लब्धः सर्वाङ्गशृङ्गारो येन । यदुक्तम्—'इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः । शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥ ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ । प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥' इति । संदर्शित उदारमाधुर्यविस्तारो येन । विचित्रवासोमालातिमधुरवेशेत्यर्थः । विध्वंसनं तु कंसे जीवति माधुर्यसंदर्शनम् । किं तत्राह—मञ्चादधः पातनं मारणमिति यावत् । तमारब्धो भोजेन्द्रस्य निस्तारो मोक्षो येन । हे मारितकंसेत्यर्थः । 'तमाविशन्तमालोक्य मृत्युमात्मन आसनात् । मनस्वी तरसोत्थाय जगृहे सोऽसिचर्मणी ॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् । तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥ तं संपरेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥' इति । भो देवकीतिद्वयं स्फुटार्थम् । एवमुक्तम्—'मातरं पितरं चैव मोचयित्वाथ बन्धनात् । कृष्णरामौ ववन्दाते शिरसास्पृश्य पादयोः ॥' इति । ततो भक्त उग्रसेनेऽर्पितानि सप्ताङ्गानि येन । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि' इत्यमरः । एवमुक्तम्—'एवमाश्वास्य पितरौ भगवान्देवकीसुतः । मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥' इत्यादिना । हे कुब्जार्पितेनाङ्गरागेण चतुःसमेन लिप्ताङ्ग । एवमु-

कम्—'रूपपेशलमाधुर्यहसितालापवीक्षितैः । धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ततस्तावङ्गरागेण स्ववर्णेतरशोभिना । तत्फलं ग्रन्थसंक्षेपस्तेन तुष्यन्तु पण्डिताः ॥'

भगवत्प्रभावव्यञ्जकत्वेनातिमनोहरत्वादुक्तमर्थं पुनर्वर्णयति—

मल्लानुल्लङ्घ्य रङ्गे करविचलदसिर्येन मञ्चप्रपञ्चे
केशेष्वाकृष्य कंसो विघटितमुकुटं विघ्नहेतुर्निजघ्ने ।
स त्वं सत्त्वाधिराज स्फुरदुरुकरुणाडम्बरालम्बिचेताः
पाताद्दुःखाब्धिपाताद्यदुकुलकमलोद्दण्डचण्डद्युतिर्माम् ॥ ४२ ॥

**मल्लानिति** । हे सत्त्वाधिराज पालकविष्णुरूपेण सर्वनियामक, स त्वं दुःखाब्धिपातान्मां पाताद्रक्षतु । यच्छब्दविधेयस्य तच्छब्दस्य प्रथमप्रतीतत्वात्तदनुसारी प्रथमपुरुषप्रयोगः । स क इत्यपेक्षायामाह—येन रङ्गे मल्लानुल्लङ्घ्य निरस्य मञ्चप्रपञ्चे स्थितः कंसः केशेष्वाकृष्य निजघ्ने मारितः । कीदृक् । करविचलदसिः खड्गं धुन्वन् । विघ्नहेतुः क्लेशदः । विघटितं दूरे निःक्षिप्तं मुकुटं यत्र तद्यथा भवति तथा । स त्वं कीदृशः । स्फुरन्तमुरुकरुणाडम्बरमालम्बते तादृक् चेतो यस्य सः । गोविप्रभक्तविषयकदयार्द्रहृदय इत्यर्थः ॥

एवं भगवतो लीलावर्णनेन प्रसादमालक्ष्य स्वोद्धारमधुनाभ्यर्थयते—

मनसिजफणिजुष्टे लब्धपातोऽस्मि दुष्टे
तिमिरगहनरूपे हन्त संसारकूपे ।
अजित निखिलरक्षाहेतुमुद्धारदक्षा-
मुपनय मम हस्ते भक्तिरज्जुं नमस्ते ॥ ४३ ॥

**मनसिजेति** । हे अजित, संसारकूपेऽहं लब्धपातोऽस्मि । कीदृशीत्याह—मनसिजेति स्फुटार्थम् । तिमिरमविवेकलक्षणम् । तर्हि किमहं कुर्यामिति चेत्तत्राह—मम हस्ते भक्तिरज्जुमुपनयेति ॥

ननु शास्त्रवित्त्वं भक्तिं कुतो न करोषि तत्राह—

समस्तपुरुषार्थतः पृथुतयाद्य भक्तिं विद-
न्वदन्नपि न यद्भजेत्त्वदकृपात्र हेतुर्विभो ।
प्रसीद यमुनातटे लुठितमूर्तिरभ्यर्थये
कृपां कृपणनाथ हे कुरु मुकुन्द मन्दे मयि ॥ ४४ ॥

**समस्तेति** । समस्तेति पद्यं विशदार्थम् । त्वत्कृपां विना न मया किंचित्साध्यं स्यादिति भावः ॥

भृङ्गारच्छन्दः ।

**भृङ्गारेति** । 'भृङ्गारमेतच्चतुर्भिश्च तैर्विद्धि' इति तदनुसारि तद्विरचितम् । सारङ्गास्यमन्यत्र ॥

यद्विद्याभूषणोऽयं हरिचरितभृतां भाष्यमष्टादशानां
दीव्यद्भक्ष्यं व्यतानीत्फणिपतिगणिनां छन्दसां सप्रमाणम् ।
तेनास्मिन्कृष्णदेवः स्वकृतरुचिधरो रूपदेवश्च भूया-
त्सद्वर्गश्चापि तीव्रश्रमगुणनपटुस्तुष्टिपातेव सद्यः ॥

इत्यष्टादश छन्दांसि व्याख्यातानि ।

इति कंसवधान्ताः श्रीकृष्णलीलाः समाप्ताः ।

---

श्रीगोवर्धनोद्धराय नमः ।

अथ तत्र विशेषतः काश्चित्—

झमज्झमिति वर्षति स्तनितचक्रविक्रीडया
विमुष्टरविमण्डले घनघटाभिराखण्डले ।
ररक्ष धरणीधरोद्धृतिपटुः कुटुम्बानि यः
स दारयतु दारुणं व्रजपुरंदरस्ते दरम् ॥ १ ॥

**अथेति** । सामान्यतो या लीला वर्णितास्ताः काश्चिद्विशेषतो वर्णनीया इत्यर्थः । झमज्झमिति निपतद्वारिशब्दानुकरणं तद्यथा स्यादेवमाखण्डले शक्रे स्तनितचक्रविक्रीडया निष्ठुरमेघगर्जनेन वर्षति सति धरणीधरोद्धृतिपटुर्यः कुटुम्बानि ररक्ष स व्रजपुरंदरस्ते दरं भयं दारयतु । स्फुटार्थमन्यत् ॥

भुजङ्गप्रयातच्छन्दसा वर्णयति—

महाहेतुवादैर्विदीर्णेन्द्रयागं गिरिब्राह्मणोपास्तिविस्तीर्णरागम् ।
सपद्येकयुक्तीकृताभीरवर्गं पुरो दत्तगोवर्धनक्ष्माभृदर्घम् ॥ २ ॥

**महाहेत्विति** । एषां पद्यानां हे गोविन्द, वयं भवन्तं नमस्कुर्महे इति सप्तविंशश्लोकस्थेनान्वयः । भवन्तं कीदृशमित्याह—महद्भिर्हेतुवादैः सांख्यवादप्रभृतिभिर्विदीर्णो निरस्त इन्द्रयागो येन तम् । एवमप्यन्ततो वेदोक्तं प्रवर्तयांचकारेत्याह—गिरीति । स्फुटार्थम् । तत्कथं सिध्येत्तत्राह—सपदि तत्क्षणादेकयुक्तीकृत ऐकमत्यं नीत आभीरवर्गो येन तम् । ततः पुरः प्रथमं दत्तं गोवर्धनाय क्ष्माभृते गिरयेऽर्घं येन तम् ॥

प्रियाशंसिनीभिर्दलोत्तंसिनीभिर्विराजत्पटाभिः कुमारीघटाभिः ।
स्तवद्भिः कुमारैरपि स्फारतारैः सह व्याकिरन्तं प्रसूनैर्धरं तम् ॥ ३ ॥

**प्रियेति** । गोपकुमारीघटाभिर्गोपकुमारैश्च सह तं धरं पर्वतं प्रसूनैर्व्याकिरन्तम् । गिरेरुपरि पुष्पाणि वर्षन्तमित्यर्थः । ताभिः कीदृशीभिः । हे गोवर्धन, त्वमस्मासु प्रीणीष्व जयेति प्रियमाशंसतीति ताभिः । विराजत्पटाभिर्विचित्रदिव्याम्बराभिः । तैः कीदृशैः । हे गिरिराज, त्वं देवस्त्वमस्माकं वाञ्छापूरक इति स्तुवद्भिः । स्फारतारैः । हे गिरिराज, त्वं वर्धस्व त्वं जयेति विस्तीर्णोच्चध्वनिभिरित्यर्थः । गिरिशोभावीक्षणविस्तीर्णनेत्रैरिति वा ॥

गिरिस्थूलदेहेन भुक्तोपहारं वरश्रेणिसंतोषिताभीरदारम् ।
समुत्तुङ्गशृङ्गावलीबद्धचैलं क्रमात्प्रीयमाणं परिक्रम्य शैलम् ॥ ४ ॥

**गिरीति** । गिरिरिव स्थूलो यो देहो विग्रहस्तेन भुक्ता उपहारा येन तम् । 'कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः । शैलोऽस्मीति ब्रुवन् भूरि बलिमादद्बृहद्वपुः ॥' इति श्रीशुकोक्तेः । वरश्रेणिभिर्वाञ्छितार्थावलीभिः संतोषिता आभीरदारा येन तम् । समुत्तुङ्गा गिरेः शृङ्गावलीषु बद्धानि चैलानि विचित्राः पताका येन तम् । शैलं क्रमात्परिक्रम्य प्रीयमाणमिति गिरिपूजनमुक्तम् । ब्राह्मणार्चनस्याप्युपलक्षणमेतत् ॥

मखध्वंससंरम्भतः स्वर्गनाथे समन्तात्किलारब्धगोष्ठप्रमाथे ।
मुहुर्वर्षति च्छन्नदिक्चक्रवाले सदम्भोलिनिर्घोषमम्भोदजाले ॥ ५ ॥

**मखेति** । एवं मखध्वंससंरम्भतो यज्ञभङ्गजनितात् कोपात् स्वर्गनाथे शक्रे आरब्धो गोष्ठस्य प्रमाथो येन तथाभूते सति छन्नदिक्चक्रवालेऽम्भोदजाले सदम्भोलिनिर्घोषं यथा स्यात्तथा मुहुर्वर्षति सति ॥

मुहुर्वृष्टिखिन्नां परित्रासभिन्नां व्रजेशप्रधानां ततिं बल्लवानाम् ।
विलोक्याप्तशीतां गवालीं च भीतां कृपाभिः समुन्नं सुहृत्प्रेमनुन्नम् ॥ ६ ॥

**मुहुरिति** । बल्लवानां ततिं मुहुर्वृष्टिखिन्नां विलोक्य गवालीं च भीतां विलोक्य तद्विषयाभिः कृपाभिः सम्यगार्धमनन्यम् । सुहृत्सु व्रजवासिषु यः स्वस्य प्रेमा तेन नुन्नं प्रेरितम् । स्फुटमन्यत् । युग्मकमेतत् ॥

ततः सव्यहस्तेन हस्तीन्द्रखेलं समुद्धृत्य गोवर्धनं सावहेलम् ।
अदभ्रं तमभ्रंलिहं शैलराजं मुदा बिभ्रतं विभ्रमज्जन्तुभाजम् ॥ ७ ॥

**तत इति** । ततः सव्यहस्तेन सावहेलं यथा स्यात्तथा । अश्रमेणेत्यर्थः । हस्तीन्द्रखेलं यथा स्यात्तथा तं गोवर्धनं शैलराजं समुद्धृत्य मुदा हर्षेण बिभ्रतम् । गोवर्धनं कीदृशम् । अदभ्रं महान्तम् । अभ्रंलिहं नभःस्पर्शिनम् । विभ्रमन्तो ये जन्तवो मर्कटशुकादयस्तान् भजतीति तम् । महावृष्ट्यापि भगवत्प्रभावात्तेषां दुःखलेशोऽपि नाभूदिति व्यज्यते ॥

प्रविष्टासि मातः कथं शोकभारे परिभ्राजमाने सुते मय्युदारे ।
अभूवन्भवन्तो विनष्टोपसर्गा न चित्ते विधत्त भ्रमं बन्धुवर्गाः ॥ ८ ॥

**प्रविष्टासीति** । हे मातर्जननि, उदारे सर्वगुणाधिके सुते मयि परिभ्राजमाने सति कुपितादिन्द्रात् कथं त्राणं भावीति शोकभारे कथं प्रविष्टासि । हे बन्धुवर्गाः, भवन्तो विनष्टोपसर्गा निवृत्तेन्द्रकृतक्लेशा अभूवन् । चित्ते भ्रममिन्द्रोऽस्मान् हनिष्यतीति भ्रान्तिं न विधत्त नार्पयत ॥

हृता तावदीतिर्विधेया न भीतिः कृतेयं विशाला मया शैलशाला ।
तदस्यां प्रहर्षादवज्ञातवर्षा विहस्यामरेशं कुरुध्वं प्रवेशम् ॥ ९ ॥

**हृतेति** । ईतिरतिवृष्टिलक्षणा तावद्धृता निवारिता, ततो भीतिर्भवद्भिर्न विधेया । ननु भीतिः कुतो न विधेया तत्राह—मयेयं शैलशाला कृता विशाला सर्वसमावेशार्हा । तत्तस्मादस्यामवज्ञातवर्षाः सन्तः प्रहर्षात् प्रवेशं कुरुध्वं यूयम् । अमरेशमिन्द्रं विहस्य । किं न इन्द्रो वराकः शक्नुयात् कर्तुमिति तस्य हासं विधायेत्यर्थः ॥

इति स्वैरमाश्वासितैर्गोपवृन्दैः परानन्दसंदीपितास्यारविन्दैः ।
गिरेर्गर्तमासाद्य हर्म्योपमानं चिरेणातिहृष्टैः परिष्टूयमानम् ॥ १० ॥

**इतीति** । इति पूर्वोक्तेन पद्यद्वयेनाश्वासितैर्गोपवृन्दैः परिष्टूयमानं भवन्तम् । कीदृशैः । भगवद्वाक्यजातेन परानन्देन संदीपितान्यास्यारविन्दानि येषां तैः । हर्म्योपमानं गिरेर्गर्तमासाद्यातिहृष्टैः । त्रिभिर्विशेषकमेतत् ॥

गिरीन्द्रं गुरुं कोमले पञ्चशाखे कथं हन्त धत्ते सखा ते विशाखे ।
पुरस्तादमुं प्रेक्ष्य हा चिन्तयेदं मुहुर्मामकीनं मनो याति भेदम्॥११॥

**गिरीन्द्रमिति** । गिरीन्द्रमित्यादिपञ्चकं श्रीराधावाक्यम् । हे विशाखे, हन्तेति खेदे । ते सखा नन्दकुमारः कोमले पञ्चशाखे पाणौ गिरीन्द्रं कथं धत्ते । पुरस्तादग्रे धृतगिरिममुं प्रेक्ष्य मामकीनमिदं मनश्चिन्तया मुहुर्भेदं विदारं याति ॥

स्तनद्भिः कठोरे घनैर्ध्वान्तघोरे भ्रमद्वातमाले हताशेऽत्र काले ।
घनस्पर्शिकूटं वहन्नन्नकूटं कथं स्यान्न कान्तः सरोजाक्षि तान्तः॥१२॥

**स्तनद्भिरिति** । हे सरोजाक्षि, अत्र काले अन्नकूटं भक्षितान्नराशिं गोवर्धनं वहन् कान्तः कथं तान्तो न स्यात् । अपि तु स्यादेवेत्यर्थः । कीदृशम् । घनस्पर्शीनि कूटानि शिखराणि यस्य तम् । अत्र काले कीदृशि । स्तनद्भिर्घनैः कठोरे कर्णोद्वेजके । ध्वान्तेन तिमिरेण घोरे नेत्रोद्वेजके । भ्रमन्ती वातमाला यस्मिन् तादृशम् । हता अनुद्दिष्टा आशा दिशो यत्र तस्मिन् ॥

न तिष्ठन्ति गोष्ठे कठोराङ्गदण्डाः कियन्तोऽत्र गोपाः समन्तात्प्रचण्डाः ।
शिरीषप्रसूनावलीसौकुमार्ये धृता धूरियं भूरिरसिन्किमार्ये ॥ १३ ॥

**न तिष्ठन्तीति** । हे आर्ये व्रजेश्वरि, अत्र गोष्ठे कठोराङ्गदण्डा दृढकायाः प्रचण्डाः प्रबलाश्च कियन्तो गोपा न तिष्ठन्ति । अपि तु बहवः सन्तीत्यर्थः । तथापि शिरीषप्रसूनावलीसौकुमार्येऽस्मिंस्तव कुमारे कृष्णे इयं भूरिर्धूर्भारः किं कथं धृतार्पिता । तस्माद्गोपान् ब्रवीतु भवती ते गिरिं धारयन्तु क्षणमयं विश्राम्यत्विति भावः ॥

अथ गोवर्धनं प्रार्थयति—

गिरे तात गोवर्धन प्रार्थनेयं वपुः स्थूलनालीलघिष्ठं विधेयम् ।
भवन्तं यथा धारयन्नेष हस्ते न धत्ते श्रमं मङ्गलात्मन्नमस्ते ॥ १४ ॥

**गिरे तातेति** । हे गिरे हे तात हे गोवर्धन, त्वां प्रति ममेयं प्रार्थनास्ति । केयं तत्राह—त्वया स्थूलनालीलघिष्ठं पुष्टकलम्बीशाकवदतिलघु वपुर्विधेयं कार्यम् । 'नाली शाके कलम्बके' इति हैमः । यथैष कृष्णो भवन्तं हस्ते धारयन् श्रमं न धत्ते न लभते । हे मङ्गलात्मन्, ते तुभ्यं नमोऽस्तु । त्वयैवं भाव्यमित्यर्थः ॥

पुनः कर्णे लगित्वा विशाखामाह—

भ्रमत्कुन्तलान्तस्मितद्योतकान्तं लसद्गण्डशोभं कृपाशेषलोभम् ।
स्फुरन्नेत्रलास्यं मुरारेस्त्वमास्यं वराकूतशालि स्फुटं लोकयालि ॥ १५ ॥

**भ्रमदिति** । हे आलि विशाखे, त्वं मुरारेरास्यमालोकय । आस्यं कीदृक् । कृतोऽशेषेषु सर्वेषु लोभो येन तत् । सर्वाखस्मास्वासक्तमित्यर्थः । वराण्याकूतान्यभिप्रायाणि शलति गच्छतीति तत् । वीक्षणान्तराले गूढभावाभिव्यञ्जीति भावः । स्फुटमन्यत् । मत्प्रार्थनया गिरिरेष तूलपिण्डवदभवत् । अतर्क्यो वाम्यसत्यसंकल्पता क्षणो महिमातो न काचिद्वि-चिन्तेति भावः ॥

निपीयेति राधालतावाङ्मरन्दं वरप्रेमसौरभ्यपूरादमन्दम् ।
दधानं मदं भृङ्गवत्तुङ्गकूजं वराङ्गीचलापाङ्गभङ्गाप्तपूजम् ॥ १६ ॥

**निपीयेतीति** । इति पूर्वोक्तपद्यपञ्चकरूपं राधालतावाङ्मरन्दं निपीय भृङ्गवन्मदं दधानं भवन्तम् । तन्मरन्दं कीदृशम् । वरप्रेमसौरभ्यपूरादमन्दं श्रेष्ठम् । भवन्तं कीदृशम् । तुङ्गकूजं उच्चकण्ठनादम् । वराङ्गया राधायाश्चलेनापाङ्गभङ्गेन कटाक्षतरङ्गेणाप्ता पूजा येन तम् । तद्वीक्षणच्छटासत्कृतमित्यर्थः । षड्भिः कुलकमेतत् ॥

कथं नाम दध्यात्क्षुधाक्षामतुन्दः शिशुर्मे गरिष्ठं गिरीन्द्रं मुकुन्दः ।
तदेतस्य तुण्डे हठादर्पयारं व्रजाधीश दध्नाचितं खण्डसारम् ॥ १७ ॥

**कथमिति** । हे व्रजाधीश, क्षुधाक्षामतुन्दो मे शिशुर्मुकुन्दः गिरीन्द्रं कथं दध्यात् । तत्तस्मादेतस्य मुकुन्दस्य शिशोस्तुण्डे अरं शीघ्रं दध्नाचितं खण्डसारं हठादर्पय ॥

महाभारनिष्ठे स्थिते ते कनिष्ठे लभे वत्स नीलाम्बरोद्दामपीडाम् ।
अवष्टभ्य सत्त्वं तदस्मै बल त्वं ददस्वाविलम्बं स्वहस्तावलम्बम् ॥ १८ ॥

**महाभारेति** । हे वत्स नीलाम्बर, ते कनिष्ठे कृष्णे महाभारनिष्ठे स्थिते सति उद्दाम-पीडामहं लभे प्राप्नोमि । तस्मात्त्वं सत्त्वं बलमवष्टभ्य । 'सत्त्वं गुणे पिशाचादौ बले द्रव्य-स्वभावयोः' इति विश्वः । हे बल, असौ स्वकनिष्ठाय स्वहस्तावलम्बं ददस्व अविलम्बं यथा स्यात्तथा ॥

इति स्निग्धवर्णी समाकर्णयन्तं गिरं मातुरेनां च निर्वर्णयन्तम् ।
कनिष्ठाङ्गुलीशृङ्गविन्यस्तगोत्रं परिप्रीणितव्यग्रगोपालगोत्रम् ॥ १९ ॥

**इतीति ।** इति पूर्वपद्यद्वयरूपां मातुर्गिरं समाकर्णयन्तं भवन्तम् । एनां मातरं च निर्वर्णयन्तं सस्नेहं पश्यन्तम् । कनिष्ठाङ्गुल्याः शृङ्गेऽग्रे विन्यस्तोऽर्पितो गोत्रो गि[रि]र्येन तम् । परिप्रीणितं संतर्पितमतिवृष्टिव्यग्रं गोपालगोत्रं गोपवंशो येन तम् । 'गोत्रः क्षोणीधरो गोत्रं कुले क्षेत्रेऽपि नाम्नि च' इति विश्वलोचनकारः । त्रिभिर्विशेषकमेतत् ॥

अमीभिः प्रभावैः कुतोऽभूदकुण्ठः शिशुर्धूलिकेलीपटुः क्षीरकण्ठः ।
बिभर्त्यद्य सप्ताब्दिको भूरिभारं गिरिं यच्चिरादेष कैलाससारम् ॥ २० ॥

**अमीभिरिति ।** धूलिकेलीपटुः क्षीरकण्ठः शिशुर्मुकुन्दः अमीभिरिन्द्रविषयकभृत्यत्वबुद्धिगि(द्रिर्गि)विषयच्छत्राकत्वदृष्टिलक्षणैः प्रभावैः पौरुषैरकुण्ठ उत्कृष्टः सर्वोत्तमः कुतो हेतोरभूत् । स हेतुरस्य स्वभावसिद्धः सर्वैश्वर्यसत्यसंकल्पत्ववपुरेव विमर्शनीय इति भावः । यद्यस्मात् साप्ताब्दिकः सप्तहायन एष कैलाससारं भूरिभारं गिरिं चिरादद्य बिभर्ति ॥

सत्यसंकल्पतां प्रतिपादयन्तः प्राहुः—

न शङ्का धरभ्रंशनेऽस्माकमस्मान्नखाग्रे सहेलं वहत्येष यस्मात् ।
गिरिर्दिक्करीन्द्राग्रहस्ते धरावद्भुजे पश्यतास्य स्फुरत्यद्य तावत् ॥ २१ ॥

**नेति ।** अस्माच्छिशोर्मुकुन्दात् धरभ्रंशने गिरिपतनेऽस्माकं शङ्का नास्ति । यस्मादेष नखाग्रे सहेलं धरं वहति । अस्य शिशोर्वामे भुजे गिरिरद्य स्फुरति शोभते । तत्रोपमा दिक्करीन्द्राग्रहस्ते दिग्गजराजशुण्डाग्रे धरावदिति यूयं पश्यत । पितुराज्ञया यज्ञाश्वमन्विष्यन्तः पृथ्वीं खनन्तः सगरपुत्रा रसातले शिरोभिः पृथिवीं धृत्वा तिष्ठतः पर्वतोपमान् चतुरा दिग्गजान् ददृशुरिति बालकाण्डे प्रसिद्धम् । श्रीभागवते तु पञ्चमे—मानसोत्तरगिरौ तादृशाश्चत्वारो दिग्गजाः पृथिवीमाक्रम्य तिष्ठन्तीति ख्यातम् । एतस्माद्गिरिभ्रंशे शङ्का नास्तीति ॥

इति स्फारतारेक्षणैर्मुक्तभोगैर्व्रजेन्द्रेण सार्धं धृतप्रीतियोगैः ।
मुहुर्बल्लवैर्वीक्ष्यमाणास्यचन्द्रं पुरः सप्तरात्रान्तरत्यक्ततन्द्रम् ॥ २२ ॥

**इतीति ।** इति पूर्वोक्तपद्यद्वयं वदद्भिर्बल्लवैर्गोपैर्मुहुर्वीक्ष्यमाण आस्यचन्द्रो यस्य तं भवन्तम् । कीदृशैः । अतिविस्मयात्स्फारताराणि विस्तीर्णकनीनिकानि ईक्षणानि येषां तैः । भवन्तं कीदृशम् । सप्तरात्रान्तरे रात्रिसप्तकमध्ये त्यक्ता तन्द्रा येन तम् । स्फुटार्थमन्यत् । त्रिभिर्विशेषकमेतत् ॥

पुनः कीदृशं भवन्तमित्यपेक्षायामाह—तडिदिति युग्मकम्।

तडिद्दामकीर्णान्समीरैरुदीर्णान्विसृष्टाम्बुधारान्धनुर्यष्टिहारान्।
तृणीकृत्य घोरान्सहस्रांशुचौरान्दुरन्तोरुशब्दान्कृतावज्ञमब्दान्॥२३॥
अहंकारपङ्कावलीलुप्तदृष्टेर्व्रजेषावदिष्टं प्रणीतोरुवृष्टेः।
बलारेश्च दुर्मानितां विस्फुरन्तं निराकृत्य दुष्टालिदण्डे दुरन्तम्॥२४॥

**तडिदिति**। अब्दान्मेघान् तृणीकृत्य बलारेरिन्द्रस्य दुर्मानितां च निराकृत्य विस्फुरन्तं विभ्राजमानमित्यन्वयः। कृतावज्ञमिति निराकरणक्रियायां विशेषणम्। अब्दान् कीदृशान्। तडिद्दामभिः कीर्णान् व्याप्तान्। समीरैरुदीर्णान् प्रेरितान्। विसृष्टा मुक्ताः करिशुण्डादण्डतुल्या अम्बुधारा यैस्तान्। धनुर्यष्टयः शक्रचापा एव विचित्रा रत्नहारा येषां तान्। शक्रेण शृङ्गारितानित्यर्थः। घोरान् भयंकरान्। सहस्रांशुचौरानाच्छादितरविबिम्बान्। दुरन्तोरुशब्दान् दुःसहकर्कशगर्जान्। बलारेः कीदृशस्य। अहंकारस्त्रैलोक्यनाथोऽस्मीति गर्वस्तद्रूपया पङ्कावल्या लुप्ता दृष्टिर्भृत्यत्वबुद्धिर्यस्य। स्फुटमन्यत्॥

विसृष्टोरुनीराः सझञ्झासमीरास्तडिद्भिः कराला ययुर्मेघमालाः।
रविश्चाम्बरान्तर्विभात्येष शान्तः कृतानन्दपूरा बहिर्यात शूराः॥२५॥

**विसृष्टोर्विति**। हे शूराः पराक्रमिणो गोपप्रवराः, यूयं गिरिगर्ताद्बहिर्यात। ननु सत्यामतिवृष्टौ कथं बहिर्निर्गमस्तत्राह—विसृष्टेत्यादिकमगूढार्थम्॥

इति प्रोच्य निःसारितज्ञातिवारं यथापूर्वविन्यस्तशैलेन्द्रभारम्।
दधिक्षीरलाजाङ्कुरैर्भाविनीभिर्मुदा कीर्यमाणं यशस्ताविनीभिः॥ २६॥

**इतीति**। इति पूर्वोक्तपद्यं प्रोच्य निःसारिता गिरिगर्ताद्बहिर्निर्गमिता ज्ञातिवारा बन्धुसमूहा येन तं भवन्तम्। कीर्यमाणमुपरि वृष्यमाणम्। स्फुटार्थमन्यत्॥

एवं लीलां वर्णयित्वा ग्रन्थकृत्प्रार्थयते—

वयं हन्त गोविन्द सौन्दर्यवन्तं नमस्कुर्महे शर्महेतोर्भवन्तम्।
त्वयि स्पष्टनिष्ठ्यूत भूयश्चिदिन्दुं मुदा नः प्रसादीकुरु प्रेमबिन्दुम्॥२७॥

**वयमिति**। हे गोविन्द, त्वत्सेवका वयं भवन्तं नमस्कुर्महे। शर्महेतोरानन्दरूपं त्वां लब्धुमित्यर्थः। 'षष्ठी हेतुप्रयोगेऽपि' इति सूत्रात् षष्ठी। तत्प्रापकं त्वयि प्रेमबिन्दुं नः प्रसादीकुरु। तमस्मभ्यं देहीत्यर्थः। कीदृशम्। स्पष्टं निष्ठ्यूतो भूयानतिबहुश्चिदिन्दुर्ज्ञानचन्द्रो येन तम्। यस्मिन् सति शान्तानां ज्ञानपद्धतिस्तिरस्कृता भवतीत्यर्थः। ते हि विचित्रलीलाशून्यो निस्तरङ्गसिन्धुरिवानन्दराशिः परमात्मेति ज्ञानेन तमुपासते॥

क्षुभ्यद्दम्भोलिजृम्भोत्तरलघनघटारम्भगम्भीरकर्मा
निस्तम्भो जम्भवैरी गिरिधृतिचटुलाद्विक्रमाद्येन चक्रे।

तन्वा निन्दन्तमिन्दीवरदलवलभीनन्ददिन्दिन्दिराभां
तं गोविन्दाद्य नन्दालयशशिवदनानन्द वन्देमहि त्वाम् ॥ २८ ॥

**क्षुभ्यदिति** । हे गोविन्द, हे नन्दालयशशिवदनानन्द, नन्दालये याः शशिवदनाश्चन्द्रमुख्यः श्रीयशोदाद्या मातृवर्गास्ता आनन्दयति मातृवात्सल्यानुसारिभिर्गुणगणैर्दुष्टदमनार्चितैरिति तत्संबोधने तथा । तं त्वां वयमद्य वन्देमहि । तं कीदृशम् । इन्दीवरदलैर्निर्मिता या वलभी चन्द्रशाला तस्यां नन्दन्तो य इन्दिन्दिरा भृङ्गास्तेषामाभां छविं तन्वा निन्दन्तम् । नीलारविन्दमकरन्दपायित्वादतिश्यामानां भृङ्गाणां कान्तिं तिरस्कुर्वन्तमिति दलिताञ्जनचिक्कणमिति भावः । येन त्वया गिरिभृत्या चटुलात् प्रचरिताद्विक्रमाज्जम्भवैरी शक्रो निस्तम्भो निर्दर्पश्चक्रे । कीदृशः । क्षुभ्यन् कृष्णबलैरुत्तोल्य निःक्षिप्यमानत्वात्संचलन् यो दम्भोलिस्तस्य या जृम्भा तयोत्तरला या घनघटा मेघमाला तस्या आरम्भः प्रचार एव गम्भीरमन्यानिर्वार्ये कर्म यस्य सः ॥ इति गोवर्धनोद्धरणं व्याख्यातम् ॥

---

श्रीबल्लवेन्द्राय नमः ।

अथ वस्त्रहरणलीलां विवक्षुस्तद्वारकात् कृष्णात्स्वाभीष्टमाशास्ते—

वन्याश्रिता मुरारिः कन्याः सन्यायमुन्मदयन् ।
अन्याभिलाषितां ते धन्यार्पितसौहृदो हन्यात् ॥ १ ॥

**वन्येति** । मुरारिस्तेऽन्याभिलाषितां स्वान्यतृष्णां हन्यादपनयेत् । किं कुर्वन् । वन्याश्रिताः कालिन्दीजलप्रवाहे स्नान्तीः कन्या गोपकुमारिका उन्मदयन् प्रहर्षयन् । सन्यायं यथा स्यात्तथा कान्तभावेन भजन्तीनां तासां वस्त्रहरणेन तदङ्गप्रदर्शनेन चोन्मदविधानं न्यायप्राप्तमिति भावः । कन्यासु मुख्यायां धन्यायामर्पितं सौहृदं येन सः । तस्यामतिप्रीतिमानित्यर्थः ॥

सहसि व्रतिनीरभितः कृतिनीर्गिरिजास्तवने सलिलाप्लवने
कलितोल्लसनाः किल दिग्वसनास्तटभाक्पटिका रसलम्पटिकाः
स्फुटबाल्ययुताः पशुपालसुताः कुतुकी कलयन्मतिमुल्ललय-
न्नुपगत्य मनोभववत्कमनो हृतवान्सिचयान्सुहृदां निचया-
न्तरगस्तरसा प्रियकं स्वरसादधिरुह्य नगं तटकाननगं
कृपया स्नपयन्नथ तास्त्रपयन्पृथुलांसतटीधृतधौतपटी-
पटलो हसितप्रभयोल्लसितः शृणुत प्रमदा गिरमश्रमदा-
मुपगत्य हितामभितः सहिता यदि वा क्रमतः स्फुटविभ्रमतः

सिचयान्नयत च्छलनं न यतः कथितं न मया जनुषः समया-
दनृतं ललिता यशसोज्ज्वलिता विदुरिन्दुहृदस्त्वदमी सुहृद-
स्तनवै न हसादुदितं सहसा बत यूयमिता व्रततः श्रमिता
इति संकथयन्पटुतां प्रथयन्नतिचञ्चल हे विश मा कलहे
वितराद्य पटं कुरु मा कपटं करवाम सदा वचनं रसदा-
स्तव दास्यपरा न वयं त्वपरा न हि चेत्त्वरितं निखिलं चरितं
खलु राज्ञि तव प्रबले कितव प्रगदाम मदोद्धत घोरमदो
वचनं च रुषा प्रसरत्परुषाक्षरमित्युदितं सरुषा रुदितं
जडताकलिले यमुनासलिले विलसद्वपुषां गुरुकम्पजुषां
चलचारुदृशां बहुधा सुदृशां निशमय्य ततः प्रणयी सतत-
सितचन्द्रिकया स्फुरितोऽधिकया यदि यूयमृते मम वागमृते
भवथ ग्रहिला नियतं महिला उपसृत्य ततः प्रियकात्पततः
सपटीपदकान्स्वपरिच्छदकानुररीकुरुत प्रमदाद्गुरुत-
स्त्यजतानुचितं हृदि संकुचितं न हि चेन्नितरां न पटान्वितरा-
म्युरुवीर्यचये मयि किं रचयेन्नृपतिः परितः स रुषा भरितः
स्फुटमित्यमलं निगदन्कमलं भ्रमयन्नुदितः शशिवन्मुदितः
स्वकराम्बरिणीरथ ता हरिणी नयनां कलयन्स्वशिरश्चलयन्
बत नम्रतया स्पृहयोन्नतया जलमज्जनतः कृतवर्जनतः
कु(क)पतेर्जनिता लघुता वनितास्तदलं दुरितक्षतये स्फुरित-
द्युतिसुन्दरयोर्युगलं करयोः शिरसि प्रयता द्रुतमर्पयता-
रुणमित्यधुना निजवाग्मधुना परिलभ्य मदं हृदि विभ्रमदं
किरतीभिरलं नयनं विरलं रचिताञ्जलिभिः प्रमदावलिभिः
प्रणतो मधुरः कृतकामधुरः सुभगंकरणं वसनाभरणं
विहितानतये ललनाततये ददङ्कुरितप्रणयच्छुरितः
परितो हृषिते मदनोत्तृषिते त्रपया नमिते प्रियसङ्गमिते
नवरागधरे द्युतिभागधरे हसिताङ्कुरतः स्फुरिते पुरतः
स्थगिते रसना विलसद्वसनाकुलिते पृथुना स्फुटवेपथुना

चलदग्रकरे प्रमदाप्रकरे विहितेष्टवरः प्रणयिप्रवरः
सुतरां सुखिभिर्वलितः सखिभिर्बहुधाखुरलीविलसन्मुरली-
नवकाकलिभिरुत्कलिकाकुलभिः कुलमुन्नमयन्सुदृशां रमय-
न्धियमुन्मदनः कृपया सदनप्रहितप्रमदः कलितप्रमदः
कुसुमस्तबकं श्रवणे नवकं दधदाभरणं जगतां शरणं
जय केशिहर प्रमणा विहर त्वमतिप्रणयं स्वजने प्रणय-
मयि दुर्हृदये भगवन्विदये कलयेररुणाधर हे करुणाम् ॥

**सहसीत्यादि** । हे केशिहर, त्वं जय । प्रमणा उदारचित्तस्त्वं स्वजने निजपरिकरेऽतिप्रणयं प्रणयन् प्रकाशयन् विहर । हे भगवन् हे अरुणाधर, दुर्हृदये विदये मयि करुणां त्वं कलयेः कुर्या इत्यन्तिमेनान्वयः । कीदृशः सन् । कुतुकी त्वं पशुपालसुताः कलयन् पश्यन्नुपगत्य तासां सिचयान् वस्त्राणि हृतवान् । ताः कीदृशीः । सहसि मार्गशीर्षे मासि व्रतिनीः । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । गिरिजास्तवनेऽभितः कृतिनीः कुशलाः । सलिलाप्लवने स्नाने कलितोल्लसनाः सोत्साहाः । दिगिति द्वयं स्फुटार्थम् । रसलम्पटिकाः पतिभावेन कृष्णे लुब्धाः । स्फुटबाल्ययुताः जलक्रीडातिचपलाः । पुनः कीदृशस्त्वम् । मतिं तासूल्ललयन् सतृष्णां कुर्वन् । मनोभववत् काम इव कमनः कमनीयः । सुहृदां स्वैकजीवातूनां चतुःपञ्चाब्दानां शिशूनां निचयस्यान्तरगो मध्यवर्ती । तरसा वेगेन कालिन्दीतटकाननगं प्रियकं कदम्बं नगं स्वरसात् स्वेच्छातोऽधिरुह्य ताः पशुपालसुताकृपया स्नपयन्नथ त्रपयन् । पृथुलायामसंतत्यां स्कन्धप्रदेशे धृतं धौतपटीपटलं निर्मलवस्त्रवृन्दं येन सः । हसितप्रभया स्मितकान्त्योल्लसितः प्रफुल्लः । पुनः कीदृशः । शृणुतेत्यादिकं कथयन् । हे प्रमदाः, यूयं सहिताः मिलिताः यदि वा क्रमत एकैकशो मदन्तिकमुपगत्य यूयमभितो हितामश्रमदां मम गिरं शृणुत । स्फुटविभ्रमतः प्रकटं विलासं प्राप्य सिचयान् वासांसि नयत । छलनं कपटं मे नास्ति यतो मया जनुषः समयाज्जन्मकालमारभ्यानृतं न कथितम् । हे ललिताः कमनीयाङ्गयः, हे यशसोज्ज्वलिता इन्दुहृदोऽमी सुहृदस्तद्विदुर्जानन्ति । एवमुक्तम्—'न मयोदितपूर्वं वा अनृतं तदिमे विदुः' इति । इदमुदितं हसात् हासान्नाहं तनवै विस्तृणानि । सहसा हठेन । बतेति खेदे । यतो यूयं व्रततः श्रमिता भवथ इताः स्नानं प्राप्ता इति संकथयन् । पटुतां सौहार्दे निपुणतां प्रथयन् । अतीत्यादि पशुपालसुतानां वाक्यम् । हे अतिचञ्चल, त्वं कलहे मा विश । अद्य पटं स्वं स्वमस्माकं वितरार्पय । कपटं मा कुरु । तव वचनं सदा वयं करवाम । रसदा दधिरादिदात्र्यः, श्लेषेण शृङ्गारार्पिकाश्च । एवमपि तव दास्यपरा वयमपरा अन्यदीया न भवामः । न हीति । त्वं चेदिदमस्मद्वचनं नैव मन्यसे तर्हि तव निखिलमस्मद्विडम्बनलक्षणं चरितं प्रबले राज्ञि कंसे प्रगदाम । हे कितव हे मदोद्धत, जडताकलिले

शैत्यव्याप्ते यमुनासलिले विलसद्वपुषामतो गुरुकम्पजुषां सुदृशां बहुधा विविधघोरं भयावेदकमदो वचनं रुषा प्रसरत् परुषाक्षरं ताभिरित्येवंप्रकारेणोदितं सरुषा रुदितं क्रोधरोदनेन सहितं निशमय्य श्रुत्वा ततोऽधिकया सततस्मितचन्द्रिकया स्फुरितः। अतिहृष्टोऽभूदित्यर्थः। यतः प्रणयी तासां मित्रमित्यर्थः। ताः प्रतीत्यमलं वचनं स्फुटं निगदन्। इति किं तदाह—हे महिलाः, यदि ऋते सत्ये मम वागमृते प्रहिला यूयं भवथ। ततस्तर्हि उपसृत्य संनिधिमासाद्य प्रियकात्कदम्बात्पततः स्वपरिच्छदकान् सपटीपदकानुररीकुरुत गुरुतः प्रमदादतिहर्षाद्गृह्णीत। हृद्यनुचितं संकुचितं त्यजत। विवस्त्राः कथमुपसरिष्याम इति मद्वाचं चेन्न मन्यध्वे, तर्हि नितरां सर्वथा पटान्न वितरामि दास्यामि। यच्च कान्तस्य मे वाक्यमकुर्वाणा नः पतिबलं प्रदर्शयत तत्किलाकिंचित्करमित्याह—परितो रुषा भरितोऽपि स नृपतिरुरुवीर्यचये महाविक्रमिणि मयि किं रचयेत् किं कर्तुं क्षमः। तत्परिकरास्तु बहवो निहताः। तमथ निहनिष्यामीत्यर्थः। कमलं भ्रमयन् शशिवदुदितः। निर्भयं प्रकाशमान इत्यर्थः। मुदितस्ताः पश्यन् सहर्षः। पुनः कीदृशः। प्रमदावलिभिः प्रणतः। मधुरो रुचिरः। कीदृशीभिरिति। निजवाच्यधुना भगवद्वचनासवेन विभ्रमदं मदं हृदि परिलभ्य नयनं तस्मिन् किरतीभिः। विरलं पृथक्पृथग्रचिताञ्जलिभिः। भगवन्तं प्रियं नमस्कुर्वतीभिरित्यर्थः। हे वनिताः। उन्नतया स्पृहयात्यभिलाषेण नम्रतया विवस्त्रतया कृतवर्जनतः शास्त्रे प्रतिषिद्धाज्जलमज्जनतो हेतोः। कु(क)पतेर्वरुणदेवताया लघुतावज्ञाधुना युष्माभिर्जनिता कृता। अनुप्रासानुरोधादस्थानस्थपदत्वं न दोषः। तत्तस्माद्दुरितक्षतये वरुणावज्ञानिमित्तकपापविनाशाय अरुणं करयोर्युगलं शिरसि द्रुतं मह्यं मङ्गलमूर्तयेऽर्पयत प्रयताः सत्यो यूयम्। करयोः कीदृशयोरित्याह—स्फुरितेति। पुनः कीदृशः। कृता पूरिता कामधुरा वाञ्छितभीरो येन सः। विहितानतये ललनाततये सुभगंकरणं वसनाभरणं ददत् प्रयच्छन्। अङ्कुरितेन मदीयैवेषा ललनाततिरित्यभ्युदितेन प्रणयेन छुरितस्तस्यां सानुराग इत्यर्थः। ततः प्रमदाप्रकरे पशुपालसुतागणे विहितेष्टवरः। 'याताबला व्रजं सिद्धा मयेमा रंस्यति क्षपा' इति तदभिलषितं दातुं प्रतिज्ञातवानित्यर्थः। प्रमदाप्रकरे कीदृशीत्याह—परितो हृषितो इत्यादीनि दश विशेषणानि विस्फुटार्थानि। यतः प्रणयिप्रवरः स्निग्धोऽतिमुख्यः। नितरां सुखिभिरानन्दिभिः सखिभिर्वलितः सन्। बहुधा नानाप्रकारया खुरल्याभ्यासेन विलसन्त्यो मुरल्यां नवकाकल्यो यस्य सः। सुदृशां तासामुत्कलिकाकुलमुत्कण्ठावृन्दमुन्नमयन् विवर्धयन्। तासां धियं रमयन्। उन्मदनस्तासामुन्मादजनकः। कृपया सदनेषु प्रहिताः प्रेषिताः प्रमदा येन सः। कलितप्रमदः स्वयं तत्तद्विनोदैर्धृतहर्षः। कुसुमस्तबकं नवकमाभरणं श्रवणे दधत्। जगतां प्राणिनां शरणमाश्रयः। जयेत्यादिकं योजितं प्राक्। कुसुमस्तबकनामा दण्डकोऽयं बोध्यः॥

यस्य स्फूर्तिलवाङ्कुरेण लघुनाप्यन्तर्मुनीनां मनः
स्पृष्टं मोक्षसुखाद्विरज्यति झटित्यास्वाद्यमानादपि।

प्रेम्णस्तस्य मुकुन्द साहसितया शक्नोतु कः प्रार्थने
भूयाज्जन्मनि जन्मनि प्रचयिनी किंतु स्पृहाप्यत्र मे ॥ २ ॥

**यस्येति** । हे मुकुन्द, यस्य लघुनापि स्फूर्तिलवाङ्कुरेण मुनीनां तापसशान्तादीनामन्तर्मनः स्पृष्टं सत् आस्वाद्यमानादभूयमानादपि मोक्षसुखान्निस्तरङ्गसमुद्रतुल्यलीलाशून्यपरमात्मस्वरूपानुभवाज्झटिति विरज्यति शीघ्रं विरक्तिमेति । ततो विचित्रलीलास्पदमेव तत्स्वरूपमिच्छतीत्यर्थः । 'परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥' इति श्रीशुकोक्तेः । नैर्गुण्ये लीलागुणरहिते परमात्मनीत्यर्थः । तस्य प्रेम्णः प्रार्थने तदेवाधुना मे भवत्विति साहसितया याचने कः शक्नोतु । न कोऽपीत्यर्थः । किं त्वत्र प्रेम्णि जन्मनि जन्मनि मे प्रचयिनी वर्धमाना स्पृहापि भूयात् । सत्यां स्पृहायां प्रेमापि कदाचिद्धावीत्याशयः ॥ इति वस्त्रहरणप्रकरणं पुनर्व्याख्यातम् ॥

---

नमः श्रीरासरसिकाय ।

अथातिचारुत्वाद्रासक्रीडां पुनर्वर्णयति पज्झटिकाच्छन्दसा—

शारदशशधरवीक्षणहृष्टः परमविलासादिभिरभिमृष्टः ।
बल्लवरमणीमण्डलभावप्रोल्लासककलमुरलीरावः ॥ १ ॥

**शारदेति** । शारदेत्यादिपद्यानां वनमाली जयतीति पञ्चदशपद्यगतेनान्वयः । स कीदृशः । शारदशशधरस्य शरच्चन्द्रस्य वीक्षणेन हृष्टः सहर्षः । अभिमृष्टो व्याप्तः ॥

अथ सकलाभिर्मदविकलाभिर्निशि परिभूय स्वजनान्भूयः ।
अविरुवतीभिर्नवयुवतीभिर्विहितोद्देशः सुन्दरवेशः ॥ २ ॥

**अथेति** । भूयोऽधिकं यथा स्यात्तथा स्वजनान् पत्यादीन् परिभूयोल्लङ्घ्य वनं प्राप्ताभिर्नवयुवतीभिर्विहित उद्देशोऽन्वेषणं यस्य सः । कीदृशीभिः । मदेन तारुण्यजेन विकलाभिर्विह्वलाभिः । व्याप्ताभिरिति यावत् । अविरुवतीभिर्निःशब्दाभिः ॥

मिलितमृगाक्षीवाञ्छितसाक्षीकृतपरिहासः स्फीतविलासः ।
तदमलवाणीनिशितकृपाणीदलितनिकारः कलितविकारः ॥ ३ ॥

**मिलितेति** । मिलितानां स्वान्तिकं प्राप्तानां मृगाक्षीणां यानि वाञ्छितानि तेषु साक्षीकृतो माध्यस्थं नीतः परिहासो येन सः । हास्येन तासु प्रकाशितौदासीन्य इत्यर्थः । तासाममलवाण्य एव निशिताः कृपाण्यस्ताभिर्दलितः कृत्तो निकारः शाठ्यं यस्य सः । 'कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः । ततः कलितविकारस्तासां कटाक्षैर्विद्धचित्तः ॥

प्रमदोत्तरलितबल्लवनारीमुखचुम्बनपरिरम्भणकारी ।
उन्नतमनसां सुदृशां मानप्रेक्षणतः कलितान्तर्धानः ॥ ४ ॥

**प्रमदेति**। उन्नतमनसां प्रौढचित्तानां सुदृशां मानप्रेक्षणतः कान्तलब्धसौभाग्यहेतुकगर्वदर्शनादैकमत्यभाव्यरासप्रयोजकाय मानोपशमाय कलितान्तर्धानः॥

अनुकृतचरितः पुलिने परितस्तरुषु च पृष्टः क्वापि न दृष्टः।
युवतिचमूभिस्त्वरितममूभिर्मुहुरनुगीतः कुतुकपरीतः॥ ५॥

**अनुकृतेति**। अमूभिर्युवतिचमूभिः पुलिनेऽनुकृतचरितः। स्फुटार्थमन्यत्॥

काकुभिराभिः प्रार्थितसङ्गः प्रकटितमूर्तिर्धृतरतिरङ्गः।
किमपि निगूढरुषा परिपृष्टः कलितोत्तरविधिरलमुपविष्टः॥ ६॥

**काकुभिरिति**। आभिर्युवतिचमूभिः काकुभिर्गद्गदवाग्भिः प्रार्थितः सङ्गो यस्य सः। ततः प्रकटितमूर्तिस्तास्वाविर्भूतः। तासामुत्तरीयैर्विरचिते पीठ उपविष्टो निगूढरुषा ताभिः किमपि परिपृष्टः कथमस्मान्निरपराधांस्त्वदेकप्राणान्निशि त्यक्तवानसीत्याक्षिप्त इत्यर्थः। ततोऽलं कलितोत्तरविधिर्मयि प्रेम वर्धयितुं वस्त्यक्तवानस्मीत्युक्त्वाप्यदृष्टतत्प्रसादः सदैवाहमृण्येव भवतीनामिति दत्तसम्यगुत्तर इत्यर्थः। ततोऽतिप्रसन्नाभिस्ताभिः सह धृतरतिरङ्गः॥

करुणाशीलः खण्डितपीलः स्तबकितलीलः कुवलयनीलः।
धृतमृदुहासः प्रेमविलासस्ततनुवासः कल्पितरासः॥ ७॥

**करुणेति**। करुणेति स्फुटार्थः। कुवलयं नीलाम्बुजं तद्वन्नीलः श्यामाङ्गः। ततो विस्तृतस्तनुवासो देहसौरभ्यं यस्य सः। केचित्तु ततो विस्तृतस्तनुर्महान् वासः संभोगार्थमवस्थानं येन सः। 'वासो वेश्मन्यवस्थाने' इति हैमः। कल्पितो रचितो रासो येन सः॥

अथ परिकल्पितमण्डलबन्धः कुसुमशरासनविभ्रमकन्दः।
युवतीयुगयुगसुभगस्कन्धन्यस्तलसद्भुजदण्डद्वन्द्वः॥ ८॥

**अथेति**। कुसुमशरासनः पुष्पधन्वा स्मरस्तस्य ये विभ्रमा विलासास्तेषां कन्दो मूलम्। कारणमित्यर्थः। युवतीनां युगस्य युगस्येति द्विरुक्त्या सर्वेषां युवतियुगलानां सुभगेषु स्कन्धेषु न्यस्तमर्पितं लसत् सुन्दरं भुजदण्डद्वन्द्वं येन सः॥

अलिपरिवीते मारुतशीते वरसंगीते भुवनातीते।
भूषणतारध्वनिपरिसारक्रान्तवनान्ते शशिरुचिकान्ते॥ ९॥
मध्यगमध्यगमधुपविराजिस्फुटचम्पकततिविभ्रमभाजि।
रासे कृतरुचिरन्तस्थायी वेणुमुखाधरपल्लवदायी॥ १०॥

**अलीति**। अलीति युग्मकम्। पुनः स कीदृशः। रासे कृतरुचिः साभिलाषः।

रासे कीदृशीत्याह—अलिपरिवीत इत्यादि प्रकटार्थम् । भूषणानां ये तारध्वनयोऽत्युच्चानि सिञ्जितानि तेषां परिसारेण संचारेण क्रान्तं वनान्तं यत्र तस्मिन् ॥

**मध्येति** । मध्यगाश्च मध्यगाश्चेति प्रतिचम्पकयुग्ममध्यस्थिता ये मधुपास्तैर्विराजिन्यो याः स्फुटाश्चम्पकततयस्तासां विभ्रमं भ्रान्तिं भजतीति तस्मिन् । अन्तस्थायी श्रीराधया सह मण्डलमध्यस्थः । वेणुमुखेऽधरपल्लवं ददातीति सः ॥

स्तम्भितराकापतिरविकारानपि सुरदारान्मदयन्नारात् ।
कुतुकाकृष्टश्चिरमभिवृष्टः सपदि विलूनैः सुरतरुसूनैः ॥ ११ ॥

**स्तम्भितेति** । पुनः कीदृशः । स्तम्भितो राकापतिश्चन्द्रो येन सः । अविकारान् विकाररहितानपि सुरदारान्मदयन्मन्मथमत्तान् कुर्वन् । आराद्दूरे । वियतीत्यर्थः । कुतुकेन रासविनोदेनाकृष्टः । सपदि तत्क्षणे विलूनैः सुरतरुसूनैः कल्पवृक्षपुष्पैरभिवृष्टः ॥

अथ कल्पीकृतरजनिविहारी खस्थसुरासुरविस्मयकारी ।
निजनिजनिकटस्थितविज्ञानप्रमुदितरमणीकृतसंमानः ॥ १२ ॥

**अथेति** । कल्पीकृतायां ब्रह्मरात्रितां नीतायां रजन्यां विहारी क्रीडनशीलः । त्रियामायां रात्र्यां यो ब्रह्मरात्रिं समावेशयामास । मिथो निखिलगुणानुभवसिद्धिकाम इति भावः । 'ब्रह्मरात्र उपावृत्ते' इत्यत्रैवं व्याख्यातं तत्त्वज्ञैः । खस्थानां नभोवर्तिनां सुरासुराणां विस्मयं करोतीति सः । निजनिजनिकटे स्वस्वपार्श्वे स्थितिविज्ञानेन हरेर्विद्यमानतानुभवेन प्रमुदिता या रमण्यस्ताभिः कृतसंमानः ॥

निजदृग्भङ्गीक्षुभितकुरङ्गीनयनामण्डलगुरुकुचसङ्गी ।
केलिविलोलः प्रबलनिचोलः स्वेदजलाङ्कुरचारुकपोलः ॥ १३ ॥

**निजेति** । निजदृग्भङ्ग्या स्वकटाक्षेण क्षुभितानां कुरङ्गीनयनामण्डलानां गुरुषु पीनेषु कुचेषु सङ्ग आश्लेषलक्षणो यस्यास्ति सः । स्फुटार्थमितरत् ॥

कुमुदयुतायां तरणिसुतायां सलिलविनोदप्रवलितमोदः ।
युवतिनिकायप्रोक्षितकायः शिथिलितमालः पुलककरालः ॥ १४ ॥

**कुमुदेति** । कुमुदेति प्रकटार्थम् । सलिलविनोदे जलविहारे । प्रोक्षितो निषिक्तः । पुलककलामालीति पुलककरालः ॥

वनविहारमाह—

अथ वनमाली वरविपिनालीकुञ्जनिकेतनवीक्षणशाली ।
जयति विहारी निशि मणिहारी व्रजतरुणीगणमानसहारी ॥ १५ ॥

**अथेति** । पद्यं विस्फुटार्थम् ॥

कविरेवं प्रभो रासलीलां वर्णयित्वा तस्य जयमाशास्ते—

नतजनबन्धो जय रससिन्धो वदनोल्लसितश्रमजलबिन्दो ।
त्वमखिलदेवावलिकृतसेवासंततिरधमा वयमिह के वा ॥ १६ ॥

**नतजनेति** । त्वं जय । ईदृशपरिकरधामलीलाविशिष्टतया प्रकटय स्वोत्कर्षं सर्वदेति भावः । ननु यूयमपि मामीदृशं सेवध्वं तत्राह—त्वमिति । अखिलाभिर्देवावलिभिः कृता सेवासंततिः परिचर्याविस्तारो यस्य तादृशस्त्वमसि । तस्येह तव सेवायां अधमा गुणहीना मनुष्या वयं भवामः । न केऽपीति का गणना तस्यामस्माकमित्यर्थः । नतजनबन्धुत्वाच्चेत्कृपयसि तदा योग्याः सन्तस्त्वमाश्रयिष्याम एवेति भावः ॥

सेवाभाग्यं दूरेऽस्तु, रतिलेशं तु देहीत्याशयवानाह—

जय जय कुण्डलयुगरुचिमण्डलवृतगण्डस्थल दमिताखण्डल ।
धृतगोवर्धन गोकुलवर्धन देहि रतिं मे त्वयि मुरमर्दन ॥ १७ ॥

**जयेति** । कुण्डलयुगयो रुचिमण्डलैर्वृते गण्डस्थले कपोलौ यस्य हे तादृशेति । तत्र स्वासक्तिनिर्भरः । स्फुटार्थमन्यत् ॥ इति रासक्रीडा व्याख्याता ॥

---

श्रीराधावल्लभाय नमः ।

सुधासुधारासु मुधाभिधानं यद्वाचमाचम्य तनोति लोकः ।
किशोरयोः केलिकुलैककुञ्ची करोतु नः काङ्क्षितमेष रूपः ॥

अथ स्वयमुत्प्रेक्षितलीला—

श्यामलसुन्दरसौहृदबद्धा कामिततत्पदसंगतिरद्धा ।
धैर्यमसौ स्मरवर्धितबाधा प्राप न मन्दिरकर्मणि राधा ॥ १ ॥

**अथेति** । स्वयं स्वोपायेन स्वयंदूत्यैनैवोत्प्रेक्षिता निष्पादिता या लीला सा स्वयमुत्प्रेक्षितलीलेत्यर्थः । तत्र मङ्गलं श्रीति । **श्यामलेति** । असौ राधा मन्दिरकर्मणि गृहकृत्ये धैर्यं न प्राप । कीदृशी । यतः श्यामले सुन्दरे हरौ यत्सौहृदं तेन बद्धा । तत एव स्मरेति । ततः कामितेति ॥

तं कमलेक्षणमीक्षितकामा सा च्छलतः स्वयमुज्झितधामा ।
यामुनरोधसि चारु चरन्ती दूरमविन्दत सुन्दरदन्ती ॥ २ ॥

दोधकम् ।

**तमिति** । छलतः सूर्यार्चनपुष्पानयनव्याजेन सा राधा दूरमविन्दतेति लोकप्रेक्षणशङ्कानिवृत्तिः ॥ **दोधकमिति** । तल्लक्षणं च—'दोधकमिच्छति भत्रितयाद्गौ' इत्येतत् ॥

प्राप्योदारां परिमलधारां कंसारातेरुदयति वाते ।
सेयं मत्ता दिशि दिशि यत्ता दृष्टिं कम्रामकिरदनम्रा ॥ ३ ॥

**प्राप्येति** । सेयं राधा वाते पवने उदयत्युपसर्पति सति कंसारातेः कृष्णस्योदारां परिमलधारां प्राप्य मत्ता सती दिशि दिशि कम्रां मनोज्ञां दृष्टिमकिरत् । यत्ता तद्वीक्षणे सयत्ना । अनम्रा उच्चग्रीवा ॥

भृङ्गीवेयं तमपरिमेयं मुग्धा गन्धं हृदि कृतबन्धम् ।
व्यग्रप्राया पुलकितकाया प्रेमोद्भ्रान्ता द्रुतमभियाता ॥ ४ ॥

मत्ता ।

**भृङ्गीति** । इयं मुग्धा राधा भृङ्गीव तमपरिमेयं गन्धमभिलक्षीकृत्य द्रुतं याता । कंसारातेरन्तिकमिति शेषः । हृदि कृतो बन्धस्तद्वीक्षणनिर्बन्धो यत्र तद्यथा स्यात्तथा । इयं कीदृशी । व्यग्रप्राया प्रायेणोद्विग्ना । स्फुटमन्यत् ॥ **मत्तेति** । तल्लक्षणं च—'ज्ञेया मत्ता मभसगसृष्टा' इत्येतत् ॥

कृष्णमवेक्ष्य ततः परितुष्टा पुष्पगणाहृतिकैतवजुष्टा ।
मन्थरपादसरोरुहपाता कुञ्जकुटीरतटीमुपयाता ॥ ५ ॥

**कृष्णमिति** । ततस्तत्र सा राधा कृष्णमवेक्ष्य परितुष्टा सती कुञ्जकुटीरतटीमुपयाता जगाम । केन छद्मनोपयातेत्यपेक्षायां विशिनष्टि—पुष्पेति । वेशादुपयान(ने)ऽप्यसमर्थाभूदिति बोधयन् विशिनष्टि—मन्थरेति ॥

सा पृथुवेपथुदोलितहस्ता प्रेमसमुत्थितभावविहस्ता ।
फुल्लमहीरुहमण्डलकान्ते तत्र पुरः प्रससार वनान्ते ॥ ६ ॥

दोधकमेव ।

**सेति** । सा तत्र पुरो वनान्ते प्रससार । कीदृशी । पृथुना वेपथुना कम्पेन दोलितौ हस्तौ यस्याः सा । प्रेम्णः समुत्थितैर्भावैर्हर्षगद्गदिकादिभिर्विहस्ता व्याकुला । 'विहस्तव्याकुलौ समौ' इत्यमरः । वनान्ते कीदृशीत्याह—फुल्लेति । विलासो नाम सत्वजोऽयं भावभेदः । तल्लक्षणं चोक्तम्—'विशेषो दयितालोके मुखनेत्रादिकर्मणः । यानस्थानासनादेश्च विलासः कथ्यते बुधैः ॥' इति काव्यकौस्तुभे । एवमन्यत्र च ॥

माधवस्तां तदालोकयन्राधिकां बल्लवीवर्गतः सद्गुणेनाधिकाम् ।
केयमुद्बाधते मद्वनं रागतस्तूर्णमित्युल्लपन्फुल्लधीरागतः ॥ ७ ॥

**माधवेति** । तदा माधवस्तां राधामालोकयन् सन्नागतः प्राप । मद्वनं रागतः केयमुद्बाधते इति तूर्णमुल्लपन् सन् । स्फुटार्थमन्यत् ॥

भालविद्योतितस्फीतगोरोचनं पार्श्वतः प्रेक्ष्य तं विभ्रमल्लोचनम् ।
सा पटेनावृता कैतवाद्वामिनी बक्रितभ्रूरभूद्दूरभूगामिनी ॥ ८ ॥

स्रग्विणी ।

**भालेति।** सा भामिनी राधा तं कृष्णं पार्श्वतः प्रेक्ष्य पटेनावृता सती कैतवादुत्कृष्टकुसुमावचयच्छलेन दूरभूगामिनी अभूत्। ततोऽतिदूरे जगामेत्यर्थः। सा कीदृशीत्याह—वक्रितभ्रूरिति। देवाभ्यर्चनपुष्पावचयकारिणीं मां खेदयितुं कथमत्र भवान् प्रवृत्त इत्युद्रतकृत्रिमकोपेत्यर्थः। तं कीदृशमित्याह—भालेति। प्रकटार्थम्॥ **स्रग्विणीति।** लक्षणमस्य पूर्वं दर्शितम्॥

लीलोद्भ्रान्तं मुहुरथ नुदती नेत्रद्वन्द्वं दिशि दिशि सुदती।
वीक्षांचक्रे दलभरविकटां मल्लीवल्लीं तटभुवि निकटाम्॥ ९॥

**लीलेति।** सा सुदती लीलातटभुवि निकटां संनिहितां मल्लीवल्लीं वीक्षांचक्रे ददर्श। दिशि दिशि लीलोद्भ्रान्तं नेत्रद्वन्द्वं मुहुर्नुदती सती। वल्लीं कीदृशीम्। दलभरैर्विकटां व्याप्ताम्॥

तामुन्मीलद्भ्रमरविलसितां लब्धा पुष्पैरुपरि किल सिताम्।
लीनेवाभूद्विकसितमदना तस्याः प्रान्ते सरसिजवदना॥ १०॥

भ्रमरविलसिता।

**तामिति।** सा सरसिजवदना राधा तां वल्लीं लब्धा सती तस्याः प्रान्ते लीनेवाभून्न तु लीना। तां कीदृशीम्। उपरि पुष्पैः सितां शुभ्राम्। स्फुटार्थमन्यत्। लीलोद्भ्रान्तमित्यादि पद्यद्वयेऽवहित्था संचारिभावः॥ **भ्रमरेति।** तल्लक्षणं च—'गौ गौ नौ गो भ्रमरविलसिते' इत्येतत्॥

अञ्जसा व्याहरत्कंजसारेक्षणस्तामसौ स्रग्विणीं दामसौरभ्यभाक्।
माधुरीमुद्गिरन्साधुरीत्युज्ज्वलां नूतनानन्ददां पूतनामर्दनः॥ ११॥

**अञ्जसेति।** असौ पूतनामर्दनस्तां राधामञ्जसा सुखेन व्याहरत् कथितवान्। कीदृशः। कंजादपि सारे श्रेष्ठे ईक्षणे यस्य सः। माधुरीं शोभामुद्गिरन् सन्। रीतिः स्पन्दः। विशदार्थमन्यत्॥

किं व्याहरत्तदाह—

भङ्गुरानङ्कुरान्निर्दयं छिन्दती वीरुधः कोमलोद्भेदिनीर्भिन्दती।
आः कथं लुण्ठसि त्वं मृगाङ्कानने पुष्पराजीमसौ हन्त मत्कानने॥ १२॥

स्रग्विण्येव।

**भङ्गुरानिति।** हे मृगाङ्कानने राधे, असौ त्वं मत्कानने पुष्पराजीं कथं लुण्ठसि। हन्तेति खेदे। आ इति कोपे। 'आस्तु स्यात्कोपपीडयोः' इत्यमरः। कीदृशी सती। निर्दयं यथा स्यात्तथा भङ्गुरान् वक्रानङ्कुरान् छिन्दती कोमलोद्भेदिनीर्वीरुधो लता भिन्दती सती। कोमल उद्भेदो मञ्जरो(र्यु)द्गमो यासामस्ति ताः॥

सकोपमिव संभाषिणि हरौ प्रथमं प्रागल्भ्यमाश्रयन्त्याह—

सदात्र चिनुमः प्रसूनमजने वयं हि निरताः सुराभिभजने ।
न कोऽपि कुरुते निषेधरचनं किमद्य तनुषे प्रगल्भवचनम् ॥ १३ ॥

**सदेति** । सुराभिभजने देवतार्चने निरता वयमत्राजने निर्जने वने सदैव प्रसूनं चिनुमः । कोऽपि निषेधरचनं वर्जनं न कुरुते । त्वमद्य प्रगल्भवचनं किं तनुषे प्रकाशयसि । सुराभिभजन इति तव धर्मज्ञस्य देवार्चनविबाधो नोचितः । अजने इति नास्त्यत्रेतरजनेभ्यः शङ्केति व्यज्यते ॥

अथ सविनयमाह—

प्रसीद कुसुमं विचित्य सरसा प्रयामि सरसीरुहाक्ष तरसा ।
क्रियाद्य महती ममास्ति भवने विलम्बमधिकं तनुष्व न वने ॥ १४ ॥

जलोद्धतगतिः ।

**प्रसीदेति** । हे सरसीरुहाक्ष, त्वं प्रसीद कुसुमावचये विघ्नं मा कुरु । सरसादरूक्षाहं त्वयि रूक्षभाषणं कर्तुमसमर्था कुसुमं विचित्य तरसा वेगेन प्रयामि, यद्भवनेऽद्य महती क्रिया ममास्ति । ततो वाक्योद्वाक्येन वनेऽधिकं विलम्बं मम न तनुष्व न कुरु । अत्र त्वयि सरसा सानुरागास्मि अतः प्रसीद मामङ्गीकुरु । सरसीरुहाक्षेति त्वन्नेत्रशोभयाकृष्टाहं गृहे स्थातुं न शक्नोमि, अतस्तरसा प्रसीदेति । भवनेऽद्य मे महती क्रिया नास्ति, ततो वनेऽधिकं विलम्बं तनुष्वेति व्यज्यते ॥ **जलोद्धतेति** । लक्षणमस्योक्तं प्राक् ॥

अन्यन्मनोज्ञं श्रोतुमन्तरतिस्पृहावान् परिरूक्षमिवाह । नियुक्त इति द्वाभ्याम्—

नियुक्तः क्षितीन्द्रेण तेनास्मि कामं वनं पालयामि क्रमेणाभिरामम् ।
जनः शीर्णमप्युद्धरेद्यो दलार्धं हराम्यम्बरं तस्य वित्तेन सार्धम् ॥१५॥

**नियुक्त इति** । तेन प्रसिद्धेन क्षितीन्द्रेण कामेन राज्ञा नियुक्तोऽहमभिरामं तस्य क्रीडास्पदं वनं पालयामि । तद्वनस्य शीर्णमपि दलार्धं यो जन उद्धरेत्तस्याम्बरं वस्त्रं वित्तेन सार्धं हरामि ॥

परिज्ञातमद्य प्रसूनालिमेतां लुनीषे त्वमेव प्रवालैः समेताम् ।
धृतासौ मया काञ्चनश्रेणिगौरि प्रविष्टासि गेहं कथं पुष्पचौरि ॥ १६ ॥

भुजङ्गप्रयातम् ।

**परिज्ञातेति** । मयाद्य परिज्ञातं त्वमेवैतां प्रसूनालिं प्रवालैः पल्लवैः सह लुनीषे छिनत्सि । असौ त्वं मयाद्य धृता । हे पुष्पचौरि, नित्यमेवं कुर्वाणा त्वं कथं केन प्रमादेन राज्ञो गेहं प्रविष्टासीत्यत्र बलवान् स्मरो मामेकाकिनमधीनं लक्ष्यं विधाय यथेच्छं विध्यति तनुं नोपमया त्वया चेद्युक्तः स्यां(स्या)त्तदा किं मे कर्तुं स शक्नुयात्, अत एव त्वामपेक्ष-

माणो निवसामि वनेऽतिभाग्यादेव त्वं मिलितासि काञ्चनश्रेणिगौरि त्वदेकानुरक्तोऽस्मीति पद्यद्वयेऽस्मिन् व्यज्यते ॥ **भुजङ्गेति** । तल्लक्षणं चोक्तं प्राक् ॥

अथानि(ति)सान्द्रमानन्दमनुभवितुकामा स्वबिलम्बस्य दुःखहेतुतां निवेदयन्त्याह—

स पतिः पिशुनः कुपितोऽपिशुनः सदने मुखरा जरती मुखरा ।
चतुरा गुरवो भविता कुरवो व्यसनं पुरुषेश्वर किं कुरुषे ॥ १७ ॥

**स इति** । स मे पतिर्धवः पिशुनः पत्न्याश्छिद्रसूचकः । न चैतावदेव, अपि तु कुपितः सन्नपिशुनः । विविधक्लेशकृदित्यर्थः । अर्थान्तरं तु न कार्यमश्लीलत्वात् । अन्यच्च भयकारणमस्तीत्याह—मुखरा मातामही जरती मुखरा बहुरक्षभाषिणी सदने वर्तते । गुरवः श्वश्रूप्रभृतयश्चतुरा निःश्वसितपरीक्षकाः सदने सन्ति । एवं मयि विलम्बितायां कुरवो निन्दा मम तव च भाविनी । हे पुरुषेश्वर इदं व्यसनं व्यर्थोद्यमं किं कथं कुरुषे । येनावयोः कुरव एव भवेत् । 'व्यसनं त्वशुभेऽशक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ विफलोद्यमे ॥' इति विश्वः । पुरुषेश्वरेण त्वया मत्सौमनस्यमेव कर्तुं सांप्रतं न तु मद्दौर्मनस्यमिति भावः ॥

जलजेक्षण हे कुलजामबलां न हि दुर्यशसा रचयाधवलाम् ।
तरसा विरमत्किरणं तरणिं दिवि पश्य ततस्त्यज मे सरणिम् ॥ १८ ॥

तोटकम् ।

**जलजेक्षणेति** । हे जलजेक्षण, कुलजां कुलीनामबलां मां दुर्यशसा अधवलां मलिनां न रचय । विरमत्किरणं तरणिं दिवि पश्य । ततो हेतोर्मे सरणिं पन्थानं त्यजेति । एवं च नावयोः कोऽपि कुरवः । विरमत्किरणमिति स्ववाञ्छितस्य त्वरयैवानुष्ठेयत्वं व्यज्यते । ननु शक्ते शक्तिमद्भावेन वह्न्यौष्ण्यवन्नित्यसिद्धयोरनयोर्नित्यदाम्पत्यं विहाय केयमौपपत्येन लीलेति चेत्पारमैश्वर्यादिति गृहाण । नह्येतयोर्नियामकः कोऽप्यस्ति । यद्रीत्या दाम्पत्ये स्थैर्यं न वा कर्मपारतन्त्र्यादौपपत्यमकर्मतन्त्रत्वाभिधानात् । न च जनमनोनिवेशाये(यै)तत् । न पारयेऽहमित्यादिवाक्येषु तस्मिन् स्वेच्छायाः प्रत्ययात् । तन्निवेशस्तु वस्तुसौन्दर्यहेतुक एव । न चोत्कण्ठायाः परिपोषायैतत्तस्या नित्यपुष्टत्वात् । तस्मात्पारमैश्वर्यादेवैतच्छक्तिशक्तिमतोस्तयोर्निगीर्णदाम्पत्यमौपपत्यमिति सुधीभिरवधेयम् ॥

श्रीराधायाः शुश्रूषणीयं हरिराह । जाने इति द्वाभ्याम्—

जाने तव कचपक्षं संभृतवरमल्लिकापक्ष्मम् ।
उरसि च कञ्चुकराजं ध्रुवमर्बुदमाधवीभाजम् ॥ १९ ॥

**जाने इति** । हे राधे चन्द्रमुखि, त्वं वाङ्माधुर्येण मां प्रतारयितुमिच्छसि । नाहं तादृशः । किंच स्मरराजाधीनश्च भवामि । त्वरयैव चेद्गृहे प्रयातुमिच्छसि तर्हि राजकीये द्रव्येऽव-

लोकिते यास्यसीति भावः । पद्यं विशदार्थम् । कचपक्षं केशपाशम् । माधवी वासन्तीपुष्पाणि ॥

व्यङ्ग्यं प्रकाशयन्नाह—

एहि तव क्षणमात्रं विचारयामि क्रमाद्राज्ञम् ।
तत्त्वे किल निर्णीते प्रयाहि भवनं तडित्पीते ॥ २० ॥

आर्या ।

**एहीति** । क्रमात् । कचपक्षवक्षोनीव्यादिस्पर्शपरीपाट्येत्यर्थः । तत्त्वे राजकीयद्रव्यस्वरूपे कचपक्षादौ निर्णीते दृष्टे सति भवनं प्रयाहि हे तडित्पीते ॥ **आर्येति** । उपगीतिनामायमार्याभेदः । तल्लक्षणं चोक्तम्—'आर्यापरार्धतुल्ये दलद्वये प्राहुरुपगीतिम्' । आर्यापरार्धस्तु सप्तविंशतिमात्राको लक्षितो द्रष्टव्यः ॥

एवं हरेर्वाङ्मधु निपीय मत्ता राधा तं तिर्यक्पश्यन्ती तदुक्तिनिवारकमुत्तरमाह—**न मुधे**तिद्वयेन ।

न मुधा माधव रचय विवादं विदधे तव मुहुरहमभिवादम् ।
गोकुलवसतौ स्मरमिव मूर्तं न किमु भवन्तं जाने धूर्तम् ॥ २१ ॥

**न मुधेति** । हे माधव, मधोर्वसन्तस्यायं माधवः । वसन्तरामणीयकाधीन इत्यर्थः । पक्षे मां कुलधर्मविषयं यथार्थज्ञानं धुनोति रूपादिमाधुर्येणापनयतीति सः । अभिवादं प्रणामम् । तथा च भवनगमनायादिशेति भावः । ननु स्मरराजकिंकरोऽहं तद्वस्तुनिर्णयमन्तरा कथं तदर्थमादिशामीति चेत्तत्राह—**गोकुलेति** । नत्व(तु) स्मरकिंकरः किं तु विज्ञानन्दरसराजमूर्तिस्त्वं स तु स्मरस्ते कथंचिदुपमानमित्यर्थः । धूर्तत्वात्तव तथा भणितिरिति भावः ॥

किंचैतद्वृन्दावनं गोपीनामेवास्माकं स्वयं यतो मत्सखी वृन्दात्र पालिकास्तीति सर्वजनप्रसिद्धम् । ततश्च कोऽत्र स्मरः कथं च ते कुसुमावचयप्रतिषेधोऽर्थवानिति भावेनाह—

वेत्ति न गोपी वृन्दारामं वृन्दावनमपि भुवि कः कामम् ।
अहमिह तदिदं कितव रसालं कथमवचेष्ये न कुसुमजालम् ॥ २२ ॥

पज्झटिका ।

**वेत्तीति** । रसमालातीति रसालम् । हे कितव कपटिन् ॥ **पज्झटिकेति** । लक्षणमस्योक्तं प्राक् ॥

राधयैवमुक्तो हरिस्तद्वक्षोजयोर्दृशौ निदधानो मृदुमुद्रया तामाह—

नेदमत्र कलशस्तनि शंस क्रोधनो नृपतिरेष नृशंसः ।
तेन हन्त विदिते वनभङ्गे यौवतं पतति भीतितरङ्गे ॥ २३ ॥

**नेदमिति** । हे कलशस्तनि, नेदं वाक्यं शंस वद । एष स्मरनृपतिर्नृशंसः क्रूरक्रोधनो यद्भवति इदं त्वद्वाक्यं श्रुत्वा क्रोधं विधास्यति तस्मान्न शंसेति । तस्मिन् क्रुद्धे किं

भावीति चेत्तत्राह—तेन यौवतकर्तृके वनभङ्गे विदिते यौवतं भीतितरङ्गे पततीति भीतयश्च बाणजालेन हृद्विभेदनं नियोज्येन मया चाधरखण्डनवक्षोजविमर्दनभुजनिबन्धनानि चेत्येवलक्षणास्ताश्च वर्तमानप्रयोगेणागता एवेति भावः ॥

ननु नृशंसात्स्मरनृपतेः कथं परित्राणं कथं च भवनप्रयाणं स्यादिति चेत्तत्राह—

तन्वि गेहगमनव्यवसायं चेत्करोषि शृणु रम्यमुपायम् ।
अत्र मत्तबहुषट्पदवीरे लीलया प्रविश कुञ्जकुटीरे ॥ २४ ॥

स्वागता ।

**तन्वीति** । तन्वीति प्रकटार्थं पद्यम् । अत्र कुञ्जकुटीरे लीलया हेतुना प्रविशेति मयि तुष्टे न ते स्मराद्भीतिलेशोऽपीति भावः । मत्तबहुषट्पदवीरे इति तटस्थजनप्रवेशशङ्काप्यत्र न कार्या, यतो वीरास्तेषां निवारकाः सन्तीति व्यज्यते ॥ **स्वागतेति** । तल्लक्षणं च—'स्वागता रनभगैर्गुरुणा च' इत्येतत् ॥

अन्तरतिप्रसन्नापि बहिः प्रौढिमालम्ब्याह—

गोकुले कुलवधूभिरर्चिता शीलचन्दनरसेन चर्चिता ।
राधिकाहमधिकारितामतः किं करोषि मयि धूर्त कामतः ॥ २५ ॥

**गोकुल इति** । शीलं सच्चरित्रम् । अतोद(ऽ)स्वामि(मी)दृश्यां मयि कामतः स्वेच्छातोऽधिकारितां किं कथं करोषि । मत्संमतिमन्तरा न ते किंचिच्चलेदिति भावः ॥

त्वं चेदनयं मयि चिकीर्षसि तर्हि तवोपालम्भमुपलम्भयिष्यामि, तत्र कदङ्ग्यादीनां साक्ष्यं स्थापयामीत्याह—

नाक्षिणी क्षिप कुरङ्गि सर्वतः साक्षिणी भव सखीभिरन्विता ।
माधवः किल दुनोति मामसौ साधवः शृणुत भोः शिखिस्त्रियः ॥ २६ ॥

रथोद्धता ।

**नाक्षिणीति** । प्रकटार्थं पद्यम् । इह निर्जनोऽयं देशः । तदत्र मया सह स्वच्छन्दं रमस्वेति व्यङ्ग्यार्थस्य व्यञ्जकता ॥ **रथोद्धतेति** । तल्लक्षणं च—'रात्परैर्नरलगै रथोद्धता' इत्येतत् ॥

व्यङ्ग्यार्थमधुमत्तः प्राह—

भ्रूलेखां किमरालां त्वं निर्मासि करालां
किं वा पश्यसि वामं संरम्भादभिरामम् ।
दिष्ट्या काननलोला हेलोत्फुल्लकपोला
वृत्ता त्वं हरिहस्ते त्रातान्यो भुवि कस्ते ॥ २७ ॥

**भ्रूलेखामिति** । हे प्रिये, व्यङ्ग्यार्थसुधया मां संतर्प्यापि पुनरराला वक्रां भ्रूलेखां त्वं किं कथं निर्मासि । कलामालातीति रलयोः सावर्ण्यस्वीकारात्करालां कलाधारिणीमित्यर्थः ।

अभिराममतिसुन्दरं मां संरम्भात्कोपाद्वामं वक्रं किं वा पश्यसि दिष्ट्या सुखमेतत् । 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः । त्वं हरिहस्ते वृत्ता हरेर्मनोहरस्य मे करे प्राप्ता । पक्षे हरेः सिंहस्य भुवि कस्तेऽन्यो जनो हरेः सकाशात्त्राता भवेत् । कीदृशी त्वम् । काननलोला । हेलयोत्फुल्लौ कपोलौ यस्याः सा । हेलालक्षणमुक्तम्—'अभिलक्ष्ये विकारे तु हावो हेला स्मृता बुधैः' इति काव्यकौस्तुभे । रोमाञ्चादिभिः कपोलवर्तिभिस्तव मयि प्रीतिरावेद्यते तेन भ्रूवक्रतादिलक्षितः कोपो मृषैवेति मायाविदितं तस्मादभीष्टं संसाधयेति ॥

आरुह्य द्रुमवाटीं मुञ्चेमां परिपाटीं
गेहान्तस्तव सर्वं जाने भामिनि गर्वम् ।
नेदिष्ठः किल भूपः सोऽयं भैरवरूप-
स्तस्याग्रे चल वामे चोलीमर्पय वामे ॥ २८ ॥

अलोला ।

**आरुह्येति** । हे भामिनि, द्रुमवाटीमटवीमारुह्य प्राप्य त्वमिमां भुवनजिगमिषाकोपप्रकाशनादिलक्षणां परिपाटीं क्रिक्रमं(?) मुञ्च । ललितादिसखीसाहाय्येन यस्तव गर्वः स खलु गृहमध्य एव फलवान् भवेत्, नत्वेकाकिन्या वनमध्येऽपीत्याह—गेहान्तरिति । तर्हि मे गृहे प्रयाणं कथं स्यादिति चेत्तत्रोपाययुगलमाह—सोऽयं भैरवरूपो भयंकरवपुर्भूपः स्मरचक्रवर्ती नेदिष्ठोऽतिनिकटस्थोऽस्ति तस्याग्रे त्वं चल । हे वामे, स ते दोषानुरूपं दण्डकर्ता । भैरवात्तस्माच्चेद्बिभेषि तर्हि मे मह्यं चोलीं कञ्चुलिकामर्पय देहीति । एतावदेव मे तुष्टिर्मयि तुष्टे स भूपस्त्वयि प्रसीदेदेवेति भावः ॥ **अलोलेति** । तल्लक्षणं च—'द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत्' इत्येतत् ॥

एवं बहुवाग्विलासमास्वाद्य तौ प्रेष्ठौ स्वाभीष्टं प्रापतुरित्याह—इति वचनेति द्वाभ्याम् ।

इति वचनकदम्बैस्तत्र नर्मावलम्बैः
स्खलदमलदुकूलां प्रोल्लसद्बाहुमूलाम् ।
अविशदपदबद्धं गद्गदोद्गारनद्धं
किमपि किमपि जल्पं कल्पयन्तीमनल्पम् ॥ २९ ॥

**इतिवचनेति** । स हरिः श्रीराधाया मनोहरणो नन्दसूनुर्मेऽभीष्टप्रापणं कृषीष्ट कुरुताम् । स कीदृशः । यो नर्मावलम्बैरित्येभिर्वचनकदम्बैः कृत्वा सदनितलतिकान्तर्लतामन्दिरमध्ये राधां निनाय । अतिकान्तो नितान्तमभिलषणीयः । राधां कीदृशीम् । वाग्विलासावेशात्स्खलदमलं दुकूलं यस्यास्ताम् । तत एव प्रोल्लसत्प्रकटीभवद्बाहुमूलं यस्यास्ताम् । किमपि किमपीत्यनिर्वचनीयं जल्पं कलयन्ती कुर्वती । जल्पं कीदृशम् । अविशदेनास्पष्टेन पदेन बद्धं ग्रथितम् । गद्गदोद्गारेण नद्धम् ॥

स्मितमुदितकपोलां निर्मितापाङ्गदोलां
वरयुवतिषु राधां प्रेमपूरादगाधाम् ।
सदनितलतिकान्तर्यो निनायातिकान्तः
स हरिरलमभीष्टप्रापणं मे कृषीष्ट ॥ ३० ॥

मालिनी ।

**स्मितेति** । स्मितेन मुदितौ कपोलौ यस्यास्ताम् । निर्मितोऽपाङ्गयोर्दोलश्चापलं यया ताम् । वरयुवतिषु मध्ये प्रेमपूरादगाधामिति । **मालिनीति** । तल्लक्षणं च प्रागुक्तम् ॥

इति स्वयमुत्प्रेक्षितलीला व्याख्याता ॥

---

नमः श्रीव्रजनागराय ।

विप्रलब्धायाः श्रीराधाया मन्दिरे प्रातरागतं धृतान्यस्त्रीभोगचिह्नं कृष्णं प्रति ललिताह— अवज्ञायेति युग्मकम् ।

अवज्ञाय भर्तुर्महाघोरदण्डं गुरोर्भाषितं च व्यतिक्रम्य चण्डम् ।
निषेधोद्धुरां किंकरीमाक्षिपन्ती हरे कृष्ण नाथेति बाला जपन्ती ॥ १ ॥
रसन्मेघजाले तडिद्भिः कराले गलद्वारिधारे दुरन्तान्धकारे ।
मिलद्भूरिदोषे सखी मे प्रदोषे प्रयाणाय लज्जामनादृत्य सज्जा ॥ २ ॥

**अवज्ञायेति** । हे कृष्ण, मे सखी प्रदोषे रजनीमुखे प्रयाणाय सज्जाभूत् । धृतनेपथ्यरक्षणोपाया सतीति बोध्यम् । किं कृत्वा । घोरं भयंकरं भर्तुर्दण्डमवज्ञाय गुरोः श्वश्वाश्चण्डं भाषितं च व्यतिक्रम्योल्लङ्घ्य । एतस्मिन्महत्यन्धकारे न गन्तव्यमिति निषेधोद्धुरां किंकरीं चाक्षिपन्ती मूढा त्वं किं वेत्सीति निरस्यन्ती सती । प्रदोषे कीदृशीत्याह—रसदुग्रशब्दं कुर्वन्मेघजालं यत्र तस्मिन् । कराले विकटे । एवं मिलन्तो भूरिदोषा यत्र तस्मिन् ॥

अदूरेति युग्मकम्—

अदूरोल्लसद्भल्लुकारब्धयुद्धां वलद्दन्दशूकावलीभोगरुद्धाम् ।
समन्ताद्धनद्धायसारातिभीमां रसोत्फुल्लमुल्लङ्घ्य कान्तारसीमाम् ॥ ३ ॥
प्रविश्यानवद्यं लतागेहमध्यं धृतौत्सुक्यचक्रा निसर्गादवक्रा ।
नखाग्रप्रलूनैः सुगन्धिप्रसूनैः पयःफेनकल्पं व्यधत्तेह तल्पम् ॥ ४ ॥

**अदूरेति** । मे सखी रसोत्फुल्लमनुरागोद्भासं यथा स्यात्तथा कान्तारसीमां दुर्गमवनान्तमुल्लङ्घ्य अनवद्यं स्तुत्यं लतागेहमध्यं प्रविश्य सुगन्धिभिः प्रसूनैस्तल्पमिह व्यधत्तेत्यन्वयः । कान्तारसीमां कीदृशीम् । अदूरे निकटे उल्लसद्भिर्भल्लुकैर्ऋक्षैरारब्धं युद्धं यत्र

ताम्। वलन्तीनां दन्दशूकावलीनां सर्पश्रेणीनां भोगैः कायैः फणैश्च रुद्धामावृताम्। ध्वनद्भिर्वायसारातिभिरुलूकैर्भीमां भयंकरीम्। कुत एवं चकारेत्याह—धृतौत्सुक्यचक्रेति। अनुरागव्याप्तेत्यर्थः। निसर्गात्स्वभावादवक्रेति त्वद्वञ्चकतानभिज्ञेत्यर्थः। स्फुटमन्यत्॥

प्रणीतेक्षणेयं मुहुस्ते पदव्यां दधाना मुकुन्द स्पृहां नव्यनव्याम्।
अलब्धं ततस्त्वाममेत्यातिखिन्ना बभूव प्रसूनेषुबाणैर्विभिन्ना॥ ५॥

**प्रणीतेति**। हे मुकुन्द, इयं मे सखी ते पदव्यां पथि प्रणीतेक्षणा अर्पितनेत्रा नव्यनव्यां स्पृहां मुहुर्दधाना जाता। ततस्त्वदागमनसमयातिक्रमादनन्तरं त्वामलब्धमवेत्य ज्ञात्वा प्रसूनेषोः स्मरस्य बाणैर्भिन्ना विद्धमर्मा सत्यतिखिन्ना बभूव॥

सुकण्ठी शठेयं भजन्ती प्रजल्पं मुहुर्भावयन्ती निमेषं च कल्पम्।
चकाराद्य कुञ्जे बतालब्धकामे सखी जागरं संभ्रमादेकिका मे॥ ६॥

**सुकण्ठीति**। हे शठ, इयं सुकण्ठी मे सखी हरिः कुतो हेतोर्नागत इति जल्पं मुहुर्भजन्ती निमेषं च कल्पं भावयन्ती एकिकैव कुञ्जे जागरं चकार। संभ्रमात्त्वत्स्नेहभ्रान्त्यां त्वं निःस्नेहोऽसीति भावः। कुञ्जे कीदृशे। अलब्धकामेऽप्राप्तमनोरथे। ईदृशानुरागिणीं वञ्चयन् शठस्त्वमित्यर्थः। तल्लक्षणमुक्तं काव्यकौस्तुभे—'शठ एकस्यां रक्तो बहिः परस्या धृतप्रणयः' इति। यद्यपि सखी किंकरीसहस्रनिषेविता राधा तथाप्युत्कण्ठातिवृद्धेरेकिकैव कदाचित्कान्तमागतेति बोध्यम्॥

एवं स्वसखीदुःखदशां प्रकाश्याथ कृष्णमुपालभमानाह—

अहो भाग्यमद्य प्रपन्नोऽसि सद्यस्त्वमस्मिन्नगारे यदारान्मुरारे।
सखीवृन्ददृष्टिर्धृतानन्दवृष्टिर्बभूवात्तरङ्गं विलोक्य त्वदङ्गम्॥ ७॥

**अहो इति**। अहो मुरारे, अद्यास्माकमिदं भाग्यमभ्युदितं यत्त्वमस्मिन्नगारेऽस्मन्मन्दिरे आराद्दूरात्सद्यः प्रपन्नोऽसि। आत्तरङ्गं त्वदङ्गं विलोक्य सखीवृन्ददृष्टिर्धृतानन्दवृष्टिर्बभूवेति किमतः परं भाग्यं स्यादित्यर्थः। विपरीतलक्षणयास्मत्सपत्नीगृहात्त्वं धृतरतिचिह्नो यत्प्रभातेऽस्मन्निलयमागतः खेदयितुं यच्च त्वदङ्गं सपत्नीनखाङ्ककुचकुङ्कुमविभूषितं वीक्ष्य स्ववञ्चनजन्यानि दुःखाश्रूणि सख्यो मुञ्चन्ति तदिदं महदभाग्यमेवेति बोध्यते तेन धिगिमां स्नेहपद्धतिमिति भावः॥

व्यञ्जितार्थानङ्गीकारिणं कृष्णं प्रति तद्गतचिह्नानि ग्राहयति—दुकूलस्येति त्रिभिः।

दुकूलस्य लक्ष्मीं समन्ताद्विशालामसौ वीक्ष्य पीतस्य ते मल्लिमाला।
लुठन्ती कुचोद्भासिकाश्मीरपङ्के निजं पीतमङ्गं चकाराद्य शङ्के॥ ८॥

**दुकूलस्येति**। असौ ते मल्लिमाला पीतस्य दुकूलस्य विशालां लक्ष्मीं शोभां समन्ताद्वीक्ष्य अस्मत्सपत्न्याः कुचोद्भासिनि काश्मीरपङ्के लुठन्ती निजमङ्गं पीतमद्य चकारेत्यहं शङ्के॥

स्वभावपीतेयं मल्लिमालेति चेत्तत्राह—

विकीर्णालकान्तः परिश्रान्तिकान्तस्तव व्यक्ततन्द्रः स्फुरत्यास्यचन्द्रः ।
कृतानङ्गयागं विभक्ताङ्गरागं नखाङ्कालिपात्रं तथेदं च गात्रम् ॥ ९ ॥

**विकीर्णेति** । तवास्यचन्द्रो विकीर्णालकान्तादिरूपः स्फुरति । तवेदं गात्रं च विभक्ताङ्गरागं विमर्दितचित्रं नखाङ्कालिपात्रं च सत्स्फुरति । अतः कृतानङ्गयागमेतदिति निश्चितम् ॥

ननु वयस्यैः सह संकथया ज्योत्स्न्यां बाहुयुद्धेन च ममेदमभूयत्त्वं रतचिह्नं शङ्कसे इति चेत्तत्राह—

स्फुरद्बन्धुजीवप्रसूनाप्तसङ्गं परिस्पर्धमानो विलासेन भृङ्गम् ।
मुदं कस्य बिम्बाधरस्तेन रक्तः करोत्युज्ज्वलां कज्जलेनाद्य सक्तः ॥ १० ॥

**स्फुरदिति** । रक्तोऽरुणस्ते बिम्बाधरः कज्जलेन सक्तः कस्याद्योज्ज्वलां मुदं न करोति । अपि तु सर्वस्यास्मत्सखीवर्गस्य तां मयि करोतीति । कीदृशोऽधरः । स्फुरति विद्योतमाने बन्धुजीवप्रसून आप्तः सङ्गो येन तं तादृशं भृङ्गं विलासेन शोभया परिस्पर्धमान इति नैतच्चिह्नं शक्यमपह्नोतुमिति भावः । एवं च कज्जलमलिनाधरत्वे कान्तासङ्गहेतुके सिद्धमल्लीस्रक्पीतिमादिकमपि हेतुकमेव सिद्धम् । तानस्यां निशि ज्योत्स्नी त्वया स्वप्न एव दृष्टा राजपुत्रस्य ते मुखं कः पिदध्यात् ॥

एवमुपालम्भहेतून् दोषान् संस्थाप्य शपथान् कुर्वन्तं निराकरोति प्रणयातिकोपादित्याह—

अलं देव दिव्येन जाने भवन्तं सदा राधिकायामतिप्रेमवन्तम् ।
अलिन्दात्कुरु त्वं ममाधिप्रभातं द्रुतं गोपकन्याभुजङ्ग प्रयातम् ॥ ११ ॥

**अलमिति** । हे देव क्रीडापर, हे गोपकन्याभुजङ्ग चन्द्रावलीकामुक, दिव्येन शपथेनालम् । 'दिव्यं तु शपथे वाले लवङ्गकुसुमेऽपि च' इति विश्वलोचनकारः । भवन्तमहं राधिकायां सदा प्रेमवन्तं जाने । विपरीतलक्षणया प्रेमशून्यमित्यर्थः । अथ मां किमाज्ञापयसीति चेत्तत्राह—त्वं द्रुतं ममालिन्दात् प्रयातं गमनं कुरु । तत्कीदृशम् । आधेश्चित्तपीडायाः प्रभातमवसानं यस्मात्तत् । सपत्नीरतचिह्नानि प्रदर्श्य नश्चेतो व्यथयसि त्वयि नेत्रपथादपसृते सुखं शयामह इति भावः ॥

इति प्रेमगर्भां समाकर्ण्य सर्वां तदा राधिकालीगिरं रत्नमाली ।
हरिस्तोषभारं स विन्दन्नपारं सदा मे महिष्टं विधत्तामभीष्टम् ॥ १२ ॥

इति भुजङ्गप्रयातं छन्दः ।

**इतीति** । स रत्नमाली हरिर्मे महिष्टमभीष्टं विधत्तां करोत्विति कवेर्वाक्यम् । किं कुर्वन् । इति पूर्वोक्तां प्रेमगर्भां राधिकाल्या ललितायाः सर्वां गिरमाकर्ण्य अपारं तोषभारं

विन्दन् सन् । श्रुतिस्तोत्रादपि मानवत्याः प्रेयस्या भर्त्सनेनातिसुखं हरिरधिगच्छतीत्युक्तमादिपुराणे स्वयमेव—'न तथा रोचते वेदः पुराणाद्यास्तथेतरे । यथा तासां तु गोपीनां भर्त्सनागर्भितं वचः ॥' इति ॥ **भुजङ्गप्रयातेति** । तल्लक्षणं चोक्तं प्राक् ॥

एवं जीवितनाथे कृष्णे ललितया निरस्ते राधां कलहान्तरितां जातोत्कण्ठां प्रति वनादागच्छन्तं तं दर्शयन्ती ललिताह—नयनेत्यादिभिः ।

नयनेरितमानसभूविशिखः शिरसि प्रचलप्रचलाकशिखः ।
मुरलीध्वनिभिः सुरभी स्वरयन्पशुपीविरहव्यसनं निरयन् ॥ १३ ॥
परितो जननीपरितोषकरः सखि लम्पटयन्नखिलं भुवनम् ।
तरुणीहृदयं करुणी विदधत्तरलं सरले करलम्बिगुणः ॥ १४ ॥
दिवसोपरमे परमोल्लसितः कलशस्तनि हे विलसद्धसितः ।
अतसीकुसुमं विहसन्महसा हरिणीकुलमाकुलयन्सहसा ॥ १५ ॥
प्रणयिप्रवणः सुभगश्रवणप्रचलन्मकरः ससखिप्रकरः ।
मदयन्नमरीर्भ्रमयन्भ्रमरीर्मीलितः कतिभिः शिखिनां ततिभिः ॥ १६ ॥
अयमुज्ज्वलयन्व्रजभूसरणीं रमयन्क्रमणैर्मृदुभिर्धरणीम् ।
अजिरे मिलितः कलितप्रमदे हरिरुद्विजसे तदपि प्रमदे ॥ १७ ॥

**नयनेति** । हे सखि, अयं हरिरजिरे मिलितस्तदपि त्वमुद्विजसे इति पञ्चमश्लोकस्थेनान्वयः । स कीदृशः । नयनेनेरितो मानसभुवः कामस्य विशिखो येन सः । प्रचलाकशिखा चन्द्रकाग्रम् । 'शिखा शाखा बर्हिचूडा लाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च ॥' इति मेदिनी । पशुपीनां गोपीनां व्यसनं दुःखं तिरयन् दूरीकुर्वन् ॥ **परित इति** । हे सखि, लम्पटयन् स्वस्मिन्नासक्तं कुर्वन् । तरुणीहृदयं तरलं चपलं विदधत् । करुणी दयावान् । करलम्बी गुणः पशुपादच्छन्दनरज्जुर्यस्य सः ॥ **दिवसेति** । दिवसस्योपरमेऽवसाने सति परया मया शोभया भावित्वद्रामणीयकदर्शनजहर्षोत्थयोल्लसितः । महसा अङ्गप्रभया अतसीकुसुमं विहसन् तिरस्कुर्वन् । 'महश्चोत्सवतेजसोः' इत्यमरः । हरिणीकुलं मृगीवृन्दं सहसा वेणुनादबलेनाकुलयन् । 'सहो बले ज्योतिषि च' इति हैमः ॥ **प्रणयीति** । प्रणयिषु स्निग्धजनेषु प्रवणो नम्रः । तेषामधीन इत्यर्थः । सुभगयोः सुन्दरयोः श्रवणयोः प्रचलन्तौ मकरौ यस्य सः । स्मरं निर्जित्य मकरं तस्य ध्वजमानीय यः कुण्डलयोर्नियोजयांबभूव स प्रेयानवश्यमादरणीय इति भावः । सखिप्रकरेण मित्रवृन्देन सहितः । अमरीर्देवतरुणीर्विलासकलया मदयन्निति का कथा मानवीनामिति भावः । अङ्गसौरभ्यधारया भ्रमरीर्भृङ्गीर्भ्रमयन्निति तस्यां नायिकां निमज्जय ततो वञ्चिता मा भूरिति भावः । कतिभिः शिखिनां ततिभिर्मिलित इति मेघ इव रसवर्षी प्रेयान् विरहतापमपनेष्यति सद्यस्तवेति भावः ॥ ननु स क्वाधुनास्तीति चेत्तत्राह—**अय-**

**मिति** । ध्वजवज्रादिपादचिह्नैर्व्रजभुवः सरणिं पन्थानमुज्ज्वलयन् । क्रमणैः पादविक्षेपैः । कलितो लब्धः प्रमदो येन तस्मिन् । अजिरे त्वत्प्राङ्गणे मिलितः । हे प्रमदे तरुणि ॥

वद मा परुषं हृदये न रुषं रचय त्वमतश्चल विभ्रमतः ।
उदिते मिहिकाकिरणे नहि का रभसादयि तं भजते दयितम् ॥ १८ ॥

**वदेति** । ईदृशगुणवान् हरिरजिरे मिलितः । अतो हेतोस्त्वं विभ्रमतो विलासाय चल । तमहं तावल्लोकयिष्यामीति परुषं रूक्षं मा वद । हृदये रुषं क्रोधं न रचय । मया तु तं प्रभाते मृषैवा(वो)पालम्भो दत्तस्त्वं दधानं कर्तुमिति भावः । मिहिकाकिरणे शीतरश्मौ चन्द्र उदिते सति का रसिकयुवतिस्तं दयितं रभसान्न भजते । अयि हे सखि, अपि तु सर्वा भजत इत्यर्थः ॥

कलय त्वरया विलसत्सिचयः प्रसरत्यभितो युवतीनिचयः ।
निदधाति हरिर्नयनं सरणौ तव विक्षिप सप्रणयं चरणौ ॥ १९ ॥

**कलयेति** । हे सखि, युवतीनिचयस्त्वरया हरिं वीक्षितुमभितः प्रसरति । कीदृशः । विलसत्सिचयः कान्तिमद्वासा । हरिस्तव सरणौ वर्त्मनि नयनं निदधाति त्वं कलय पश्य । ततः सप्रणयं यथा स्यात्तथा चरणौ विक्षिप । हरिं द्रष्टुं चलेत्यर्थः ॥

इति तामुपदिश्य तदा स्वसखीं ललिता किल मानितया विमुखीम् ।
अनयत्प्रसभादिव यं जवतः कुरुतात्स हरिर्भविकं भवतः ॥ २० ॥

तोटकम् ।

**इतीति** । स हरिर्भवतस्तव भविकं मङ्गलं कुरुतात् । स कीदृशः । ललिता इति पूर्वोक्तवचनैस्तां स्वसखीं राधामुपदिश्य प्रसभाद्धटादिव जवतो वेगाद्यमनयत् । येन सह तां समयोजयदित्यर्थः । स्वसखीं कीदृशीमित्याह—मानितया विमुखीमिति ॥ **तोटकमिति** । तल्लक्षणं च—'इह तोटकमब्धिसकारयुतम्' इत्येतत् ॥

इति ललितोक्तं तोटकाष्टकं व्याख्यातम् ॥

---

अथ चित्रकवित्वानि ।

तत्र द्व्यक्षराणि—

रसासारसुसारोरुरसुरारिः ससार सः ।
संसारासिरसौ रासे सुरिरंसुः ससारसः ॥ १ ॥

दुष्कराणि कवित्वानि यः करोति महाबलः ।
**श्रीरूपः** कविभूपो मे स देयाद्बुद्धिसंपदम् ॥

**अथेति** । कथमेकेनैव वर्णेन वर्णद्वयेनैव पद्यं निबध्नातीत्याश्चर्यं चित्रम्, तत्कराणि कवित्वानि चित्रकवित्वानि, चक्रबन्धादयो वा चित्राणि, तद्वन्ति च कवित्वानि तथेति ।

यदुक्तं भरतेन—'तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।' संनिवेशविशेषेण स्थिता वर्णा यत्र खड्गचक्राद्याकारान्प्रकटयन्ति तच्चित्रमिति तदर्थः । 'चित्रं स्यादद्भुतालेख्यतिलकेषु विहायसि' इति विश्वः ॥ **रसेति** । स प्रसिद्धोऽसावसुरारिर्नन्दसूनुः रासे ससार जगाम । रसस्यासारो धारासंपातो यस्मात्स रसासारः । सुसारावूरू यस्य स सुसारोरुः । ततः कर्मधारयः । ससारसो लीलाकमलवान् । संसारासिर्भक्ताविद्याच्छेत्ता । सुरिरंसुः शोभनरमणेच्छुः । ननु विसर्गानुस्वारयोः सत्त्वात्कथमेतद्द्व्यक्षरमिति चेत्सत्यम्, चित्रकाव्ये तत्सत्त्वेऽपि व्यवहारात् ॥

चर्चोरुरोचिरुच्चोरा रुचिरोऽरं चराचरे ।
चौराचारोऽचिराच्चीरं रुचा चारुरचूचुरत् ॥ २ ॥

**चर्चेति** । चौरस्येवाचारो यस्य स चौराचारो नन्दसूनुः । नतु चौरः स्वभक्तान् प्रमोदयितुं तादृक्क्रीडापर इत्यर्थः । अचिरात्त्वरया गोपकन्यानां चीरं वस्त्रमचूचुरदपहृतवान् । कीदृशः । चन्दनादिचर्चया उरूत्कृष्टं रोचिर्यस्य स चर्चोरुरोचिः । उच्चमुरो वक्षो यस्य स उच्चोराः । चराचरे जगत्यरमतिशयेन रुचिरो मनोज्ञः । रुचा कान्त्या चारुश्चारुः ॥

धरे धराधरधरं धाराधर[धुरा]रुधम् ।
धीरधीराऽराधाधिरोधं राधा धुरंधरम् ॥ ३ ॥

**धर इति** । राधा वार्षभानवी धरे गोवर्धनगिरौ धराधरधरं गिरिधारिणं नन्दसूनुमाराध । स्वतारुण्यसंभारार्पणेनामर्चयेत्यर्थः । कीदृशी राधा । धीरधीः स्थिरमतिः । धरे कीदृशे । धाराधराणामिन्द्रप्रमुक्तानां मेघानां धुरं भारमारुणद्धीति तस्मिन् । धराधरधरं कीदृशम् । अधिरोधं मानसव्यथानिवारकम् ॥

एकाक्षरम् ।

ननु किमेवं गोपालकं कृष्णं बहु श्लाघसे इति वदन्तं कंचित्प्रति कश्चिदाह—

निनुन्नानोननं नूनं नानूनोन्नाननोऽनुनीः ।
नानेनानां निनुन्नेनं नानौन्नानाननो ननु ॥ ४ ॥

**नीति** । ननु भो वादिन्, नानाननश्चतुरास्यो ब्रह्मा इमं प्रभुं गोपालं न अनौन्नास्तौहि(दि)ति नः(न), अपि त्वस्तौत् । नूनं निश्चितम् । स कीदृशः । नानेनानां नानाप्रभूणामिन्द्रादीनां निनुत् । 'नुद प्रेरणे' क्विबन्तः । सर्वदेवाधिपतिरपीत्यर्थः । स पुनः कीदृशः सन्ननौदित्याह—न अनूनं कृत्स्नं यथा स्यात्तथा उन्नानि अश्रुक्लिन्नान्या[न]नानि मुखानि यस्य सः । 'उन्दी क्लेदने' धातुः । भीत्याश्रुशोषादिति भावः । अनुनयतीत्यनुनीः । इनं गोपालं प्रभुं कीदृशम् । निनुन्नं दूरे क्षिप्तमनसः शकटस्य तदाविष्टस्यासुरस्याननं जीवनं येन तम् ॥

चक्रबन्धः।

गन्धाकृष्टगुरून्मदालिनि वने हारप्रभातिप्लुतं
संपुष्णन्तमुपस्कृताध्वनि यमीवीचिश्रियो रञ्जकम्।
सद्यस्तुङ्गितविभ्रमं सुनिभृते शीतानिलैः सौख्यदे
देवं नागभुजं सदा रसमयं तं नौमि कंचिन्मुदे॥ ५॥

**गन्धेति**। तं कंचिद्देवमहं मुदे स्वानन्दाय नौमि। क्वेत्याह—वने इति। वने कीदृशे। गन्धेनाकृष्टा गुरून्मदा अलिनो येन तस्मिन्। उपस्कृता मृष्टा अध्विनो यत्र तस्मिन्। सुनिभृत इतरजनवर्जिते। शीतानिलैः सौख्यदे तापहारिणि। देवं कीदृशम्। हाराणां प्रभाभिरतिप्लुतं व्याप्तं भक्तान् संपुष्णन्तम्। यमीवीचिश्रियो यमुनातरङ्गशोभायाः स्वनखराधरपीताम्बरहारकेयूरकिरीदादी(टादि)कान्तिकदम्बै रञ्जकम्। सद्यस्तुङ्गिता वर्धिता विभ्रमा येन तम्। नागौ सर्पाविव वृत्तौ भुजौ यस्य तम्॥

सर्पबन्धः।

रासरसिकं हरिं वर्णयति—

रासे सारङ्गसङ्घाचितनवनलिनप्रायवक्षःस्थदामा
बर्हालंकारहारस्फुरदमलमहारागचित्रे जयाय।
गोपालो दासवीथीललितहितरवस्फारहासः स्थिरात्मा
नव्योऽजस्रं क्षणोपाश्रितविततबलो वीक्ष्य रङ्गं बभाषे॥ ६॥

**रास इति**। गोपालो नन्दसूनुर्भगवान् रासे रङ्गं नृत्यभूमिं वीक्ष्य जयाय स्वोत्कर्षाय बभाषे दीप्तिं प्राप। कीदृशः। सारङ्गसङ्घैर्भृङ्गवृन्दैराचितं व्याप्तं नवनलिनप्रायं नूतनाम्बुजप्रचुरं वक्षःस्थं दाम माल्यं यस्य सः। दासवीथीनां ब्रह्मरुद्राद्यधिकारिभक्तश्रेणीनां स्वस्थितानां ललिते रमणीये हितेऽनुकूले जय जय भगवन्नित्यादिरवे शब्दे स्फारो विस्तीर्णो हासो यस्य सः। स्थिरात्मा। निजोत्कर्षश्रुत्याप्यविकृतचित्त इत्यर्थः। क्षणे रास(सो)त्सवे उपाश्रितं विततं तदुचितं बलं येन सः। अजस्रं नव्यो नूतनः। रासे कीदृशे। बर्हाणामलंकाराणां हाराणां च स्फुरन् योऽमलो महारागो नीलपीतरक्तादिविविधरङ्गस्तेन चित्रे कर्बुरे॥

पद्मबन्धः।

कविः साक्षात्कृतिं हरेः प्रार्थयति—

कलवाक्य सदालोक कलोदार मिलावक।
कवलाद्याद्भुतानूक कनूताभीरबालक॥ ७॥

**कलेति**। हे आभीरबालक श्रीनन्दसूनो, त्वं मिल प्रत्यक्षो भव। हे कलवाक्य मधुरभाषिन्। हे सदालोक सत्सु साधुष्वालोको यस्य। कलाभिर्वैदग्धीभिरुदार हे। हे अवक

रक्षक । कवलाद्यैर्दुग्धोदनग्रासवेत्रवेणुविषाणैरद्भुताश्चर्यरूप हे । हे अनूक अनुगत उः शिवो यम् । 'शेषाद्विभाषा' इति सूत्रात्कप् । हे कनूत । केन ब्रह्मणा स्तुतेत्यर्थः । एवमुक्तं ब्रह्मणा—'नौमीड्य तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय । वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥' इति ॥

प्रातिलोम्यानुलोम्यसमम् ।

तायिसारधराधारातिभायातमदारिहा ।
हारिदामतया भाति राधाराधरसायिता ॥ ८ ॥

**तायीति** । सा कृष्णमूर्तिर्हारिदामतया भातीति विशेष्यमूहि(?)त्वात्संबन्धः । सा बल्लवी रासदेवतेति परतो विशेष्यमिहाकर्षणीयमित्येके । सा कीदृशी । तायी विस्तीर्णः सारः स्थिरांशो यस्य तस्य धरस्य गोवर्धनस्य गिरेराधारः सम्यग्धरणं तेनातिभा प्रशस्ता दीप्तिर्यस्याः सा । अयातमदानगतगर्वानरीन् हन्तीत्ययातमदारिहा । राधाकर्तृको य आराधः स्वयौवनार्पणमर्चनं तद्रूपेण रसेनायिता प्राप्ता । 'अय गतौ' तस्मान्निष्ठा ॥ अस्य पूर्वतः परतश्च तुल्यः पाठः । गतप्रत्यागतमेतदित्येके ॥

गोमूत्रिकाबन्धः ।

सा मल्लरङ्गे रमया फुल्लसारा मुदेधिता ।
श्रमनीरधरा तुष्टा बल्लवीरासदेवता ॥ ९ ॥

**सेति** । सा बल्लवीरासदेवता मल्लरङ्गे चाणूरेण सह युद्धभूमौ तुष्टा । बभूवेति शेषः । सा कीदृशी । रमया रेखारूपया लक्ष्म्या विशिष्टा । फुल्लसारो बलं यस्याः सा । अतिबलिनीत्यर्थः । मुदा हर्षेणैधिता वृद्धा । स्फुटमन्यत् ॥

मुरजबन्धः ।

शुभासारससारश्रीः प्रभासान्द्रमसारभा ।
भारसा महसावित्त तरसा रससारिताम् ॥ १० ॥

**शुभेति** । इह विशेष्यं पूर्वतोऽनुकर्षणीयम् । सा बल्लवीरासदेवता रससारितां तरसा वेगेन अवित्त प्राप्तवती । 'विदॢ लाभे' इत्यस्य लुङि तङि रूपम् । रसं शृङ्गारलक्षणं सर्तुमनुवर्तितुं शीलं यस्य तस्य भावस्तत्ता तामित्यर्थः । 'सामान्ये नपुंसकम्' तस्मात्तल् । सा कीदृशी । शुभस्य मङ्गलस्यासारो धारासंपातो यतः सा शुभासारा सारेण न्यायेन सहिता ससारा च श्रीः संपद्यतः सा । 'सारं न्याये बले वित्ते' इति विश्वलोचनकारः । प्रभया सान्द्रस्य निबिडस्य मसारस्येन्द्रनीलमणेरिव भा छविर्यस्याः सा । महसा स्वतेजसैव भारसा भूभारं स्यतीति । 'षोऽन्तकर्मणि' तस्मात्क्विप् ॥

सर्वतोभद्रः ।

रासावहा हावसारा सा ललास सलालसा ।
बलारमा मारलावहासमाददमासहा ॥ ११ ॥

रासेति। सा बल्लवीरासदेवता कलास। कीदृशी। रासभावहतीति तथा। हावो नायिको वेष्टो भावभेदः स एव सारो बलं यस्यां सा। तद्वदित्यर्थः। सलालसा रासे सतृष्णा। बलेनारमते बलारमा। मारं स्मरं लुनाति परिभवतीति मारलावः। कर्मण्यण्। स चासौ हासश्चेति कर्मधारयः। मादो यौवनमत्तता मारलावहासमादाभ्यां दमं नियमनं न कस्यापि सहत इति तथा। स्वतन्त्रेत्यर्थः॥

बृहत्पद्मबन्धः।

रासमण्डलस्थं कृष्णं वर्णयति—

तारप्रस्फारतालं सरभससरलं भासुरास्यं सुभालं
पापघ्नं गोपबालं करणहरकलं नीरभृद्वारनीलम्।
चारुग्रीवं रुचालं रतमदतरलं चेतसा पीतचेलं
शीतप्रस्फीतशीलं वरय वरबलं वासुदेवं सबालम्॥ १२॥

तारेति। हे मित्र, वासुदेवं गोपबालं चेतसा वरय। 'वसनादेव वादेषु वासुदेवेति शब्दितः' इति शिवोक्तेर्वादवेद्यं पूर्णब्रह्मभूतमित्यर्थः। कीदृशम्। तारेण विशुद्धया विशिष्टः प्रस्फारोऽतिविस्तीर्णस्तालो गानाङ्गरूपो भूपकादिर्यस्य तम्। 'तारो मुक्तादिसंशुद्धौ' इति विश्वः। सरभसः सहर्षश्चासौ प्रेम्णि सरलश्चेति तम्। भासुरास्यं चन्द्रोज्ज्वलमुखम्। सुभालं मनोज्ञाललाटम्। पापघ्नं भक्ताविद्याविनाशकम्। करणहरः श्रोत्रचित्तहारी कलो मधुरगीतध्वनिर्यस्य तम्। नीरभृतां मेघानां वाराद्वृन्दादपि नीलं श्यामलम्। रुच्या कान्त्या पार्श्वस्थानलेति भूषयतीति रुचालम्। शीतानि संसृतितापहराणि प्रस्फीतानि शीलानि सच्चरितानि यस्य तम्। बालाभिः सहितं सबालम्। स्फुटार्थमन्यत्॥ चक्रादिबन्धानां निर्माणं कविप्रसिद्धेर्बोध्यम्॥

इति चित्रकवित्वानि व्याख्यातानि॥

---

श्रीराधाकृष्णौ जयतः।

अथ गीतावली।

प्रथमं नन्दोत्सवादि भैरवरागेण—

पुत्रमुदारमसूत यशोदा।
समजनि बल्लवततिरतिमोदा॥ ध्रुव०॥
कोऽप्युपनयति विविधमुपहारम्।
नृत्यति कोऽपि जनो बहुवारम्॥
कोऽपि मधुरमुपगायति गीतम्।
विकिरति कोऽपि सदधि नवनीतम्॥

कोऽपि तनोति मनोरथपूर्तिम् ।
पश्यति कोऽपि सनातनमूर्तिम् ॥ १ ॥

विरतिविरक्तिश्रीहरिकथानुकीर्तनकृतात्साम्यात् ।
शुकमूचुर्यं सन्तस्तं स्तवमालार्थदेशिकं वन्दे ॥

**पुत्रमिति ।** उदारं सामुद्रिकोक्तैर्द्वात्रिंशल्लक्षणैः सर्वेभ्यः श्रेष्ठम्, स्वपर्यन्तसर्वार्थदातारं वा । ध्रुव० । उपहारमुपायनम् । विकिरति जनेषु विक्षिपति । कोऽपि सूतमागधादिर्बहुसंपत्प्राप्त्या मनोरथपूर्तिं तनोति । कोऽपि नारदादिस्तदागतो यशोदासुतस्य सनातनीं मूर्तिं पश्यति, न त्वन्यत्किंचिदिच्छति । पक्षे सनातनस्योपास्यां मूर्तिमिति मध्यमपदलोपी समासः । एषु यत्र कृष्णः स्वाग्रजस्तृतीयो ब्रह्मपुत्रश्च व्याख्यातं शक्यस्तत्र श्लेषः । यत्र तु प्रकृतवाचकेन सनातनशब्देनान्ययोर्द्वयोर्द्योतनं तत्र मुद्रालंकारो बोध्यः । गाथाख्यं चात्र छन्दः । तल्लक्षणं तु—'विषमाक्षरपादं वा पादैरसमं दशधर्मवत् । यच्छन्दोतोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥' इति वृत्तरत्नाकरे । विषमाक्षवाः(राः) पादा यत्र तत् । पादैस्त्रिपञ्चषडादिभिरसमं यत्तच्च गाथाच्छन्दः । तत्राद्यस्योदाहरणं सूत्रमेवेदम् । द्वितीयस्य तु दशेति भारतवाक्यम्—'दशधर्मं न जानन्ति धृतराष्ट्र निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः । त्वरमाणश्च भीरुश्चालसः कामी च ते दश ॥' षट्पादमिदं छन्दः । यच्छन्दोऽत्र वृत्तरत्नाकरे नोक्तं तच्च गाथेति । यथा—पुत्रमुदारमिति ॥

आसावरी ।

स्वप्रियस्य हरेर्जन्मोत्सवे दानभूमा भूयादित्यतिवदान्यमपि नन्दं देवर्षिः प्रोत्साहयति—

विप्रवृन्दमभूदलंकृतिगोधनैरपि पूर्णम् ।
गायनानपि मद्विधान्व्रजनाथ तोषय तूर्णम् ॥
सूनुरद्भुतसुन्दरोऽजनि नन्दराज तवायम् ।
देहि गोष्ठजनाय वाञ्छितमुत्सवोचितदायम् ॥ ध्रुव० ॥
तावकात्मजवीक्षणक्षणनन्दि मद्विधचित्तम् ।
यन्न कैरपि लब्धमर्थिभिरेतदिच्छति वित्तम् ॥
श्रीसनातनचित्तमानसकेलिनीलमराले ।
मादृशां रतिरत्र तिष्ठतु सर्वदा तव बाले ॥ १ ॥

**विप्रेति ।** अलंकृतिभिर्गोधनैश्च विप्रवृन्दं पूर्णमभूत् । हे व्रजनाथ, मद्विधान् मादृशान् गायनानपि तूर्णं तोषय । न केवलं गायनानां नस्तोषः कार्यः, किंतु गोष्ठजनायेत्येकवचनात्सर्वेभ्यो व्रजवासिभ्यो वाञ्छितमुत्सवोचितदायं देहि । यो यदिच्छेत्तस्मै तद्देयम्, पुरुभाग्यादयं समयः समागत इत्यर्थः । हे नन्दराज, तवाद्भुतः सुन्दरः सूनुरजनि

जातः । ध्रुव० । ननु त्वं किमिच्छसि तद्वदेति चेत्तत्राह—**तावकेति** । मद्विधस्य जनस्य त्वदात्मजगुणरूपगायनस्य चित्तं तावकात्मजस्य वीक्षणक्षणेन दर्शनोत्सवेन नन्दि समृद्धं सदेतद्वित्तमिच्छति यत्कैश्चिदप्यर्थिभिस्त्वत्तो न लब्धम् । तदेव प्रकाशयेति चेत्तत्राह—**श्रीति** । अत्र तव बाले मादृशां रतिः सर्वदा तिष्ठतु भवत्वित्येतत् । बाले कीदृशे । श्रीमतः सनातनस्य मुने रूपाग्रजस्य च चित्तमेव मानसं सरस्तस्मिन् केलये नीलमराले हंसनं (?) तत्र विहरमाणे इत्यर्थः ॥

वसन्तपञ्चमी ।

(वसन्तरागः ।)

अभिनवकुड्मलगुच्छसमुज्ज्वलकुञ्चितकुन्तलभार ।
प्रणयिजनेरितवन्दनसहकृतचूर्णितवरघनसार ॥
जय जय सुन्दर नन्दकुमार ।
सौरभसंकटवृन्दावनतटविहितवसन्तविहार ॥ ध्रुव० ॥
अधरविराजितमन्दतरस्मितलोचितनिजपरिवार ।
चटुलदृगञ्चलरचितरसोच्चलराधामदनविकार ॥
भुवनविमोहनमञ्जुलनर्तनगतिवल्गितमणिहार ।
निजवल्लभजनसुहृत सनातनचित्तविहरदवतार ॥ १ ॥

**अभीति** । हे नन्दकुमार, त्वं जय जयेत्यन्वयः । अभिनवानां कुड्मलानां यो गुच्छस्तेन समुज्ज्वलः कान्तिमान् कुञ्चितकुन्तलभारो यस्य हे । प्रणयिजनैरीरितो निःक्षिप्तो वन्दनैररुणचूर्णैः सहकृतश्चूर्णितो वरो घनसारः कर्पूरो यस्मिन् हे तादृश । सौरभेण संकटे व्याप्ते वृन्दावनतटे विहितः कृतो वसन्तविहारो येन । ध्रुव० । **अधरेति** । स्फुटार्थम् । चटुलेन दृगञ्चलेन कटाक्षेण रचितो रसोच्चलायामनुरागचपलायां राधायां मदनविकारो येन । भुवनविमोहनी या मञ्जुलनर्तनगतिस्तया वल्गिताश्चञ्चला मणिहारा यस्य । हे निजवल्लभजनसुहृत । हे सनातनस्य चित्ते विहरन्तोऽवतारा यस्य हे तादृश । ते च दाशरथ्यादयः क्रीडासु वन्दनकुसुमकन्दुकादिहस्ततया पुनः पुनरागतयो वेति भावः ॥

दोलोत्सवः ।

(वसन्तरागः ।)

केलिरसमाधुरीततिभिरतिमेदुरीकृतनिखिलबन्धुपशुपालम् ।
हृदि विधृतचन्दनं स्फुरदरुणवन्दनं देहरुचिनिर्जिततमालम् ॥
सुन्दरि माधवमव कलयालम् ।
मित्रकरलोलया रत्नमयदोलया चलितवपुरतिचपलमालम् ॥ ध्रुव० ॥

व्रजहरिणलोचनारचितगोरोचनातिलकरुचिरुचिरतरभालम् ।
स्मितजनितलोभया वदनशशिशोभया विभ्रमितनवयुवतिजालम् ॥
नर्मनयपण्डितं पुष्पकुलमण्डितं रमणमिह वक्षसि विशालम् ।
प्रणतभयशातनं प्रियमधिसनातनं गोष्ठजनमानसमरालम् ॥ १ ॥

**केलीति** । हे सुन्दरि, माधवं रमणमव कलयेत्यन्वयः । कीदृशम् । केलिरसमाधुरीभिर्मेदुरीकृताः स्निग्धतां नीता निखिला बन्धवः पशुपाला येन तम् । हृदीति प्रकटार्थम् । मित्राणां करैर्लोलया चालितया रत्नजडितया दोलया चलिते वपुष्यतिचपला माला यस्य तम् । ध्रुव० । व्रजहरिणलोचनाभिर्बल्लवीभी रचितस्य गोरोचनातिलकस्य रुच्या कान्त्या रुचिरतरमतिमनोज्ञं भालं ललाटं यस्य तम् । अधिगन्ता तत्त्ववित् सनातनो यस्य तम् । स्फुटार्थमन्यत् ॥

(आसावरी ।)

निपतति परितो वन्दनपाली ।
तं दोलयति मुदा सुहृदाली ॥
विलसति दोलोपरि वनमाली ।
तरलसरोरुहशिरसि यथाली ॥ ध्रुव० ॥
जनयति गोपीजनकरताली ।
कापि पुरो नृत्यति पशुपाली ॥
अयमारण्यकमण्डनशाली ।
जयति सनातनरसपरिपाली ॥ १ ॥

**निपततीति** । सुहृन्मित्रभूता आली सखी ललिताद्येकतमा तं वनमालिनं दोलयति । सुहृदामालिः श्रेणिरित्येके । तं परितो वन्दनपाली निपतति । दोलायाः पद्माकृतेरुपरि वनमाली विलसति चकास्ति । तरलस्य चञ्चलस्य सरोरुहस्य पद्मस्य शिरसि यथाली भृङ्ग इति । नान्तो श(?)लिशब्दः । ध्रुव० । गोपीजनानां तुङ्गविद्यादीनां सखीनां करताली जनयति । कौतुकमिति शेषः । कापि पशुपाली विशाखाद्य[न्य]तमा पुरो दोलाग्रे विविधान् स्मरोद्दीपकानभिनयान् प्रकाशयन्ती नृत्यति । तैरभिनयैरुद्दीपितस्मरविकारोऽयं वनमाली तासां मनांसि जयति वशीकरोति । कीदृशः । आरण्यकानि वनोद्भवानि पौष्पानि मण्डनानि मुकुटकेयूरादीनि शलति प्राप्नोति । पुष्पभूषणविभूषिततनुरित्यर्थः । सनातनं नित्यं रसं शृङ्गारं परिपालयति तासु व्यञ्जयतीति सः । पक्षे सनातनस्य रसमनुरागं स्वस्मिन् परिपालयतीति सः ॥

(धनाश्रीः ।)

कृष्णोद्देशेनैव सूर्याराधनाय व्रजन्ती श्रीराधा वर्त्मनि मिलितं कृष्णमाह—

न कुरु कदर्थनमत्र सरण्याम्।
मामवलोक्य सतीमशरण्याम्॥
चञ्चल मुञ्च पटाञ्चलभागम्।
करवाण्यधुना भास्करयागम्॥ ध्रुव०॥
न रचय गोकुलवीर विलम्बम्।
विदधे विधुमुख विनतिकदम्बम्॥
रहसि बिभेमि विलोलदृगन्तम्।
वीक्ष्य सनातनदेव भवन्तम्॥ १॥

**न कुर्विति।** हे विधुमुख, अत्रास्यां सरण्यां पथि सतीं मामशरण्यां सहायरहितामवलोक्य मम कदर्थनं न कुरु। सख्यः पश्चादायान्तीति भावः। कदर्थनामाह—**चञ्चलेति।** किं दूषणमिति चेत्तत्राह—**करवाणीति।** ध्रुव०। हे गोकुलवीर, मम विलम्बं मार्गरोधेन कालयापनं न रचय। तव विनतिकदम्बं प्रणामवृन्दमहं विदधे कुर्वे। ननु किमेवं खिद्यसे तत्राह—हे सनातनस्यापि देव पूज्य। रहसि विजने भवन्तं विलोलदृगन्तं वीक्ष्याहं बिभेमि। स्नानाह्निकं विधाय रविपूजायै यान्तीं मां स्पर्शेन मा दूषयेति भावः। स्वयंदूत्यं चात्र गम्यते। अशरण्यामिति, विलम्बं न रचयेति, रहसीति देवेति च पदानां तद्व्यञ्जकत्वात् हे सनातन हे देवेति च्छेदः॥

(सोरठी।)

किंचित्कृष्णसङ्गसुखमनुभूय गृहमागतां पुनर्विवृद्धतत्सुखोत्कण्ठां राधां सखी पृच्छति—

राधे निगद निजं गदमूलम्।
उदयति तनुमनु किमिति तापकुलमनुकृतविकटकुकूलम्॥ ध्रुव०॥
प्रचुरपुरंदरगोपविनिन्दककान्तिपटलमनुकूलम्।
क्षिपसि विदूरे मृदुलं मुहुरपि संभृतमुरसि दुकूलम्॥
अभिनन्दसि न हि चन्द्ररजोभरवासितमपि ताम्बूलम्।
इदमपि विकिरसि वरचम्पककृतमनुपमदाम सचूलम्॥
भजदनवस्थितिमखिलपदे सखि सपदि विडम्बिततूलम्।
कलितसनातनकौतुकमपि तव हृदयं स्फुरति सशूलम्॥ १॥

**राध इति।** निजमसाधारणं गदमूलं व्याधिनिदानम्। ननु कुतो मे गदं वेत्सीति चेत्तत्राह—**उदयतीति।** नो चेत्तनुमनुलक्ष्य तापकुलं तव किमित्युदयति। कीदृशं तत्। अनुकृतं विकटं करालं कुकूलं तुषाग्निर्येन तत्। 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः।

कुकूलं सङ्कुसंकीर्णे श्वभ्रे चापि तुषानले ॥' इति विश्वः । ध्रुव० । प्रचुरेति । पुरंदरगोपा अत्यरुणाः कीटविशेषाः । अनुकूलं रूपवर्धकम् । उरसि संभृतं धृतम् । चन्द्ररजोभरेण कर्पूरधूलिचयेन वासितं सुगन्धि । इदमपि वरचम्पककृतं दाम माल्यं विकिरसि विक्षिपसि । सचूलं डलयोः सावर्ण्यस्वीकाराच्चूडया सीमन्तमणिना सहितम् । तव हृदयं सशूलं कुन्तविद्धं स्फुरति । 'शूलं रुगस्त्रयोः' इति हैमः । कलितं सनातनेन कृष्णेन सह कौतुकं विनोदो येन । तादृगपि कीदृशम् । ततः अखिलपदे प्रासादे शय्यासनादौ च सर्वस्मिन्स्थानेऽनवस्थितिं भजत् । विडम्बितमनुकृतं तूलं येन तत् । तूलादपि लघु इत्यर्थः । यत्प्रागतिगुरुस्थितम् । पक्षे कलितं ज्ञानं सनातनस्य भजनकौतुकं येन तादृगपीति । तेन नित्यसाहित्यमनुसंहितमिति भावः ॥

(सौराष्ट्री ।)

'गदमूलं निगद' इति पृष्टा राधाह—

कुटिलं मामवलोक्य नवाम्बुजमुपरि चुचुम्ब स रङ्गी ।
तेन हठादहमभवं वेपथुमण्डलसंचलदङ्गी ॥
भामिनि पृच्छ न वारंवारम् ।
हन्त विमुह्यति वीक्ष्य मनो मम बल्लवराजकुमारम् ॥ ध्रुव० ॥
दाडिमलतिकामनु निस्तलफलनमितां स दधे हस्तम् ।
तदनुभवान्मम धर्मोज्ज्वलमपि धैर्यधनं गतमस्तम् ॥
अदशदशोकलतापल्लवमयमतनुसनातननर्मा ।
तदहमवेक्ष्य बभूव चिरं बत विस्मृतकायिककर्मा ॥ १ ॥

**कुटिलमित्यादि** । स रङ्गी इङ्गितकृत्कृष्णः कुटिलं वक्रं यथा स्यादेवं मामवलोक्य नवाम्बुजं करे गृहीत्वा उपरि तच्चुचुम्ब । तेनाहं वेपथुमण्डलसंचलदङ्गी हठादभवम् । मन्मुखचुम्बनाभिलाषिणं कृष्णं तेनेङ्गितेन विज्ञायाहं कम्पिततनुरस्मीति । हे भामिनि विशाखे, वारंवारं न पृच्छ, यतो हन्तेत्यादि । वक्तुं न शक्नोमीत्यर्थः । ध्रुव० । पुनरत्युत्कण्ठयाह—दाडिमलतिकामनुलक्ष्य स हस्तं दधेऽर्पितवान् । कीदृशीम् । निस्तलाभ्यां वर्तुलाभ्यां फलाभ्यां नमितामिति पीनाभ्यामित्यागतम् । तदनुभवात्तेनेङ्गितेन कृष्णस्य मत्कुचस्पर्शाभिलाषावगमान्मम धैर्यधनं धर्मोज्ज्वलं कुलधर्मस्थिरमप्यस्तं गतं विनष्टमभूत् । अयं कृष्णः अशोकलतापल्लवमदशत् । कीदृशः । अतनु बहु सनातनं नित्यं नर्म यस्य सः । तत्तस्य पल्लवदशनमवेक्ष्य तेन मदधरक्षतचिकीर्षुं कृष्णं विज्ञायाहं विस्मृतकायिककर्मा चिरं बभूव । वैचित्र्ये लिङुत्तमः । पक्षेऽतनुसंबन्धीनि सनातनवर्णितानि नर्माणीत्यस्य सः । सूक्ष्ममत्रालंकारः—'सूक्ष्मं त्वाकूतचेष्टा चेदाकूतज्ञे प्रकाश्यते' इति तल्लक्षणात् ॥

(धनाश्रीः।)

विज्ञातराधाहृद्गदमूला दूती कृष्णमाह—

अनधिगताकस्मिकगदकारणमर्पितमन्त्रौषधिनिकुरम्बम्।
अविरतरुदितविलोहितलोचनमनुशोचति तामखिलकुटुम्बम्॥
देव हरे भव कारुण्यशाली।
सा तव निशितकटाक्षशराहतहृदया जीवति कृशतनुराली॥ ध्रुव०॥
हृदि वलदविरलसंज्वरपटलीस्फुटदुज्ज्वलमौक्तिकसमुदाया।
शीतलभूतलनिश्चलतनुरियमवसीदति संप्रति निरुपाया॥
गोष्ठजनाभयसत्रमहाव्रतदीक्षित भवतो माधव बाला।
कथमर्हति तां हन्त सनातन विषमदशां गुणवृन्दविशाला॥ १॥

**अनधीत्यादि**। हे देव, हे हरे, अखिलकुटुम्बं कर्तृ तां राधामनुशोचति। कीदृशं तत्। अनधिगताकस्मिकस्य गदस्य व्याधेः कारणं येन तत्। अर्पितं मन्त्रौषधीनां निकुरम्बं येन तत्। अविरतरुदितेन विलोहितेऽत्यरुणे लोचने यस्य तत्। तादृशं सदित्यर्थः। त्वं कारुण्यशाली कृपालुर्भव। सा तव निशितेत्यादिलक्षणा मदाली कृशतनुः सती केवलं जीवति, न तु सौख्यलेशं विन्दति। विना त्वत्कारुण्यमित्यर्थः। ध्रुव०। ननु सा कथमधुना वर्तते तत्राह—**हृदीति**। संज्वरः संतापः। निरुपाया त्वां विना स्वगदनिवारणे साधनान्तरमपश्यन्ती अवसीदति व्यथते। ननु नाहं परस्त्रियाः संदर्शनं करोमीति चेत्तत्राह—हे गोष्ठजनाभयसत्रमहाव्रतदीक्षित, हे माधव मधुवंशोद्भव, इयं बाला भवतो हेतोस्तां विषमां दशां कथमर्हति। हे सनातन नित्यमूर्ते। पक्षे सनातनो यस्यास्ति नित्यं सेवकत्वेनेत्यर्श आद्यच्। सा कीदृशीत्याह—**गुणेति**। विशाला विस्तीर्णा। ख्यातेत्यर्थः। विशिष्टा शाला वसतिरिति वा। यो भवानन्यहेतुकं दुःखमपनयति स स्वहेतुं कथं तत्कथं नापनयेदिति भावः॥

(आसावरी।)

'दूति, किमिदं विपरीतं भाषसे। अहं किल तन्निखिलचित्तो ध्यानानीतया प्रियया जीवामि' इति विहितकृष्णभावा दूती राधामभिसारयन्ती पथि तामवधापयन्त्याह—

हन्त न किमु मन्थरयसि संततमभिजल्पम्।
दन्तरोचिरन्तरयति संतमसमनल्पम्॥
राधे पथि मुञ्च भूरि संभ्रममभिसारे।
चारय चरणाम्बुरुहे धीरं सुकुमारे॥ ध्रुव०॥
संतनु घनवर्णमतुलकुन्तलनिचयान्तम्।

ध्वान्तं तव जीवतु नखकान्तिभिरभिशान्तम् ॥
स सनातनमानसाद्य यान्ती गतशङ्कम् ।
अङ्गीकुरु मञ्जुकुञ्जवसतेरलमङ्कम् ॥ १ ॥

**हन्तेति** । हन्तेति खेदे । हे राधे, त्वं संततमभिजल्पं संभाषणं किमु न मन्थरयसि न निवर्तयसि । तत्र किं दूषणमिति चेत्तत्राह—यत्तव दन्तरोचिर्दशनकान्तिरभिजल्पप्रकटा सती अनल्पं निबिडं संतमसं ध्वान्तमन्तरयति दूरीकरोति । 'अवतमससमन्धतमसं संतमसं ध्वान्तमन्धकारं च' इति हलायुधः । अभिसारे पथि भूरि संभ्रममतित्वरां मुञ्च । सुकुमारे कोमले चरणाम्बुरुहे धीरं यथा स्यात्तथा चारय निःक्षिप । ध्रुव० । ननु दन्तकान्तिर्मया पिहिता नखकान्तिपिधाने कोऽभ्युपाय इति चेत्तत्राह—अतुलानामतिदीर्घाणां कुन्तलनिचयानामन्तं प्रान्तं नखोपरि संतनु विस्तारय । कीदृशम् । घनवर्णं मेघाभम् । तेन किं स्यादिति चेत्तत्राह—तव नखकान्तिभिरभिशान्तं विनष्टं ध्वान्तं जीवतु पुनः स्वं रूपं लभताम् । ततः किं भावि तत्राह—सनातने कृष्णे मानसं यस्याः सा कृष्णैकचित्ता त्वं निःशङ्कं यान्ती मञ्जुकुञ्जवसतेरङ्कं मध्यमङ्गीकुरु प्राप्नुहि । पक्षे सनातने तन्नाम्नि स्वभक्ते मानसं यस्याः सेति व्यज्यते ॥

(गौडी ।)

कृष्णेन रमितां स्वाधीनकृष्णां राधां कृष्णः प्राह—

सिचयमुदञ्चय हृदयादल्पम् । विलिखाम्यद्भुतमकराकल्पम् ॥
इह न हि संकुच पङ्कजनयने । वेशं तव करवै रतिशयने ॥ ध्रुव० ॥
राधे दोलय न किल कपोलम् । चित्रं रचयाम्यहमविलोलम् ॥
तव वपुरद्य सनातनशोभम् । जनयति हृदि मम कंचन लोभम् ॥ १ ॥

**सिचयेति** । हे राधे, हृदयात् सिचयमम्बरमल्पमुदञ्चय । उरः किंचिदुद्घाटयेत्यर्थः । किमर्थमिति चेत्तत्राह—**विलिखामीति** । मकरपत्ररूपमाकल्पं वेशं तव रचयामीत्यर्थः । हे पङ्कजनयने, इह रतिशयने त्वं न संकुच तव वेशं सर्वेष्वङ्गेष्वहं करवै । ध्रुव० । कपोलं किल न दोलय न कम्पय । तत्र चित्रं यद्रचयामि । अविलोलं यथा स्यात्तथा । अतिप्रीतस्त्वां मण्डयामीति भावेनाह—**तवेति** । सनातनी पक्षे सनातने शोभा यस्य तादृक् तव वपुर्मम हृदि कंचन लोभं जनयति । सह सुन्दरेण त्वद्वपुषा स्पर्शेन मामहं सफलं करोमीति भावः ॥

(आसावरी ।)

प्रसादयितुमागतां दूतीं मानिनी श्रीराधाह—

तव चञ्चलमतिरयमघहन्ता । अहमुत्तमधृतिदिग्धदिगन्ता ॥
दूति विदूरय कोमलकथनम् । पुनरभिधास्ये न हि मधुमथनम् ॥ ध्रुव० ॥

शठचरितोऽयं तव वनमाली । मृदुहृदयाहं निजकुलपाली ॥

तव हरिरेष निरङ्कुशनर्मा । अहमनुबद्धसनातनधर्मा ॥ १ ॥

**तवेति** । तवायमघहन्ता कृष्णश्चञ्चलमतिः । उत्तमया धृत्या दिग्धा विलिप्ता दिगन्ता यया सा । दिगन्तप्रसिद्धधैर्याहमिति भावः । हे दूति, कोमलकथनं विदूरय मुञ्च । अहं मधुमथनं नाभिधास्ये तेन साकं नालापं करिष्यामि । ध्रुव० । तवायं वनमाली शठचरितः शठस्येव चरितं यस्य सः । अहं निजकुलपाली मृदुहृदया तस्य परमसुन्दरस्यापातिकेन स्निग्धत्वेन द्रुतचित्ताहं मन्निमित्तदुःखमस्य मा भूदिति कुलधर्ममप्यनादृत्य तदानुकूल्यमरचयम् । इदानीं शाठ्ये विज्ञाते किं तस्यानुकूल्येनेति भावः । एष तव हरिर्निरङ्कुशनर्मा । अनुबद्धो दृढं गृहीतः सनातनो नित्यः कुलधर्मो यया तादृश्यहम् । तथा च स्वभावविपर्ययान्न तेन मे मैत्री सुखाय स्यात् । समानशीलजितं अनुबद्धः संस्थापितः सनातने धर्मः स्वभक्तिलक्षणो यया वेति च ॥

(भैरवः ।)

बहुमानेनानीतया श्रीराधया सह श्रीहरे रासलास्यं तत्सख्यो वर्णयन्ति—

मण्डितहल्लीशकमण्डलाम् । नटयन्राधां चलकुण्डलाम् ॥

निखिलकलासंपदि परिचयी । प्रियसखि पश्य नटति मुरजयी ॥ध्रुव०॥

मुहुरान्दोलितरत्नवलयम् । सलयं चलयन्करकिसलयम् ॥

गतिभङ्गिभिरवशीकृतशशी । स्थगितसनातनशंकरवशी ॥ १ ॥

**मण्डितेति** । युवतीनां मण्डलीबन्धेन नृत्यं हल्लीशकम् । परिचयी पण्डितः । ध्रुव० । सलयं यथा स्यात्तथा करकिसलयं हस्तपल्लवं चलयन् । 'लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च' इति विश्वः । स्थगितौ सनातनशंकरौ वशिनौ जितेन्द्रियौ येन सः ॥

(भैरवः ।)

सर्वोत्कृष्टायाः राधिकास्वामिन्याः कृपां कविः प्रार्थयति दामोदरेत्यादिना—

दामोदररतिवर्धनवेशे । हरिनिष्कुटवृन्दाविपिनेशे ॥

जय जय राधे माधवदयिते । गोकुलतरुणीमण्डलमहिते ॥ ध्रुव० ॥

वृषभानूदधिनवशशिलेखे । ललितासखि गुणरमितविशाखे ॥

करुणां कुरु मयि करुणाभरिते । सनकसनातनवर्णितचरिते ॥ १ ॥

**दामोदरेति** । हरेर्निष्कुटो गृहारामो यद्वृन्दाविपिनं तस्येशे स्वामिनि हे । गोकुले यानि तरुणीमण्डलानि तैर्महिते पूजिते हे । ध्रुव० । वृषभानुरेवोदधिस्तस्य नवशशिलेखे हे । हे ललितासखि । गुणैः सौहार्दकारुण्यकृष्णानुकूल्याद्यै रमिता विशाखा यया हे तादृशि । हे करुणाभरिते कृपापूर्णे, त्वं मयि करुणां कुरु । सनकसनातनाभ्यां वर्णितानि चरितानि यस्या हे तादृशि ॥

(धनाश्रीः ।)

श्रीकृष्णे मथुरास्थिते विरहिणी श्रीराधा स्वसखीं प्रति स्वप्नवृत्तान्तमाह—

राजपुराद्गोकुलमुपयातम् । प्रमदोन्मादितजननीतातम् ॥
स्वप्ने सखि पुनरद्य मुकुन्दम् । आलोकयमवतंसितकुन्दम् ॥ ध्रुव० ॥
परममहोत्सवघूर्णितघोषम् । नयनेङ्गितकृतमत्परितोषम् ॥
नवगुञ्जावलिकृतपरभागम् । प्रबलसनातनसुहृदनुरागम् ॥ १ ॥

**राजेति** । हे सखि, स्वप्नेऽहमद्य मुकुन्दमालोकयम् । पुनरित्युक्तेः पुरापि तत्स्वप्ना(प्रम)भूदिति गम्यते । कीदृशम् । राजपुरान्मथुरातो गोकुलं नन्दीश्वरमुपयातम् । प्रमदेनानन्देनोन्मादितौ जननीतातौ येन तम् । अवतंसितं कुन्दं येन तम् । ध्रुव० । परमेति स्फुटम् । नवया गुञ्जावल्या कृतः परभागोऽतिशोभालक्षणो गुणोत्कर्षो यस्य तम् । ननु राजधानीं विहाय कथं गोकुलमागतस्तत्राह—प्रबलोऽतिबली सनातनो नित्यः सुहृदनुरागो यस्य तम् । न खलु राज्यैश्वर्यलुब्धो हरिः, अपि तु प्रेमलुब्ध एवेति, अतस्तां विहायेहागतः । 'भगवान्भक्तभक्तिमान्' इति श्रीशुकवचनात् । पक्षे सनातने सुहृदि नाम्नि निजभक्ते इति व्यङ्ग्यम् ॥

(सौराष्ट्री ।)

अनुरागार्ते कृष्णं संकेतस्थाने स्थाप्य वनशोभावीक्षणच्छद्मना तत्रानीता श्रीराधा तं स्वस्पर्शचपलं प्रतीत्य सखीमाह—

पुलकमुपैति भयान्मम गात्रम् । हससि तथापि मदादतिमात्रम् ॥
वारय तूर्णमिमं सखि कृष्णम् । अनुचितकर्मणि निर्मिततृष्णम् ॥ध्रुव०॥
जाने भवतीमेव विपक्षाम् । मामुपनीता यद्वनकक्षाम् ॥
अद्य सनातनमतिसुखहेतुम् । न परिहरिष्ये विधिकृतसेतुम् ॥ १ ॥

**पुलकमिति** । हे सखि, कृष्णं पश्यन्त्या मम गात्रं भयात्पुलकमुपैति, तथापि त्वमतिमात्रं मदाद्गर्वान्मया त्वमद्य विजितासीत्येवंलक्षणाद्धससि । अतिमात्रं भृशमिति हासक्रियाविशेषणम् । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः । किमहं कुर्यामिति चेत्तत्राह—**वारयेति** । अनुचिते मत्परिरम्भादिके कर्मणि । भवतीमेवाहं विपक्षां वैरिणीं जाने मां यद्वनकक्षामरण्यमध्यं छद्मनोपनीता । कर्तरि क्तः । 'कक्षाद्रा(प्रा)हणिकाकाञ्चीप्रकोष्ठग···रज्जुषु' इति विश्वः । अद्याहं विधिकृतं सेतुं वेदविहितां मर्यादां न परिहरिष्ये न त्यक्ष्यामि । वेदविहितत्वात्सनातनं नित्यम् । अतिशयितस्य सुखस्य हेतुम् । श्लेषेण सनातनं कृष्णमहं न परिहरिष्ये । विधिकृतः सेतुर्यस्मात्तमिति । न त्वस्योपरि विधिरस्तीति भावः । सनातनस्य मते सुखं यस्मात्तं कृष्णमिति चार्थः ॥

अथ रासः ।

(धनाश्रीः ।)

रासलीलां वर्णयति—

कोमलशशिकररम्यवनान्तरनिर्मितगीतविलास ।
तूर्णसमागतबल्लवयौवतवीक्षणकृतपरिहास ॥
जय जय भानुसुतातटरङ्गमहानट सुन्दर नन्दकुमार ।
शरदङ्गीकृतदिव्यरसावृत मङ्गलरासविहार ॥ ध्रुव० ॥
गोपीचुम्बित रागकरम्बित मानविलोकनलीन ।
गुणवर्गोन्नतराधासंगतसौहृदसंपदधीन ॥
तद्वचनामृतपानमदाहृत वलयीकृतपरिवार ।
सुरतरुणीगणमतिविक्षोभण खेलनवल्गितहार ॥
अम्बुविगाहननन्दितनिजजन मण्डितयमुनातीर ।
सुखसंविद्घन पूर्ण सनातन निर्मल नीलशरीर ॥ १ ॥

**कोमलेति** । हे नन्दकुमार, त्वं जय जयेत्यन्वयः । कोमलैः शशिकरै रम्ये वनान्तरे निर्मितो गीतविलासो येन । तूर्णं समागतानां बल्लवयौवतानां भाववीक्षणाय कृतः परिहासो येन । भानुसुतायास्तटमेव रङ्गो नर्तनस्थानं तत्र महानट हे । शरद्यङ्गीकृतोऽङ्गतां प्राप्तो दिव्येनाप्राकृतेन रसेनानुरागेणावृतो मङ्गलो रासविहारो येन । ध्रुव० । हे गोपीचुम्बित, हे रागकरम्बित, आलापितरागकान्तानां मानस्य गर्वस्य विलोकनेन लीन कृतान्तर्धान हे । गुणवर्गोन्नतया राधया संगत हे । तस्या या सौहृदसंपत्तदधीन हे । यद्वा गुणवर्गोन्नतायां राधायां संगता या सौहृदसंपत्तदधीन हे । तासां गोपीनां यानि वचनामृतानि जयति तेऽधिकमित्यादीनि तेषां पानेन यो मदस्तद्विषयकेन प्रेम्णा मत्तता तेनाहृत तासां सदस्यानीत हे । वलयीकृतो मण्डलीभावं प्रापितो निजपरिवारः स्वप्रियापरिकरो येन हे । पुनरारब्धहल्लीशकनृत्येत्यर्थः । स्वगानमाधुर्येण सुरतरुणीगणानां मतिं विक्षोभयतीति तथा । खेलनेन नृत्यक्रीडया वल्गितश्चञ्चलो हारो मणिसरो यस्य । अम्बुविगाहनेन जलविहारेण नन्दिता निजजनाः प्रियगणा येन । स्नानोत्थितैर्वस्त्रभूषणभूषितैर्निजजनैर्मण्डितं यमुनायास्तीरं येन । हे सुखसंविद्घन सान्द्रानन्दविज्ञानस्वरूप, हे पूर्ण, हे सनातन, हे निर्मल मायागन्धास्पृष्ट, हे नीलशरीर श्यामसुन्दरविग्रह । पक्षे पूर्णः सनातनो येनेति चार्थः ॥

(धनाश्रीः ।)

कालिन्द्यां स्नात्वा गृहं प्रयान्तीं तत्तटलतापुञ्जनिगूढेन राधयोपदिष्टेन कृष्णेन गृहीतशाटिकाञ्चला श्रीविशाखा तमाह—

शुद्धसतीव्रतवित्ता। अहमतिनिर्मलचित्ता॥
प्रथयसि सुजनविमुक्तम्। नर्मेदं किमयुक्तम्॥
माधव परिहर मे पटमेतम्। यामि जवेन निकेतम्॥ ध्रुव०॥
यदि जानाम्यधितीरम्। त्वामतिंगूढशरीरम्॥
दूरे सूरसुतायाम्। सायं कथमुपयायाम्॥
विदधे भवदवनामम्। चरितं परिहर वामम्॥
वर्त्म सनातनमुचितम्। पालय धार्मिकरुचितम्॥ १॥

**शुद्धेति**। हे माधव, शुद्धेन सतीनां व्रतेन वित्ता प्रख्याता। यतोऽतिनिर्मलं कामवासनावर्जितं [चित्तं मनो] यस्याः साहमस्मि। तादृश्यां मयि नर्म परिहासं किं प्रथयसि। कीदृशं नर्म। सुजनैः स्मृतिपण्डितैर्विमुक्तम्। अतोऽयुक्तमनर्हम्। एतं मे पटं वस्त्रं परिहर मुञ्च। जवेन वेगेन निकेतं गृहमहं यामि। ध्रुव०। ननु मदर्थमेव त्वमत्र प्रेषितासीति चेत्तत्राह—**यदीति**। अधितीरं यमुनातटे त्वां लतानिगूढशरीरं यदाहं जानामि तदा दूरवर्तिन्यां सूरसुतायां यमुनायां सायं कथमुपयायाम्। भवतस्तवावनामं प्रणतिमहं विदधे। वामं प्रतिकूलं चरितं परिहर त्यज। धार्मिकरुचितमुचितं सनातनं वेदोक्तं वर्त्म पालयेति स्वयंदूत्यमत्र लभ्यते। सायंपदप्रयोगात्। तत् पक्षे सनातनं नित्यं भगवत्प्रपत्तिलक्षणं वर्त्म पालय। तन्मे यथा भवेत्तथा विधं(धे)हीति नित्ये परेशे नित्यानां तच्छक्तीनां तनि-(न्नि)त्यम्। **धार्मिकेति**। तत्प्रपत्तिरुचय एव हि धार्मिकैः स्मर्यते। मुद्रालंकारः॥

(कर्णाटः।)

अभिसिसी(सृ)र्षुनायिका मण्डयन्तीं सखीमाह—

किं वितनोषि मुधाङ्गविभूषणकपटेनात्र विघातम्।
सोढुमहं समयस्य न संप्रति शक्ता लवमपि यातम्॥
गोकुलमङ्गलवंशी।
ध्वनिरुद्गर्जति वनगतये स्मरभूपतिशासनशंसी॥ ध्रुव०॥
माधव चरणाङ्गुष्ठनखद्युतिरयमुदयति हिमधामा।
मा गुरुजनभयमुद्गिर मुहुरियमभवं धावितुकामा॥
तं सेवितुमिह पश्य सनातन परमारण्यजवेशम्।
गोपवधूततिरियमुपसर्पति भानुसुतातटदेशम्॥ १॥

**किमित्यादि**। अत्राभिसारे। विघातं विलम्बम्। यदहं समयस्य लवमपि यातं सोढुं शक्ता न भवामि। ननु नाभिसारस्य समयोऽधुनाप्यागत इति चेत्तत्राह—**गोकु-**

**लेति**। समयातिक्रमं व्यज(ञ्ज)यन्त्याह—**माधवेति**। हिमधामा चन्द्रः। ननु चन्द्रिकायां गच्छन्तीं त्वां गुरवः परिचेष्यन्तीति चेत्तत्राह—**मा गुर्विति**। मोद्गिर न प्रदर्शय यतो धावितुकामाहमभवम्। तं कृष्णं सेवितुं गोपवधूततिर्भानुसुतातटदेशमुपसर्पति। न त्वह-मेव। कीदृशम्। सनातनो नित्यः परमोऽतिसुन्दरोऽरण्यजो वेशो यस्य तम्। सनातनस्य परमो ध्येयोऽरण्यजो वेशो यस्य तमिति चार्थः पक्षे॥

(कर्णाटः।)

अथागताभिः प्रियाभिः सार्धं विहारमाह—

स्फुरदिन्दीवरनिन्दिकलेवर राधाकुचकुङ्कुमभरपिञ्जर।
सुन्दरचन्द्रकचूड मनोहर चन्द्रावलिमानसशुकपञ्जर॥
जय जय जय गुञ्जावलिमण्डित।
प्रणयविशृङ्खलगोपीमण्डलवरबिम्बाधरखण्डनपण्डित॥ ध्रुव०॥
मृगवनिताननतृणविस्रंसनकर्मधुरंधरमुरलीकूजित।
स्वारसिकस्मितसुषमोन्मादितसिद्धसतीनयनाञ्चलपूजित॥
ताम्बूलोल्लसदाननसारस जाम्बूनदरुचिविस्फुरदम्बर।
हरकमलासनसनकसनातनधृतिविध्वंसनलीलाडम्बर॥ १॥

**स्फुरदिति**। प्रायेण स्फुटार्थम्। पिञ्जर पीत हे। सुन्दरेण चन्द्रकेण युक्ता चूडा केशपाश्री(?)र्यस्य। प्रणयविशृङ्खलः स्नेहविवशः। मृगवनितानामाननेभ्यो यत्तृणविस्रं-सनं कर्म तत्र धुरंधरमतिसमर्थं मुरलीकूजितं यस्य। स्वारसिकी स्वाभाविकी या स्मित-सुषमा मन्दहासातिशोभा तयोन्मादितानां सिद्धसतीनां नयनाञ्चलैः कटाक्षैः पूजित हे। डम्बरो विस्तारः॥

(केदारः।)

वृन्दाटवीस्थितं कृष्णं प्रसादयितुं संबोधयति—

सौरभसेवितपुष्पविनिर्मितनिर्मलवनमालापरिमण्डित।
मन्दतरस्मितकान्तिकरम्बितवदनाम्बुजनवविभ्रमपण्डित॥
जय जय मरकतकन्दलसुन्दर वरचामीकरपीताम्बरधर।
वृन्दावनजनवृन्दपुरन्दर॥ ध्रुव०॥
वनगुञ्जाफलराजिभिरुज्ज्वलकेकिशिखण्डकशेखरमञ्जुल।
गुणवर्गातुलगोपवधूकुलचित्तशिलीमुखपुष्पितवञ्जुल॥

करमुरलीक्कणपूरविचक्षण पशुपालाधिपहृदयानन्दन।
गिरिशसनातनसनकसनन्दननारदकमलासनकृतवन्दन ॥ १ ॥

**सौरभेति**। सौरभेत्यादिकमगूढार्थम्। करम्बितं युक्तम्। कन्दलो नवाङ्कुरः। ध्रुव०। शेखरः शिरोऽवतंसः। गुणवर्गैरतुलानि निरुपमानि यानि गोपवधूकुलानि तेषां चित्तान्येव शिलीमुखा भृङ्गास्तेषां पुष्पितवञ्जुल कुसुमिताशोकतरो हे। पशुपालाधिपो गोपेश्वरो नन्दः। गिरिशादिभिः कृतं वन्दनं यस्य हे तादृश ॥

(गौरी।)

निकुञ्जे विराजता कृष्णेन सह श्रीराधां दूती संयोजयति—

यामुनजलकणिकाभिरुपेते संगतमुज्ज्वलकुञ्जनिकेते।
त्वयि विनिहितवरसौहृदभारं विहितापरतरुणीपरिहारम्।
भज सखि बल्लवराजकुमारं कामितताववसङ्गविहारम् ॥ ध्रुव० ॥
नवगुञ्जाफलमञ्जुलहारं माल्यविहारिमधुपपरिवारम्।
निर्मलनर्मविभावनशीलं बल्लवमत्र सनातनलीलम् ॥ १ ॥

**यामुनेति**। हे सखि, बल्लवराजकुमारं भज। कीदृशम्। उज्ज्वलकुञ्जनिकेते संगतं त्वदर्थमेवासीनम्। स्फुटार्थमन्यत्। कामितो वाञ्छितस्तावकेन सङ्गेन विहारो यस्य तम्। ध्रुव०। नवैर्गुञ्जाफलैर्मञ्जुलो हारो मुक्तास्रग्यस्य तम्। माल्ये पुष्पस्रजि विहरन्तीति तादृशा मधुपाः परिवारा यस्य तम्। एकाकिनमित्यर्थः। निर्मलेन परिष्कृतेन नर्मणा विभावनं मिश्रीकरणं शीलं यस्य तं त्वाम्। यः परिहासेन रञ्जयिष्यतीति भावः। सनातनी लीला यस्य तत्त्वम्। नित्यप्रियमित्यर्थः। सनातनस्योपास्या लीला यस्य तमिति चार्थः पक्षे ॥

(मल्लारः।)

वनादपराह्णे व्रजमागच्छन्तं कृष्णं वर्णयति—

तरुणीलोचनतापविमोचनहाससुधाङ्कुरधारी।
मन्दमरुच्चलपिञ्छकृतोज्ज्वलमौलिरुदारविहारी ॥
सुन्दरि पश्य मिलति वनमाली।
दिवसे परिणतिमुपगच्छति सति नवनवविभ्रमशाली ॥ ध्रुव० ॥
धेनुखुरोद्धुतरेणुपरिप्लुतफुल्लसरोरुहदामा।
अचिरविकस्वरलसदिन्दीवरमण्डलसुन्दरधामा ॥
कलमुरलीरुतिकृततावकरतिरत्र दृगन्ततरङ्गी।
चारुसनातनतनुरनुरञ्जनकारि सुहृद्गणसङ्गी ॥ १ ॥

**तरुणीति** । हे सुन्दरि, हे सति, वनमाली मिलत्यागच्छति त्वं पश्य । कस्मिन्सति । दिवसेऽह्नि परिणतिमवसानमुपगच्छति प्राप्नुवति सतीत्यग्रिमेण संबन्धः । कीदृशः । मन्देन मरुता चलो यः पिञ्छस्तेन कृत उज्ज्वलो मौलिः किरीटं यस्य सः । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केल्लिमूर्धसु' इति हैमः । विभ्रमा विलासाः । ध्रुव० । धेनुखुरोद्धुतै रेणुभिः परिप्लुतं व्याप्तं फुल्लं सरोरुहदाम पद्ममाला यस्य सः । अचिरं सद्यो विकस्वराणि विकसितानि यानि लसन्तीन्दीवरमण्डलानि तेभ्योऽपि सुन्दरं धाम देहो यस्य सः । कलमुरलीरुतिभिः कृता वर्धिता तावकी रतिर्येन सः । चारुर्मनोज्ञा सनातनी नित्या तनुर्यस्य सः । शिष्टं स्पृ(स्प)ष्टम् । पक्षे चारुर्मनोहरा सनातनस्य स्वतत्त्वविदस्तनुर्यस्य स इति चार्थः ॥

(धनाश्रीः ।)

एवं वर्णितविचित्रलीलस्य नन्दसूनोर्भगवतः पादयोः प्रेमाणमर्थयति—

यदपि समाधिषु विधिरपि पश्यति न तव नखाग्रमरीचिम् ।
इदमिच्छामि निशम्य तवाच्युत तदपि कृपाद्भुतवीचिम् ॥
देव भवन्तं वन्दे ।
मन्मानसमधुकरमर्पय निजपदपङ्कजमकरन्दे ॥ ध्रुव० ॥
भक्तिरुदञ्चति यद्यपि माधव न त्वयि मम तिलमात्री ।
परमेश्वरता तदपि तवाधिकदुर्घटघटनविधात्री ॥
अयमविलोलतयाद्य सनातन कलिताद्भुतरसभारम् ।
निवसतु नित्यमिहामृतनिन्दिनि विन्दन्मधुरिमसारम् ॥ १ ॥

**यदपीत्यादि** । हे अच्युत, दीनानुग्रहा(?)भव्योतते स्मेत्यर्थः । यद्यपि विधिश्चतुर्मुखोऽपि समाधिषु तव नखाग्राणां मरीचिं किरणमेकं न पश्यति त्वत्कृपां विना । 'भानुः करो मरीचिः स्त्री' इत्यमरः । तदपि तव कृपाद्भुतवीचिमाश्चर्यकृपातरङ्गं निशम्य श्रुत्वा इदं वक्ष्यमाणमहमिच्छामि । कृपैकसाध्यो भगवतो लाभः 'न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते । यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥' इति नारायणीये वस्वादिवचनात्, 'अथापि ते देव' इत्यादिकाच्छ्रीदशमे ब्रह्मवाक्याच्च । हे देव, भवन्तमहं वन्दे । किमर्थं तत्राह—**मदिति** । अर्पय नियुक्तं कुरु । ननु भक्तिं विना तत्र तं कथमर्पयामीति चेत्तत्राह—**भक्तिरिति** । उदञ्चत्युदयते । तिलमात्री स्वल्पापि । तदप्यधिकदुर्घटघटनविधात्री तव परमेश्वरता वर्तते तया कुर्विति । अयं मन्मानसमधुकर इह तव पदपङ्कजमकरन्दे नित्यमविलोलतया नैश्चल्येन निवसतु । कलितो लब्धोऽद्भुतरसभारो यत्र तद्यथा स्यात्तथा । कीदृशः सन् । मधुरिमसारं विन्दन् लभमानः । इह कीदृशीत्याह—**अमृतनिन्दिनीति** । हे सनातन नित्यमूर्ते । पक्षे सनातनेन कलित निर्णीत कृपा महैश्वर्य हे ॥

नायिकाभेदान्वर्णयितुं तानुद्दिशति—

अथाभिसारिका वाससज्जाप्युत्कण्ठिता तथा ।
विप्रलब्धा खण्डिता च कलहान्तरिता परा ॥
प्रोषितप्रेयसी प्रोक्ता तथा स्वाधीनभर्तृका ।
इत्यष्टौ नायिकाभेदा रसतन्त्रे प्रकीर्तिताः ॥

तत्राभिसारिका—

या पर्युत्सुकचित्तातिमदेन मदनेन च ।
आत्मनाभिसरेत्कान्तं सा भवेदभिसारिका ॥

**येति** । अतिमदेन यौवनमत्ततया मदनेन स्मरेण च यात्मना देहेन कान्तमभिसरेदाभिमुख्येन गच्छेत्साभिसारिका ॥

(धनाश्रीः ।)

तामुदाहरति—

त्वं कुचवल्गितमौक्तिकमाला । स्मितसान्द्रीकृतशशिकरजाला ॥
हरिमभिसर सुन्दरि सितवेशा । राकारजनिरजनि गुरुरेषा ॥ ध्रुव० ॥
परिहितमाहिषदधिरुचिसिचया । वपुरर्पितघनचन्दननिचया ॥
कर्णकरम्बितकैरवहासा । कलितसनातनसङ्गविलासा ॥ १ ॥

**त्वमिति** । हे सुन्दरि, त्वं सितवेशा सितवस्त्रभूषणा सती हरिमभिसर । सितवेशता (?)सपत्रये विशिनष्टि—कुचयोरुपरि वल्गिता चपला मौक्तिकमाला यस्याः सा । स्मितेन सान्द्रीकृतं शशिनः करजालं यया सा । एषा गुरुरुत्कृष्टा राकारजनिर्यदजनि जातास्ति । ध्रुव० । परिहितोऽङ्गेषु धृतो माहिषदधिरुचिस्तद्दधिसदृशः सिचयो वस्त्रं यया सा । वपुरिति स्फुटार्थम् । कर्णयोः करम्बितो धृतः कैरवयोर्हासो यया सा । प्रफुल्लकुमुदावतंसितश्रोत्रेत्यर्थः । कलितः प्राप्तः सनातनस्य हरेः सङ्गेन विलासो यया सा । कलितो दृष्टः सनातनस्य सङ्ग आसक्तिर्येषु तादृशा विलासा यस्याः सेति चार्थः पक्षे ॥

अथ वासकसज्जा—

भवेद्वासकसज्जासौ सज्जिताङ्गरतालया ।
निश्चित्यागमनं भर्तुर्द्वारेक्षणपरायणा ॥

**भवेदिति** । सज्जितं भूषितमङ्गं रतालयः केलिगृहं च यया सा ॥

(कल्याणः ।)

कुसुमावलिभिरुपस्कुरु तल्पम् । माल्यं चामलमणिसरकल्पम् ॥
प्रियसखि केलिपरिच्छदपुञ्जम् । उपकल्पय सत्वरमधिकुञ्जम् ॥ ध्रुव० ॥

मणिसंपुटमुपनय ताम्बूलम् । शयनाञ्चलमपि पीतदुकूलम् ॥
विद्धि समागतमप्रतिबन्धम् । माधवमाशु सनातनसंधम् ॥ १ ॥

**कुसुमेति** । कुसुमावलीत्यादि सखीं प्रति नायिकाया वाक्यम् । उपस्कुरु रचय । अमलो यो मणिसरस्तत्कल्पं तत्सदृशं माल्यं पुष्पस्रजं चोपस्कुरु । माल्यं चेदं पुष्पकोरकनिमित्तं व्यञ्जितम् । हे प्रियसखि, केलिपरिच्छदपुञ्जं पुष्पकन्दुकम(मृ)दुचषकमोदकप्रभृतिमुपकल्पय । अधिकुञ्जमिति विभक्त्यर्थेऽव्ययीभावः । कुञ्जे स्थापयेत्यर्थः । ध्रुव० । मणीत्यगूढार्थम् । शनैः शनै रचयामीति चेत्तत्राह—**विद्धीति** । अप्रतिबन्धं विघ्नशून्यं माधवमागतमेव विद्धि । सनातनी नित्या संधा प्रतिज्ञा यस्य तम् । पक्षे सनातने संधा (?)सा हि प्रतिज्ञा यस्य तमिति चार्थः ॥

अथोत्कण्ठिता—

सा स्यादुत्कण्ठिता यस्या वासं नैति द्रुतं प्रियः ।
तस्यानागमने हेतुं चिन्तयन्त्या शुचा भृशम् ॥

**सा स्यादिति** । तस्य प्रियस्य । शुचा शोकेन युक्ता ॥

(आसावरी ।)

किमु चन्द्रावलिरनयगभीरा । न्यरुणदमुं रतिवीरमधीरा ॥
अतिचिरमजनि रजनिरतिकाली । सङ्गमविन्दत न हि वनमाली ॥ ध्रुव०॥
किमिह जने धृतपङ्कविपाके । विस्मृतिरस्य बभूव वराके ॥
किमुत सनातनतनुरलघिष्ठम् । रणमारभत सुरारिभिरु(रि)ष्टम् ॥ १ ॥

**किम्विति** । अनयगभीरातिप्रगल्भा । रजनिर्निशातिचिरमतिकाली अतिश्यामाजनि जाताभूत् । तथापि वनमाली मे सङ्गं हि यतो नाविन्दत । ध्रुव० । हेत्वन्तरं चिन्तयति—इह मल्लक्षणेऽस्य वनमालिनः किं विस्मृतिर्बभूव । विस्मृतौ हेतुं दर्शयन्विशिनष्टि । कीदृशेऽस्मिन् जने । धृतः पङ्कस्य पापस्य विपाकः फलं येन तस्मिन् । 'पङ्कोऽस्त्री कर्दमे पापे' इति विश्वलोचनकारः । अतो वराके तुच्छे । मयि प्रीतिमानसौ युवतिरत्नं प्रेमवतीं मां कथं विस्मरेदिति हेत्वन्तरं चिन्तयति—सनातनतनुः स वनमाली सुरारिभिर्दानवैः सह अलघिष्ठं महान्तं रणं किमुतारभत । रणं कीदृशम् । तस्यापि वीरस्येष्टं वाञ्छनीयमिति । सनातनस्य प्रेष्ठा तनुर्यस्य स इति चार्थः पक्षे ॥

अथ विप्रलब्धा—

यस्या दूतीं स्वयं प्रेष्य समये नागतः प्रियः ।
शोचन्ती तं विना दुःखा विप्रलब्धा तु सा स्मृता ॥

**यस्या इति** । दूतीं स्वयं प्रेष्य इत्यासंकेतं विधायेत्यर्थः ॥

(गौडी ।)

कोमलकुसुमावलिकृतचयनम् । अपसारय रतिलीलाशयनम् ॥
श्रीहरिणाद्य न लेभे शमये । हन्त जनं सखि शरणं कमये ॥ ध्रुव० ॥
विधृतमनोहरगन्धविलासम् । क्षिप यामुनतटभुवि पटवासम् ॥
लब्धमवेहि निशान्तिमयामम् । मुञ्च सनातनसंगतिकामम् ॥ १ ॥

**कोमेति** । कोमलेत्यादिकं सखीं प्रति नायिकावाक्यम् । अपसारय दूरीकुरु । अहमद्य श्रीहरिणा कर्त्रा न लेभे न प्राप्ता । वैचित्त्ये लिट् । हन्तेति खेदे । हे सखि, कं जनं शरणमये गच्छामि । यो मां श्रीहरिं दर्शयेदित्यर्थः । ध्रुव० । पटवासं गन्धचूर्णं यामुनतटभुवि क्षिप । कीदृशम् । विधृतो मनोहरस्य गन्धस्य सौरभ्यस्य विलासो येन तम् । अतिसुगन्धिमपीत्यर्थः । नन्वायास्यति श्रीहरिरिति चेत्तत्राह—**लब्धमिति** । सनातनस्य श्रीहरेः संगतिकाममालिङ्गनाभिलाषं मुञ्च । अत्र मुद्रालंकारः ॥

अथ खण्डिता—

अन्यया सह कान्तस्य दृष्टे संभोगलक्षणे ।
ईर्ष्याकषायितात्मासौ खण्डिता खलु कथ्यते ॥

**अन्ययेति** । अन्ययेति । प्रतिनायिकया सहेत्यर्थः ॥

(रासकेलिः ।)

हृदयान्तरमधिशयितम् । रमय जनं निजदयितम् ॥
किं फलमपराधिकया । संप्रति तव राधिकया ॥
माधव परिहर पटिमतरङ्गम् । वेत्ति न का तव रङ्गम् ॥ ध्रुव० ॥
आघूर्णति तव नयनम् । याहि घटीं भज शयनम् ॥
अनुलेपं रचयालम् । नश्यतु नखपदजालम् ॥
त्वामिह विलसति बाला । मुखरसखीनां माला ॥
देव सनातन वन्दे । न कुरु विलम्बमलिन्दे ॥ १ ॥

**हृदयेति** । चित्तमध्ये स्थितं निजमात्मीयं दयितं जनं चन्द्रावलीलक्षणम् । किमिति अपराधिकया त्वदपकारिण्या । पटिमतरङ्गं त्वदर्थमेव निकुञ्जे कृतजागरोऽहमित्येवं लक्षणं परिहर । ध्रुव० । घटीमित्यकर्मकधातुयोगात्कालस्य कर्मकत्वम् । अनुलेपं चन्दनादिना रचय । नखपदजालं नखरचिह्नवृन्दम् । त्वामित्यतिस्निग्धं सत्यवाकं(क्यं) त्वां मुखरा मत्सख्यो हसन्ति ततो मदलिन्दात्त्वरमपसरेत्यर्थः । अत्रापि मुद्रालंकारः ॥

(भैरवः।)

अतिचारुत्वात्पुनरपि खण्डितावस्थां वर्णयति—

यां सेवितवानसि जागरी। त्वामजयत्सा निशि नागरी॥
कपटमिदं तव विन्दति हरे। नावसरं पुनरालिनिकरे॥ ध्रुव०॥
मा कुरु शपथं गोकुलपते। वेत्ति चिरं का चरितं न ते॥
मुक्तसनातनसौहृदभरे। न पुनरहं त्वयि रसमाहरे॥ १॥

**यामिति**। जागरी सन् यां सेवितवानसि सा नागरी त्वामजयत्। त्वदास(श)यारण्ये महान्तं खेदमलभमितीदं तव कपटं मदालिनिकरेऽवसरमवकाशं न विन्दति। ध्रुव०। **मा कुर्विति**। एवमेव सवास्त्वं प्रतारयन् दुःखयसीति भावः। मुक्तस्त्यक्तः सनातनो नित्यः सौहृदभरो येन तादृशे त्वयि पुनरहं रसमनुरागं नाहरे न निबध्नामि। अत्रापि मुद्रा॥

अथ कलहान्तरिता—

निरस्तो मन्युना कान्तो नमन्नपि यया पुरः।
सानुतापयुता दीना कलहान्तरिता भवेत्॥

**निरस्त इति**। मन्युना रोषेण। नमन्नपि प्रणामं कुर्वन्नपि॥

(ललितः।)

नाकर्णयमतिसुहृदुपदेशम्। माधवचाटुपटलमपि लेशम्॥
सीदति सखि मम हृदयमधीरम्। यदभजमिह न हि गोकुलवीरम्॥ध्रुव०॥
नालोकयमर्पितमुरुहारम्। प्रणमन्तं च दयितमनुवारम्॥
हन्त सनातनगुणमभियान्तम्। किमधारयमहमुरसि न कान्तम्॥ १॥

**नाकर्णयमिति**। अतिसुहृदामहे कान्तानां ललितादीनामपि नाकर्णयं नाशृणवम्। माधवस्य चाटुपटलं प्रियवचनकदम्बमपि लेशं यथा स्यात्तथा नाकर्णयम्। सीदति विशीर्णे भवति। यदहं गोकुलवीरं माधवं नाभजम्। ध्रुव०। माधवेनार्पितमुरुं श्रेष्ठं हारं प्रणमन्तं दयितं च तं नाहमालोकयं नापश्यम्। अभियान्तं कान्तं तं किं कथमहमुरसि वक्षसि नाधारयम्। हे सखि, महान्ममानुतापस्त्वमस्मात्तारयेति भावः। सनातना नित्याः। पक्षे सनातने ये गीता गुणा यस्य तम्॥

अथ विरहिणी प्रोषितप्रेयसी—

कुतश्चित्कारणाद्यस्या विदूरस्थो भवेत्पतिः।
तदनागमदुःखार्ता सा स्यात्प्रोषितभर्तृका॥

**कुतश्चिदिति**। यथा कंसवधहेतोर्हरेर्मथुरास्थितिः॥

(गौरी।)

मथुरास्थितं हरिमुद्धवः प्राह—

कुर्वति किल कोकिलकुल उज्ज्वलकलनादम्।
जैमिनिरिति जैमिनिरिति जल्पति सविषादम्॥
माधव घोरे वियोगतमसि निपपात राधा।
विधुरमलिनमूर्तिरधिकमधिरूढबाधा॥ ध्रुव०॥
नीलनलिनमाल्यमहह वीक्ष्य पुलकवीता।
गरुड गरुडेत्यभिरौति परमभीता॥
लम्भितमृगनाभिमगुरुकर्दममनु दीना।
ध्यायति शितिकण्ठमपि सनातनमनुलीना॥ १॥

**कुर्वतीति**। कोकिलकुले पिकवृन्दे उज्ज्वलकलनादं कुर्वत्युच्चारयति सति वज्रनिपातशङ्किता राजा जैमिनिरिति जैमिनिरिति जल्पति। जैमिनेर्नामोच्चारणेन वज्रत्रासो हीयते इति प्रसिद्धम्। 'मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्तनात्। विद्युदग्निभयं नास्ति ···लितेन महोदरे॥ ···········जैमिनिश्च वैशम्पायन एव च। पुलस्त्यं(स्त्यः) पुलहश्चैव पञ्चैते वज्रवारणाः॥' इत्यादौ। हे माधव, घोरे वियोगतमसि राधा निपपात। विधुरा दुःखिता मलिना च मूर्तिर्यस्याः सा। अधिकं यथा भवति तथा अधिरूढबाधा प्रवृद्धवेदना। ध्रुव०। **नीलेति**। नीलाम्बुजस्रजि कालभुजङ्गशङ्कया। तद्भयविनाशाय भुजङ्गाशिनो गरुडस्य नामोच्चारयतीत्यर्थः। लम्भितो मृगनाभिर्यत्र तमगुरुकर्दममनुलक्ष्य तत्र श्यामवर्णस्य कन्दर्पस्य भ्रमात्तद्विद्रावणाय तद्वैरिणं शितिकण्ठं ध्यायतीत्यर्थः। सनातनं त्वामनुलक्ष्य लीना सती॥

अथ स्वाधीनभर्तृका—

यस्याः प्रेमगुणाकृष्टः प्रियः पार्श्वं न मुञ्चति।
विचित्रसंभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका॥

**यस्या इति**। विचित्रेषु संभ्रमेष्वासक्ता निरता॥

(मल्लारः।)

विहारा राधा हरिमाह—

पत्रावलिमिह मम हृदि गौरे। मृगमदबिन्दुभिरर्पय शौरे।
श्यामल सुन्दर विविधविशेषे। विरचय वपुषि ममोज्ज्वलवेशे॥ध्रुव०॥
पिञ्छमुकुट मम पिञ्छनिकाशम्। वरमवतंसय कुन्तलपाशम्।
अत्र सनातन शिल्पलवङ्गम्। श्रुतियुगले मम लम्भय सङ्गम्॥ १॥

**पत्रावलिमिति** । हे शौरे, मम गौरे हृदि वक्षसि मृगमदबिन्दुभिः पत्रावलिमर्पय रचय । हे श्यामल, हे सुन्दर, विविधो विशेषः प्रकाराधिक्यं यत्र तम् । ध्रुव० । हे पिञ्छमुकुट, मम वरं श्रेष्ठं कुन्तलपाशं केशवृन्दमवतंसय पुष्पैर्मण्डय । कीदृशम् । पिञ्छनिकासं-(शं) शिखिपुच्छमिवातिदीर्घम् । विचित्रैः पुष्पैर्भूषिते सति तद्वद्विचित्रमिति वा । अत्र श्रुतियुगले कर्णयुग्मोर्ध्वभागे शिल्पेन क्रियाकौशलेन रचितं पौष्पं लवङ्गं सङ्गमुपलम्भय । हे सनातन, तस्मिन्नर्पयेत्यर्थः । नन्वौपपत्यलीलायां कथं यतिभर्तृशब्दौ संभवेतामिति वेत्यशक्तिसाराणां श्रीराधादीनां वस्तुतः कृष्णपतिकत्वादिति तत्संभवं गृहाण तथाप्यादितस्तदिच्छया गोपान्तरे(रै)स्तासां परिणयमात्राल्लीलापोषकं गौणमौपपत्यमस्तीति न काचिद्विक्षतिः ॥

(वसन्तरागः ।)

पुष्पाणि विचिन्वती श्रीराधा तत्रागतं स्प्रष्टुकामं हरिं वीक्ष्यान्तःप्रहृष्टापि तन्निषेधाय ललितामाह—

किमयं रचयति नयनतरङ्गम् । कैरविणी न हि भजति पतङ्गम् ।
वारय माधवमुदवदनङ्गम् । स्पृशति यथायं न सखि मदङ्गम् ॥ ध्रुव० ॥
कम्पिकरान्मम पतति लवङ्गम् । त्वमपि तथापि न मुञ्चसि रङ्गम् ॥
कमपि सनातनधर्ममभङ्गम् । न परिहरिष्ये हृदि कृतसङ्गम् ॥ १ ॥

**किमयमिति** । अयं हरिः । त्वामालिङ्गितुमिति चेत्तत्राह—**कैरविणीति** । पतङ्गं रविम् । वारयेत्यगूढार्थम् । सखि हे ललिते । ध्रुव० । मम कम्पिनः कराल्लवङ्गं पुष्पं पतति । तथापि त्वं रङ्गं कौतुकं न मुञ्चसि । ननु किमिति प्रेष्ठात्कृष्णादुद्विजस इति चेद्धर्मभङ्गभयादित्याह—**कमपीति** । सनातनमनादिवेदनिहितमतोऽभङ्गमविच्छिन्नसंप्रदायं कुलधर्ममहं न परिहरिष्ये । हृदि कृतसङ्गं स्थितम् । अत्र करकम्पनिगदनेन रत्युत्थसात्त्विकव्यञ्जनात्तेन सह चिक्रीडिषा व्यज्यते । तत्पक्षे सनातनस्य श्रीकृष्णस्यैकान्तभक्तिलक्षणो यो धर्मस्तमभङ्गमनादितः प्राप्तं नाहं परिहरिष्ये त्यक्ष्यामीत्यर्थः ॥

(भैरवरागः ।)

प्रसादितं कृष्णं संबोधयन् कविर्वर्णयति—

अपघनघटितघुसृणघनसार । पिञ्छखचितकुञ्चितकचभार ॥
जय जय बल्लवराजकुमार । राधावक्षसि हरिमणिहार ॥ ध्रुव० ॥
राधाधृतिहरमुरलीतार । नयनाञ्चलकृतमदनविकार ॥
रसरञ्जितराधापरिवार । कलितसनातनचित्तविहार ॥ १ ॥

**अपघनेत्यादि** । अपघने वपुषि घटितौ घुसृणघनसारौ येन । 'देहोपघनकायाङ्गं वपुः संहननं तनुः' इति धनंजयः । 'कुङ्कुमं घुसृणं वर्णम्' इति, 'कर्पूरो घनसारः स्यात्'

इति च हलायुधः । पिञ्छेन चन्द्रकेण खचितः कुञ्चितः कुटिलः कचभारो यस्य । हरिमणिहार हे इन्द्रनीलस्रक् । 'इन्द्रो दुश्च्यवनो हरिः इति हलायुधः । ध्रुव । राधाया धृतिं हरति तादृशो मुरल्यास्तारोऽत्युच्चनादो यस्य । नयनाञ्चलेन कटाक्षेण कृतो राधायां मदनविकारो येन । रसेनानुरागेण रञ्जिता राधायाः परिवारा सख्यो दास्यश्च येन । कलितो रचितः सनातनस्य चित्ते विहारो येन ॥

(कर्णाटरागः—एकताली तालः ।)

मृदुमानां श्रीराधां विशाखाह—

सुन्दरि साध्वी त्वमिह किशोरी ।
तत्कथमसि वद गोष्ठपुरंदरनन्दनहृन्मणिचोरी ॥ ध्रुव० ॥
नहि संगोपय परधनमधुना त्वं विदिता कुलपाली ।
ललितासखि कुरु करुणां सीदति कन्दरभुवि वनमाली ॥
अयि रमणीमणि रमणीयं मणिमर्पय पुनरविलम्बम् ।
भवतु निराकुलमतिकृपया तव हरिपरिजननिकुरम्बम् ॥
दूतीयुगमिदमवनमति स्वयमवनिलुठितकचजूटम् ।
तन्वि सनातनसौहृदमनुसर विस्तारय नहि कूटम् ॥ १ ॥

**सुन्दरीत्यादि** । हे सुन्दरि, इह गोकुले त्वं साध्वी तथापि गोष्ठपुरंदरनन्दनस्य राजपुत्रस्य श्रीहरेर्हृन्मणिचोरी कथमसि तद्वद । ध्रुव० । परधनं कृष्णमनोमणिं नहि संगोपय संगोप्य न स्थापय, यत्त्वं कुलपाली विदितासि । हे ललितासखि, करुणां कुरु दयां प्रकाशय । कन्दरभुवि गिरिदर्यां वनमाली सीदति व्यथते । नन्वहं तस्य हृन्मणिं नेतुमेव जाने, न तु दातुमिति चेत्तत्राह—**अयीति** । हे रमणीमणि, रमणीयमनुरागगुणेन मनोज्ञं तव हृन्मणिमर्पय तस्मै देहि । अविलम्बं त्वरया । ततः किमिति चेत्तत्राह—**भवत्विति** । इदं वनमालिनो दूतीयुगं त्वामवनमति प्रणमति । हे तन्वि, सनातने तस्मिन् सनातनवर्णितं वा सौहृदभरमनुसर कुरु । कूटं कपटं नहि विस्तारय ॥

(मल्लाररागः—एकताली तालः ।)

अदत्तोत्तरां राधां सा पुनराह—

राधे कलय हृदयमनुकूलम् ।
दलति दृगञ्चलशरहतहृत्तव गोकुलजीवितमूलम् ॥ ध्रुव० ॥
शीलितपञ्चमगीतिरदक्षिणपाणिसरोरुहहंसी ।
तनुते सांप्रतमस्य मुनिव्रतमरतिभरादिव वंशी ॥

भ्रमदिन्दिन्दिरवृन्दविकर्षणपरिमलपटलविशाला ।
पतिता कण्ठतटादभिशुष्यति तस्य वने वनमाला ॥
अदये दधती तनुरपि तनुतां तस्य समुज्झितलीला ।
शीर्यति कन्दरधाम्नि सनातनहृदयानन्दनशीला ॥ १ ॥

**राधे इत्यादि** । हृदयं चित्तमनुकूलं कृष्णसंमुखं कलय कुरु । कुत इति चेत्तत्राह—**दलतीति** । गोकुलजीवितमूलं नन्दसूनुस्तव दृगञ्चलशरहतहृत् सन् दलति विदारं लभते । ध्रुव० । तस्य हृद्विदारावस्थां प्रपञ्चयति—**शीलितेत्यादिना** । अस्य त्वत्कटाक्षशरलब्धविदारस्य हरेर्वंशी सांप्रतमधुनारतिभराद्दुःखातिशयादिव मुनिव्रतं मौनं तनुते । सा कीदृशी । शीलिता प्रागुच्चारिता पञ्चमगीतिर्यया सा । अदक्षिणपाणिसरोरुहस्य वामकरकमलस्य हंसी । तद्वत्तत्रासक्तेत्यर्थः । तस्य हरेर्वनमाला कण्ठतटात्पतिता वनेऽभिशुष्यति । स्खलितामतिप्रियां तां यो न वेत्तीत्यर्थः । सा कीदृशी । भ्रमन्ति यानीन्दिन्दिरवृन्दानि तानि विकर्षति यत्परिमलपटलं तेन विशाला । विदूराभिज्ञानेत्यर्थः । हे अदये दयाशून्ये राधे, तस्य हरेस्तनुर्मूर्तिरपि तनुतां कार्श्यं दधती सती कन्दरधाम्नि शीर्यति । सा कीदृशी । समुज्झिता परित्यक्ता लीला भोजनादिविलासो यया सा । सनातनस्य मुनेर्हृदयमामोदयति तादृक्शीलं यस्याः सा । त्वदभ्यर्च्यः सनातनो ब्रह्मपुत्रो यमुपास्ते तं कृष्णं त्वदेकमनस्तया खिद्यमानं विज्ञायापि न सत्करोषि त्वं धन्यासीति भावः । ततश्च विज्ञातकान्तवेदना राधाभिसृत्य तमानन्दयामासेति वेदितव्यम् ॥

(वसन्तरागः ।)

हरेर्वसन्तक्रीडां वर्णयति—

मधुरिपुरद्य वसन्ते ।
खेलति गोकुलयुवतिभिरुज्ज्वलपुष्पसुगन्धदिगन्ते ॥ ध्रुव० ॥
प्रेमकरम्बितराधाचुम्बितमुखविधुरुत्सवशाली ।
धृतचन्द्रावलिचारुकराङ्गुलिरिह नवचम्पकमाली ॥
नवशशिरेखालिखितविशाखातनुरथ ललितासङ्गी ।
श्यामलयाश्रितबाहुरुदञ्चितपद्माविभ्रमरङ्गी ॥
भद्रालम्बितशैब्योदीरितरक्तरजोभरधारी ।
पश्य सनातनमूर्तिरयं घनवृन्दावनरुचिकारी ॥ १ ॥

**मधुरिति** । स्फुटार्थम् । ध्रुव० । युवतीनां नामानि निदर्शंस्ताभिः साकं तस्य लीलामाह—**प्रेमेति** । प्रेम्णा करम्बितया विशिष्टया राधया चुम्बितो मुखविधुर्यस्य सः । स्फुटमन्यत् । नवया शशिरेखया लिखिता विशाखायास्तनुर्वक्षोरूपस्तनोरवयवो येन सः ।

उदञ्चित उदितो यः पद्मायाः विभ्रमो विलासस्तस्मिन् रङ्गी कौतुकवान् । भद्रयालम्बिता युक्ता या शैब्या तयोदीरितो निःक्षिप्तो यो रक्तरजोभरो वन्दनसमूहस्तं तनौ धरतीति सः । सनातनी पक्षे सनातनेन ध्याता तनुर्यस्य सः ॥

(वसन्तरागः ।)

वसन्तक्रीडायां रागं जनयन्कृष्णः श्रीराधामाह—

ऋतुराजार्पिततोषतरङ्गम् । राधे भज वृन्दावनरङ्गम् ॥ ध्रुव० ॥
मलयानिलगुरुशिक्षितलास्या । नटति लताततिरुज्ज्वलहास्या ॥
पिकततिरिह वादयति मृदङ्गम् । पश्यति तरुकुलमङ्कुरदङ्गम् ॥
गायति भृङ्गघटाद्भुतशीला । मम वंशीव सनातनलीला ॥ १ ॥

**ऋतुराजेति** । हे राधे, वृन्दावने रङ्गं विनोदं भज । कीदृशम् । ऋतुराजेन वसन्तेनार्पितस्तोषतरङ्गो यत्र तम् । ध्रुव० । ऋतुराजस्य प्रवेशं दर्शयति—लताततिर्नटति । कीदृशी । मलयानिलाद्गुरोः शिक्षितं लास्यं यया सा । उज्ज्वलं पुष्परूपं हास्यं यस्याः सा । पिकततिः कुहूध्वनिरूपं मृदङ्गं वादयति । अङ्कुरदङ्गं तरुकुलं पश्यति तत्तौर्यत्रिकं वीक्ष्यते । अद्भुतशीला भृङ्गघटा मम वंशीव गायति । कीदृशी । सनातनी लीला यस्याः सा ॥

(वसन्तरागः ।)

इत्यादितो वसन्तक्रीडानुरागया सह श्रीहरिस्तां क्रीडामाह—**विहरतीत्यादिना** ।

विहरति सह राधिकया रङ्गी ।
मधुमधुरे वृन्दावनरोधसि हरिरिह हर्षतरङ्गी ॥ ध्रुव० ॥
विकिरति यन्त्रेरितमघवैरिणि राधा कुङ्कुमपङ्कम् ।
दयितामयमपि सिञ्चति मृगमदरसराशिभिरविशङ्कम् ॥
क्षिपति मिथो युवमिथुनमिदं नवमरुणतरं पटवासम् ।
जितमिति जितमिति मुहुरपि जल्पति कल्पयदतनुविलासम् ॥
सुबलो रणयति घनकरताली जितवानिति वनमाली ।
ललिता वदति सनातनवल्लभमजयत्पश्य ममाली ॥ १ ॥

**विहरतीति** । रङ्गी कौतुकी । राधा यन्त्रेरितं कुङ्कुमपङ्कमघवैरिणि श्यामसुन्दरे विकिरति क्षिपति । तद्रूपानुरूपत्वात् । अयमघवैरी च मृगमदरसराशिभिर्यन्त्रमुक्तैर्दयितां सिञ्चति । स्वर्णगौराङ्ग्यां दयितायां तेषामानुरूप्यात् । अविशङ्कं निर्भयं यथा स्यात्तथा । यन्त्रक्रीडोत्तरं वन्दनविक्षेपमाह—**क्षिपतीति** । युवमिथुनं श्रीराधिकाकृष्णयोर्द्वन्द्वं कर्तृ । अरुणतरं नवं पटवासं सुगन्धिचन्दनं मिथः क्षिपति । कुङ्कुमकस्तूरि···परिपरिसक्तस्य तस्य विचि-

त्रशोभाकरत्वात्। तद्युवमिथुनं कर्तृ जितं मयेति मिथो जल्पति। सुबलः कृष्णस्य प्रियनर्मसखः। रणयति वादयति। स्फुटार्थमन्यत्॥

(धनाश्रीः।)

वसन्तक्रीडोत्तरं जलक्रीडामाहौचित्यात्—तीरस्थाः किं कुर्मो वदन्ति।

राधा सखि जलकेलिषु निपुणा। खेलति निजकुण्डे मधुरिपुणा॥ध्रुव०॥
कुचपटलुण्ठननिर्मितकलिना। आयुधपदवीयोजितनलिना॥
दृढपरिरम्भणचुम्बनहठिना। हिमजलसेचनकर्मणि कठिना॥
सुखभरशिथिलसनातनमहसा। दयितपराजयलक्षणसहसा॥ १॥

**राधेति**। हे सखि, निजकुण्डे मधुरिपुणा सह राधा खेलति। कीदृशीत्याह—**जलेति**। ध्रुव०। मधुरिपुराधिकयोः क्रमाद्विशेषणानि। कुचपटः कञ्चुलिका तस्य लुण्ठने निर्मितः कलिर्युद्धं येन। आयुधपदव्यां योजितानि नलिनानि यया सा। पद्मैर्मधुरिपुं प्रहरन्तीत्यर्थः। दृढे परिरम्भणे चुम्बने च हठिना साग्रहेण। हिमैर्जलैर्यत्सेचनं तद्रूपे कर्मणि कठिना निर्दया। श्रीराधाङ्गसंस्पर्शनोत्थेन सुखभरेण शिथिलं सनातनं नित्यं सनातनवर्णितं वा महः पराक्रमो यस्य तेन। दयितस्य मधुरिपोर्यत्पराजयलक्षणं निश्चेष्टत्वं तत्र परिदृष्टं सहसा कुत्राद्य भवतोऽस्य द्वि(वि)डम्बनलक्षणं तेज इति हास्यकारिणीत्यर्थः॥

(धनाश्रीः।)

राधे निजकुण्डपयसि तुङ्गीकुरु रङ्गम्।
किं च सिञ्च पिञ्छमुकुटमङ्गीकृतभङ्गम्॥ ध्रुव०॥
अस्य पश्य फुल्लकुसुमरचितोज्ज्वलचूडा।
भीतिभिरतिनीलनिबिडकुन्तलमनुगूढा॥
धातुरचितचित्रवीथिरम्भसि परिलीना।
मालाप्यतिशिथिलवृत्तिरजनि भृङ्गहीना॥
श्रीसनातनसुमणिरत्नमंशुभिरपि चण्डम्।
भेजे प्रतिबिम्बभावदम्भी तव गण्डम्॥ १॥

**राधे इति**। रङ्गं विनोदम्। अङ्गीकृतो भङ्गः पलायनं येन तं पिञ्छमुकुटं कृष्णं सिञ्च। प्राप्तोऽवसरस्तवायमित्यर्थः। ध्रुव०। ननु कथमस्य महाबलस्य भङ्गः प्रतीयते तत्राह—अस्य फुल्लैः कुसुमै रचिता चूडा शिरोऽवतंसः। भीतिभिरतिभयेन निबिडं कुन्तलमनुलक्ष्य गूढा वर्तते। स्वामिनः पराजये परिकराणामितस्ततो निलयनमिति भावः। धातुरचितास्य चित्रवीथिरम्भसि कुण्डपयसि परिलीनाभवत्। **मालापीति**। स्फुटार्थः। श्रीसनातनस्य सुमणिरत्नं कौस्तुभाख्यम्। अंशुभिः किरणैश्चण्डं तीव्रं दुरालोकमपि

प्रतिबिम्बत्वच्छलेन तव गण्डं भेजे त्वं पश्य । ततश्चैतत्स्वामिनः पराजये कः संशय इति भावः। एवमम्बुनि क्रीडित्वा परिहितवासोविभूषौ ललितानन्ददे कुञ्जे कृतमोदकभोजनौ रत्नपर्यङ्के तौ सुखं सुषुपतुरिति ॥ इति श्रीगीतावली व्याख्याता ॥

त(?)थाश्चत्वारिंशदेकाधिका यो व्याचष्ट श्रीरूपदिष्टा(ष्टाः) प्रयत्नात्।
तस्मिन्विद्याभूषणे साधुवर्याः कारुण्यं किं भावविज्ञा न कुर्युः ॥

---

श्रीललिताप्रणामस्तोत्रम् ।

श्रीललितायै नमः ।

राधामुकुन्दपदसंभवधर्मबिन्दु-
निर्मञ्छनोपकरणीकृतदेहलक्षाम् ।
उत्तुङ्गसौहृदविशेषभरात्प्रगल्भां
देवीं गुणैः सुललितां ललितां नमामि ॥ १ ॥

नौमि श्रीललितां देवीं ललितां गुणराशिभिः ।
राधिकामाधवौ यस्या भवेतामाश्रयौ सदा ॥

**राधेत्यादि** । ललितां देवीमहं नमामीत्यन्वयः । कीदृशीम् । राधामुकुन्दयोः पदेषु संभवो जन्म यस्य तस्य घर्मबिन्दोर्निर्मञ्छनायोपकरणीकृतं देहलक्षं यया ताम् । तच्छ्रमवारिकणापनयननियुक्तशरीरलक्षामित्यर्थः । उत्तुङ्गोऽत्युच्चो यः सौहृदविशेषो मदीयत्वमिश्रः सख्यभावस्तद्वशात् प्रगल्भाम् ॥

राकासुधाकिरणमण्डलकान्तिदण्डि-
तुण्डश्रियं चकितचारुचमूरुनेत्राम् ।
राधाप्रसाधनविधानकलाप्रसिद्धां
देवीं गुणैः सुललितां ललितां नमामि ॥ २ ॥

**राकेति** । राकासुधाकिरणः पूर्णचन्द्रस्तन्मण्डलस्य कान्तिं दण्डयति तादृशी तुण्डश्रीर्वक्त्रशोभा यस्यास्ताम् । चकितस्य त्रस्तस्य चारुचमूरोर्मनोज्ञमृगस्येव नेत्रे यस्यास्ताम् । राधाया यत्प्रसाधनं मण्डनं तद्विधानकलया प्रसिद्धाम् । राधाङ्गविभूषणचातुर्यातिख्यातामित्यर्थः ॥

लास्योल्लसद्भुजगशत्रुपतत्रचित्र-
पट्टांशुकाभरणकञ्चुलिकाञ्चिताङ्गीम् ।
गोरोचनारुचिविगर्हणगौरिमाणं
देवीं गुणैः सुललितां ललितां नमामि ॥ ३ ॥

**लास्येति ।** लास्येन नृत्येनोल्लसन् विस्तृतपुच्छो यो भुजगशत्रुर्मयूरस्तस्य यानि पतत्राणि व्यक्तचित्रा पिञ्छास्तद्वच्चित्रं यत्पट्टाम्बरं यानि चाभरणानि सीमन्तरत्नप्रभृतीनि या वातिचित्रा कञ्चुलिका ताभिरञ्चितानि पूजितान्यङ्गानि यस्यास्ताम् । गोरोचनाया रुचिं विगर्हेति न्यक्करोतीति तादृशी गौरिमा पीतत्वं यस्यास्ताम् ॥

धूर्ते व्रजेन्द्रतनये तनु सुष्ठु वाम्यं
मा दक्षिणा भव कलङ्किनि लाघवाय ।
राधे गिरं शृणु हितामिति शिक्षयन्तीं
देवीं गुणैः सुललितां ललितां नमामि ॥ ४ ॥

**धूर्ते इति ।** हे राधे, हे कलङ्किनि, त्वं धूर्ते व्रजेन्द्रतनये दक्षिणा मा भव सारल्यं न कुरु । किंतु सुष्ठु वाम्यं वक्रिमाणं तनु विस्तारय । दाक्षिण्यं ते लाघवाय भवेत् । हितां गिरं मत्तः शृण्विति तां शिक्षयन्तीमुपदिशन्तीम् ॥

राधामभि व्रजपतेः कृतमात्मजेन
कूटं मनागपि विलोक्य विलोहिताक्षीम् ।
वाग्भङ्गिभिस्तमचिरेण विलज्जयन्तीं
देवीं गुणैः सुललितां ललितां नमामि ॥ ५ ॥

**राधेति ।** राधामभिलक्षीकृत्य व्रजपतेरात्मजेन कृतं मनागल्पमपि कूटं वञ्चनमालोक्य लोहिताक्षीमरुणनेत्राम् । कुपितामित्यर्थः । तं व्रजपतेरात्मजं वाग्भङ्गिभिः सत्यवाक्सरलो विशुद्धप्रणयी त्वमिति व्यञ्जकवाक्यैरचिरेण त्वरया विलज्जयन्तीम् ॥

वात्सल्यवृन्दवसतिं पशुपालराज्ञ्याः
सख्यानुशिक्षणकलासु गुरुं सखीनाम् ।
राधाबलावरजजीवितनिर्विशेषां
देवीं गुणैः सुललितां ललितां नमामि ॥ ६ ॥

**वात्सल्येति ।** पशुपालराज्ञ्याः श्रीयशोदाया वात्सल्यवृन्दवसतिम् । सखीनां विशाखादीनां सख्यानुशिक्षणकलासु गुरुम् । ताः सख्यपरिपाटीमुपदिशन्तीमित्यर्थः । राधा च बलावरजः श्रीकृष्णस्तौ जीवितनिर्विशेषावात्मभूतौ यस्यास्ताम् । तयोर्जीवितनिर्विशेषामिति वा ॥

यां कामपि व्रजकुले वृषभानुजायाः
प्रेक्ष्य स्वपक्षपदवीमनुरुध्यमानाम् ।

सद्यस्तदिष्टघटनेन कृतार्थयन्तीं
देवीं गुणैः सुललितां ललितां नमामि ॥ ७ ॥

**यामिति** । यां कामपि युवतिं वृषभानुजायाः श्रीराधायाः स्वपक्षपदवीमनुलक्षीकृत्य रुध्यमानां वश्यां प्रेक्ष्य सद्यस्तदैव तदिष्टघटनेन तदभीष्टप्रापणेन तां कृतार्थयन्तीं पूर्णाभीष्टां कुर्वतीम् ॥

राधाव्रजेन्द्रसुतसंगमरङ्गचर्यां
वर्यां विनिश्चितवतीमखिलोत्सवेभ्यः ।
तां गोकुलप्रियसखीनिकुरम्बमुख्यां
देवीं गुणैः सुललितां ललितां नमामि ॥ ८ ॥

**राधेति** । राधाव्रजेन्द्रसुतयोः संगमेन या रङ्गचर्या विनोदक्रिया तामखिलोत्सवेभ्यो वर्यां श्रेष्ठां विनिश्चितवतीम् । तत्सिद्धये सदोद्यतामित्यर्थः । तामित्यादि प्रकटार्थम् ॥

अष्टकपाठफलमाह—

नन्दन्नमूनि ललितागुणलालितानि
पद्यानि यः पठति निर्मलदृष्टिरष्टौ ।
प्रीत्या विकर्षति जनं निजवृन्दमध्ये
तं कीर्तिदापतिकुलोज्ज्वलकल्पवल्ली ॥ ९ ॥

**नन्दन्निति** । ललिताया गुणैर्वर्णितैर्लालितानि पद्यानि । कीर्तिदापतेर्वृषभानोः कुलं वंशमुज्ज्वलयति तादृशी कल्पवल्ली श्रीराधादेवी । कल्पवल्लीत्यनेन तदभीष्टफलदानक्षमत्वं व्यज्यते ॥ इति ललिताष्टकं व्याख्यातम् ॥

---

श्रीयमुनायै नमः ।

विशाखोरसि या विष्णोर्यस्यां विष्णुर्जलात्मनि ।
नित्यं निमज्जति प्रीत्या तां सौरीं यमुनां स्तुमः ॥

अथ श्रीविशाखास्तोत्रं व्याचख्याणः श्रीयमुनावपुरिति यमुनास्तुत्या तत्स्तुतिः सिध्यतीति तां स्तौति—**भ्रातुरित्यादिना** ।

भ्रातुरन्तकस्य पत्तनेऽभिपत्तिहारिणी
प्रेक्षयातिपापिनोऽपि पापसिन्धुतारिणी ।
नीरमाधुरीभिरप्यशेषचित्तबन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ १ ॥

**भ्रातुरिति ।** अरविन्दबन्धोः सूर्यस्य नन्दिनी कन्या श्रीयमुना सर्वदा मां पुनातिति संबन्धः । कीदृशी । अन्तकस्य धर्मराजस्य भ्रातुरग्रजस्य पत्तने नगरेऽभिपत्तिं प्राप्तिं हरत्यपनयत्याश्रिता सतीति सा । शरणागतसंत्राणनिपुणेति तन्नामस्तोत्रे । प्रेक्षया दर्शनमात्रेणातिपापिनोऽपि जनस्य पापसिन्धुतारिणी महापापसागरात्तं तारयति तस्य पापानि विनाशयतीति सा । महापातकभेषजेति तन्नामस्तोत्रे । नीरमाधुरीभिर्वारिशोभाभिरप्यशेषाणां सर्वेषां देवमानवादीनां चित्तानि बध्नाति वशयतीति सा ॥

हारिवारिधारयाभिमण्डितोरुखाण्डवा
पुण्डरीकमण्डलोद्यदण्डजालिताण्डवा ।
स्नानकामपामरोग्रपापसंपदन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ २ ॥

**हारीति ।** हारिणी मनोज्ञा या वारिधारा तयाभिमण्डितमुरु महत् खाण्डवं तन्नामकमिन्द्रस्य वनं यया सा । पुण्डरीकमण्डलेषु शुभ्रकमलवृन्देषूद्यन्ति अण्डजालीनां खञ्जनादिपक्षिश्रेणीनां ताण्डवानि यस्यां सा । स्नानकामानां स्नातुमिच्छतां न तु कृतस्नानानां पामराणां जनानां या उग्रपापसंपत्तीव्रपापराशिस्तामन्धयति क्षीणदृष्टिं करोतीति ताम् । यत्स्नानेच्छामात्रेण महापातकानि विशीर्यन्त इति भावः ॥

शीकराभिमृष्टजन्तुदुर्विपाकमर्दिनी
नन्दनन्दनान्तरङ्गभक्तिपूरवर्धिनी ।
तीरसंगमाभिलाषिमङ्गलानुबन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ३ ॥

**शीकरेति ।** शीकरेण जलकणेनाभिमृष्टस्य जन्तोः प्राणिनो दुर्विपाकं दुष्कर्मफलं विमर्दयति विनाशयतीति सा । 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । नन्दनन्दनस्यान्तरङ्गं भक्तिपूरं रागात्मिकां भक्तिधारां वर्धयतीति सा । तीरसंगमं तटनिवासं योऽभिलषति वाञ्छति न तु तत्तीरे निवासस्तस्य जनस्य मङ्गलानि कल्याणान्यनुबध्नाति करोतीति सा ॥

द्वीपचक्रवालजुष्टसप्तसिन्धुभेदिनी
श्रीमुकुन्दनिर्मितोरुदिव्यकेलिवेदिनी ।
कान्तिकन्दलीभिरिन्द्रनीलवृन्दनिन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ४ ॥

**द्वीपेति ।** द्वीपानां चक्रवालेन सप्तकेन जुष्टं सेवितं यत्सप्तसिन्धु समुद्रसप्तकं तद्भेत्तुं शीलं यस्याः सा । सप्तसागरसंगतेति तन्नामस्तोत्रे । सिन्धूभिन्दतीयं चक्रवत्परिवर्तते

न लभ्यनदीवत्तेषु लीयत इत्यविचिन्त्योऽस्या महिमा । श्रीमुकुन्देन निर्मिताः प्रकटिता या उर्व्यां दिव्याः केलयस्ता वेदयितुं शीलं यस्याः सा । यदाश्रितानां ताः केलयः प्रकाशन्त इत्यर्थः । कान्तीति प्रकटार्थम् । 'नीलोत्पलदलश्यामा' इति तन्नामस्तोत्रे । यत्तु जले रूपं शुक्लमेव यमुनाजलं तु भूमिनीलिमसंक्रमान्नीलमुच्यते । वस्तुतस्तु शुक्लरूपवदेव तन्मन्तव्यं नभसि विक्षिप्ते तत्र शुक्लिमोपलम्भादिति तार्किकाः कल्पयन्ति, तदेतेन निरस्तम् । अविचिन्त्ये वस्तुनि तर्कानवचारात् । अतस्तन्नामस्तोत्रे 'कालिन्दी कालसलिला' इति स्मर्यते । नभसि विक्षिप्ते तदम्बुनि शुक्लिमोपलम्भस्तु नक्षत्रभाहेतुकः शक्यो वक्तुम् ॥

माथुरेण मण्डलेन चारुणाभिमण्डिता
प्रेमनद्धवैष्णवाध्ववर्धनाय पण्डिता ।
ऊर्मिदोर्विलासपद्मनाभपादवन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ५ ॥

**माथुरेणेति** । अन्यानि गिरिनगरवनानि स्वशोभया मण्डयन्ती चारुणा मनोज्ञेन माथुरेण मण्डलेन मण्डिता । लब्धातिशोभेत्यर्थः । प्रेम्णा नद्धस्य वैष्णवाध्वनो रागानुगभक्तिसंप्रदायस्य वर्धनाय प्रचाराय पण्डिता निपुणा । यत्स्नानेन सा भक्तिः स्वयमभ्युदयतीत्यर्थः । ऊर्मिरूपौ यौ भुजौ तद्विलासैः पद्मनाभस्य हरेः पादौ वन्दितुं शीलं यस्याः सा । एवमवर्णि श्रीशुकेन—'नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः । आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादकमलं कमलोपहाराः ॥' इति ॥

रम्यतीररम्भमाणगोकदम्बभूषिता
दिव्यगन्धभाक्कदम्बपुष्पराजिरूषिता ।
नन्दसूनुभक्तसंघसंगमाभिनन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ६ ॥

**रम्येति** । रम्ययोस्तीरयो रम्भमाणं हम्बाध्वनिकारि यद्गोकदम्बं तेन भूषिता । दिव्यं गन्धं भजन्ति याः कदम्बपुष्पराजयस्ताभी रूषिता । युक्तेत्यर्थः । नन्दसूनोर्गोपालदेवस्य ये भक्तसंघास्तेषां संगमेनाभिनन्दिनी प्रहर्षवती ॥

फुल्लपक्षमल्लिकाक्षहंसलक्षकूजिता
भक्तिविद्धदेवसिद्धकिन्नरालिपूजिता ।
तीरगन्धवाहगन्धजन्मबन्धरन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ७ ॥

**फुल्लेति** । फुल्लपक्षाः प्रहृष्टा ये मल्लिकाक्षा हंसास्तेषां लक्षैः कूजिता शब्दिता । 'आताम्रे राजहंसाश्च धार्तराष्ट्राः सितेतरैः । मलिनैर्मल्लिकाक्षाश्च कथ्यन्ते चरणाननैः ॥'

इति हलायुधः। राजहंसादीनामुपलक्षणमेतत्। भक्तिविद्वानां हरिसेवानिरंतमनसां देवादीनामालिभिः पूजिता सेविता। तीरयोर्यो गन्धवाहः पवनस्तस्य गन्धेन लेशेनापि स्पृष्टेन संबन्धेन वा जन्मबन्धं रन्धयति तच्छीला। 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः' इत्यमरः। 'गन्धः संबन्धलेशयोः' इति हैमः॥

चिद्विलासवारिपूरभूर्भुवःस्वरापिनी
कीर्तितापि दुर्मदोरुपापमर्मतापिनी।
बल्लवेन्द्रनन्दनाङ्गरागभङ्गगन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी॥ ८॥

**चिद्विलासेति**। चिद्विलासो ब्रह्मविद्यात्मको यो वारिपूरस्तेन भूर्भुवःस्वरात्मकाँस्त्रींल्लोकानाप्रोतीति सा। सप्तसिन्धुवद्भूरादिलोकानपि भित्त्वा गच्छतीत्यर्थः। तन्नामस्तोत्रे 'ब्रह्मविद्या ब्राह्मी' इति नामद्वयम्। कीर्तितोच्चारितैव सती दुर्मदानामुरुपापानां मर्माणि तापयति दहतीति सा। अतः 'तापिनी यम(मु)ना यामी' इति तन्नामस्तोत्रे। बल्लवेन्द्रनन्दनस्य कृष्णस्य योऽङ्गरागभङ्गश्चतुःसमचर्चाधावनं तेन गन्धिनी सुरभिता॥

अष्टकपाठस्य कृष्णप्रेमाणं फलं याचते—

तुष्टबुद्धिरष्टकेन निर्मलोर्मिचेष्टितां
त्वामनेन भानुपुत्रि सर्वदेववेष्टिताम्।
यः स्तवीति वर्धयस्व सर्वपापमोचने
भक्तिपूरमस्य देवि पुण्डरीकलोचने॥ ९॥

**तुष्टेति**। हे भानुपुत्रि श्रीयमुने, यो जनस्तुष्टबुद्धिः सन्ननेनाष्टकेन त्वां स्तवीति। अस्य जनस्य पुण्डरीकलोचने नन्दसूनौ भक्तिपूरं त्वं वर्धयस्व। कीदृशे। सर्वमविद्यापर्यन्तं पापं मोचयत्युपनयतीति तस्मिन्। हे देवि द्योतमाने। त्वां कीदृशीम्। निर्मला ऊर्मय एव चेष्टितानि चेष्टा यस्यास्ताम्। सर्वैर्देवैर्वेष्टितामावृताम्। तूणकमस्मिन्नष्टके छन्दो बोध्यम्। इति यमुनाष्टकं व्याख्यातम्॥

---

श्रीमथुरास्तवः।

श्रीमथुरायै नमः।

मुक्तेर्गोविन्दभक्तेर्वितरणचतुरं सच्चिदानन्दरूपं
यस्यां विद्योति विद्यायुगलमुदयते तारकं पारकं च।
कृष्णस्योत्पत्तिलीलाखनिरखिलजगन्मौलिरत्नस्य सा ते
वैकुण्ठोरुप्रतिष्ठा प्रथयतु मथुरा मङ्गलानां कलापम्॥ १॥

तव स्तवे मथुरे देवि टीकां करोम्यहं रुचिरार्थमगाये(धे)।
समुद्धर प्रयता पापिनं मां कृपावती प्रबला चासि गीता ॥

अथ मथुरां स्तौति—**मुक्तेरित्यादिना**। सा मथुरा ते तव मङ्गलानां कल्याणानां कलापं वृन्दं प्रथयतु तनोतु। मङ्गलप्रथनक्षमान्गुणान्विनिर्दिशंस्तां विशिनष्टि—यस्यां तारकं पारकं चेति विद्यायुगलमुदयते सर्वदा चकास्ति। तद्युगलं कीदृशम्। मुक्तेर्गोविन्दभक्तेर्वितरणे दाने क्रमाच्चतुरं निपुणम्। पराख्यशक्तिरूपत्वात्सच्चिदानन्दरूपम्। अतो विद्योति परिभ्राजमानम्। अविद्यादहनक्षममित्यर्थः। पाद्मे पातालखण्डे—'उक्तोऽद्भुतश्च महिमा मथुराया जटाधर। मुनेर्भुवो वा सरितः प्रभावः केन वा विभो॥ कृष्णस्य वा प्रभावोऽयं संयोगस्य प्रतापवान्। ऋषीणां वा प्रभावश्च प्रभावो विष्णुतारके। तथा पारकविच्छक्तेरुभे तत्पुदकारके॥' इति पार्वत्या पृष्टो महादेवः प्राह—'न भूमिकाप्रभावश्च सरितो वा वरानने। तदेव शृणु भो देवि प्रभावो येन वर्तते॥ श्रीकृष्णमहिमासर्वचिच्छक्तेर्यः प्रवर्तते। तारकं पारकं तस्य प्रभावो यममाहृतः। तारकाज्जायते मुक्तिः प्रेमभक्तिस्तु पारकात्॥' इति। पुनः कीदृशीत्याह—**कृष्णस्येति**। 'मथुरेति सुविख्याता तस्मिन्क्षेत्रं परं मम। सुरम्या च सुशम्या च जन्मभूमिः प्रिया मम॥ सर्वेषां देवि तीर्थानां माथुरं परमं महत्। कृष्णेन क्रीडितं यत्र तच्च शुद्धं पदे पदे॥' इत्यादिकादादिवाराहवाक्यात्। कीदृशस्येत्याह—**अखिलेति**। अखिलजगन्मौलयः सर्वमूर्धावतंसा विधिरुद्रादयस्तेषां रत्नस्य। तैः सर्वैः स्वस्वमूर्धसु रत्नवद्धार्यमाणस्य तेषां प्रभोरित्यर्थः। पुनः कीदृशीत्याह—**वैकुण्ठेति**। 'अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी। दिनमेकं निवासेन पुनर्जन्म न विद्यते॥ एवं सप्तपुरीणां तु सर्वोत्कृष्टं तु माथुरम्। श्रूयतां महिमा देवि वैकुण्ठभुवनोत्तम॥' इति पाद्मे पातालखण्डवचनात्। एतेन भूमिसरिन्महिमनिषेधो निवृत्तः। वक्तुर्मे(र)त्र द्वयमहिमोक्तौ तात्पर्यात्। चतुर्थपद्यभाष्ये भूमिमहिम्नो वाच्यत्वाच्च तद्द्वयाश्रयत्वेन तदुग्राहाच्च॥

अथास्या मधुपुर्या जन्मादिलीलाकरत्वेन पारेकाधारत्वेन च स्वेतराभ्यः श्रेष्ठतां व्यञ्जयन्प्रेमभक्तिमेव त्वा(स्वा)भीष्टामाशास्ते—

कोटीन्दुस्पष्टकान्ती रभसयुतभवक्लेशयोधैरयोध्या
मायाविन्त्रासिवासा मुनिहृदयमुषो दिव्यलीलाः स्तुवन्ती।
साशीः काशीशमुख्यामरपतिभिरलं प्रार्थितद्वारकार्या
वैकुण्ठोद्गीतकीर्तिर्दिशतु मधुपुरी प्रेमभक्तिश्रियं वः॥ २॥

**कोटीति**। मधुपुरी वो युष्मभ्यं प्रेमभक्तिश्रियं दिशतु ददातु। कीदृशी। कोटीन्दुभ्यश्चन्द्रकोटेरपि स्पष्टायि(धि)का कान्तिर्द्युतिर्यस्याः सा। 'कोटिः स्त्री धनुषोदग्रे संख्याभेदप्रकर्षयोः' इति मेदिनीकरः। रभसे(सा) युतैर्वेगवद्भिर्भवक्लेशरूपैर्योधैरयोध्या योद्धुमशक्या। पारकप्रभावात्ते यद्वाशिषु न प्रभवन्तीत्यर्थः। मायामविद्यां मायाविनो

या देवान् वित्रासयति त्रासयति च वासो यस्याः सा। यद्वा शिशुमायाप्रत्यूहकारकास्ते मायाविनश्च न प्रभवती(न्ती)त्यर्थः। मुनिहृदयमुषः श्रीशुकादिचित्तहराः कृष्णस्य लीलाः स्तुवन्ती लभमाना। ताः प्रकाशयन्तीत्यर्थः। साशीर्धृतस्वोपासककामना। काशीशमुख्यैः शिवाद्यैरमरपतिभिः प्रार्थितं द्वारकार्यं प्रतीहारत्वं यस्याः सा। भूतेश्वरादयो यस्यां द्वारपालाः सन्तीत्यर्थः। वैकुण्ठेन भगवता वराहेणोद्गीता सर्वाधिक्येनोक्ता कीर्तिर्मोक्षदत्वादिलक्षणगुणख्यातिर्यस्याः सा। पक्षे कोटिरटनी तद्वानिन्दुरर्धचन्द्रः स इव स्पष्टा कान्तिः काञ्ची यस्यां सा। अर्धचन्द्रात्पूर्णचन्द्रस्येव कान्तिपुरीतो मधुपुर्या विशेषः। श्रीरामराजधानी खलु तद्रूपैर्योधैरल्पं योध्ये स योध्या। तदत्वेऽत्र नञ्। तद्वासिनां कष्टेन भावनिवृत्तिः। प्रेमभक्तिहेतुपारकसङ्गशून्येन तारकेन तस्याश्चिरसाध्यत्वादित्ययोध्यातो विशेषः। मायां गङ्गाद्वारपुरीं वित्रासयति वासो यस्याः सेति मायानिवासान्मधुपुरीनिवासो विस्मयीति ततोऽतिविशेषः। अवन्ती उज्जयिनी। सा तु मुनिहृदयमुषः कृष्णस्य दिव्यलीलाः स्वष्टितगुरुकुलवासकाष्ठाहरणादिर्व्यापारस्तं करोत्याचष्टे वेति णिच्। 'तदन्तात्क्विप्' इति कर्तरि क्विप्। णाविष्टभावाट्टिलोपः। एवं च ततो विशेषाः। साशीर्भिः सकामैः काशीशमुख्यैरमरपतिभिः प्रार्थितेति काश्याश्चातिविशेषः। द्वारकायाश्चार्या मान्येति ततोऽपि विशेषः। पश्चात् कर्मधारयः। अतः—**वैकुण्ठेति**॥

ननु यथा यज्ञः प्रतिपदोक्तं स्वर्गादिफलमकामाय न ददाति, एवं मथुराप्यकामाय ते मुक्तिं न दद्यात्। ततश्च प्रकृतिस्पर्शानुच्छेद इति चेत्तत्राह—

बीजं मुक्तितरोरनर्थपटलीनिस्तारकं तारकं
धाम प्रेमरसस्य वाञ्छितधुरासंपारकं पारकम्।
एतद्यत्र निवासिनामुदयते चिच्छक्तिवृत्तिद्वयं
मथ्नातु व्यसनानि माथुरपुरी सा वः श्रियं च क्रियात्॥ ३॥

**बीजमिति**। सा माथुरपुरी वो युष्माकं व्यसनानि पापानि लिङ्गशरीरपर्यन्तानि मथ्नातु दहतु श्रियं च प्रेमसंपदं क्रियात्। तदुभयविधानसामर्थ्याय विशिनष्टि—यत्र माथुरपुर्यां निवासिनां प्राणिनामेतच्चिच्छक्तिवृत्तिद्वयमुदयते। चिच्छक्तिर्हरेः परा शक्तिस्तद्वृत्तिद्वयं संविदाह्लादरूपमंशद्वयं स्वतस्तद्वासिभिरुपलभ्यत इति। ततश्चानिच्छास्पृष्टावह्निन्यायेन लिङ्गदाहसंभवात्करकलितैव मुक्तिरिति न कापि क्षतिः। तद्द्वयं किं तत्राह—**तारकं पारकं चेति**। तारकं षडर्णं श्रीरामदैवतम्। तत्कीदृक्। मुक्तितरोर्बीजं प्रकाशकम्। ननु सति बन्धे कुतो मुक्तिस्तत्राह—अनर्थपटल्याः प्रकृतेर्निस्तारकं तस्या निवर्तकमित्यर्थः। पारकं चाष्टादशार्णं श्रीकृष्णदैवतम्। तत्कीदृक्। प्रेमरसस्य धाम तत्प्रकाशकम्। वाञ्छितधुरायाः कृतिवश्यतायाः संपारकं पूरयितृ। पाद्मे पातालखण्डे भगवद्वाक्यम्—'उभौ मन्त्रावुभे नाम्नी मदीयप्राणवल्लभे। नाना नामानि मन्त्राश्च तन्मध्ये सारमुच्यते॥ अज्ञातमथवा ज्ञातं तारकं जपते यदि। यत्र तत्र भवेन्मृत्युः काश्यां तु फलमा-

दिशेत् ॥ वर्तते यस्य जिह्वाग्रे स पुमाँल्लोकपावनः । छिनत्ति सर्वपापानि काशीवासफलं लभेत् ॥ इति तारकमन्त्रोऽयं यस्तु काश्यां प्रवर्तते । स एव माथुरे देवि वर्ततेऽत्र वरानने ॥ अथ तारकमुच्येत यथामन्त्रं यथाबलम् । पारकं यत्र वर्तेत रु(ऋ)द्धिसिद्धिसमागमः ॥ पूज्यो भवति त्रैलोक्ये शतायुर्जायते पुमान् । अष्टसिद्धिसमायुक्ते वर्तते यत्र पारकम् ॥ पारकं यस्य जिह्वाग्रे तस्य संतोषवर्तिता । परिपूर्णो भवेत्कामः सत्यसंकल्पता तथा ॥ द्विविधप्रेमभक्तिस्तु श्रुतं दृष्टं तथैव च । अखण्डपरमानन्दस्तद्गतो ज्ञेयलक्षणः ॥ अश्रुपातः क्वचिन्नृत्यं क्वचित्प्रेमातिविह्वलः ॥' इत्यादि ॥

तारकाद्याधारतया भगवज्जन्मादिलीलाखनित्वेन वैकुण्ठोत्कृष्टतया च श्रीमधुपुर्याः सर्वपुरीभ्यः श्रैष्ठ्यं द्वितीयेन पद्येन व्यञ्जितं तदिदानीमभिदधाति—

अद्यावन्ति पतद्ग्रहं कुरु करे माये शनैर्वीजय
च्छत्रं काञ्चि गृहाण काशि पुरतः पादूयुगं धारय ।
नायोध्ये भज संभ्रमं स्तुतिकथां नोद्गारय द्वारके
देवीयं भवतीषु हन्त मथुरा दृष्टिप्रसादं दधे ॥ ४ ॥

**आद्येति** । हे अवन्त्युज्जयिनि, त्वमद्य पतद्ग्रहं करे कुरु चर्विततांबूलनिक्षेपपात्रं हस्तेन गृह्णती तिष्ठ । हे माये, त्वमद्य वालव्यजनेन शनैर्वीजय । हे काञ्चि, त्वमद्य स्वर्णदण्डशोभितं छत्रं गृहाण । हे काशि, त्वमद्य पादूयुगं पादुकाद्वयं पुरतो धारय । हे अयोध्ये, त्वमद्य संभ्रमं भयं न भज । हे द्वारके, त्वमद्य स्तुतिकथां नोद्गारय न प्रकटय । यतो भवतीषु सर्वासु किंकरीषु सखीषु च इयमतिसौशील्येन कारुण्येन प्रसिद्धा देवी कृताभिषेका हरेर्महाराजस्य पत्नी मथुरा दृष्टिप्रसादमनुग्रहावलोकं दधे । भवत्सेवयातिप्रसन्ना सती धत्ते(?)त्येत्यर्थः । हन्तेति हर्षे । अत एवमुक्तमादिवाराहे— 'काश्यादिपुर्यो यदि सन्ति लोके तासां तु मध्ये मथुरैव धन्या । या जन्ममौञ्जीव्रत-मृत्युदाहैर्नृणां चतुर्धा विदधाति मोक्षम् ॥' इति । पाद्मे च पातालखण्डे—'एवं सप्तपुरीणां तु सर्वोत्कृष्टं तु माथुरम् ।' इति । अतस्तस्यामवन्त्यादिपुरीसादृश्यदर्शनं दोषत्वेनोक्तमुत्तरखण्डे—'मथुरायां प्रकुर्वन्ति पुरीसाधारणीदृशम् । ये नरास्ते तु विज्ञेया पापराशिभिरन्विताः ॥' इति । श्रुतिस्त्वस्या भगवद्रूपतां प्रपञ्चास्पष्टतां चाह—साक्षाद्ब्रह्म गोपालपुरीति । चक्रेण रक्षिता हि वै मथुरेति । स्कान्दे च—'तन्मङ्ग(ण्ड)लं माथुरं हि विष्णुचक्रोपरि स्थितम् । पद्माकारं सदा तत्र वर्तते शाश्वतं पदम् ॥' इति । इति मथुरास्तवो व्याख्यातः ॥

---

श्रीगोवर्धनाष्टकम् ।

नमः श्रीगोवर्धनाय ।

गोविन्दास्योत्तंसितवंशीक्वणितोद्य-
ल्लास्योत्कण्ठामत्तमयूरव्रजवीत ।

राधाकुण्डोत्तुङ्गतरङ्गाङ्कुरिताङ्ग
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ १ ॥

यः पुष्णन्धवलास्तृणोदकभरैर्मैत्राणि च प्रेक्षिणां
चित्राभिर्मणिकान्तिभिर्हरिपदस्पर्शातिहर्षाकुलः ।
संच्छिन्दन्दृषदस्तिभिः पविमुखं गोवर्धनाख्यामधा-
त्तं वन्दे···वाञ्छितप्रदमहं शैलाधिराजं मुदा ॥

अथ श्रीगोवर्धनाद्रिं स्तौति—**गोविन्देत्यादिभिः**। हे गोवर्धन, त्वं मे प्रत्याशां वाञ्छां पूर्णां कुरु। गोविन्दस्यास्येन मुखेनोत्तंसिता या विभूषिता या वंश्याः क्वणितेन ध्वनिना उद्यन्ती या लास्योत्कण्ठा तया मत्तैर्मयूरव्रजैर्वीत वेष्टित हे। राधाकुण्डस्योत्तुङ्गैस्तरङ्गैः कल्लोलैरङ्कुरितानि हरिततृणवन्त्यङ्गानि यस्य हे तादृश ॥

यस्योत्कर्षाद्विस्मितधीभिर्व्रजदेवी-
वृन्दैर्वर्यं वर्णितमास्ते हरिदास्यम् ।
चित्रैर्युञ्जंस्तद्युतिपुञ्जैरखिलाशां
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ २ ॥

**यस्योत्कर्षादिति**। विस्मितधीभिर्व्रजदेवीवृन्दैर्वर्यं हरिदास्यं वर्णितमास्ते। चित्रैर्द्युतिपुञ्जैश्चन्द्रकान्तेन्द्रनीलकुरुविन्दादिशिल्पानां कान्तिभिर्भेरैरखिलाशां सर्वां दिशं युञ्जन् स त्वमित्यन्वयः ॥

विन्दद्भिर्यो मन्दिरतां कन्दरवृन्दैः
कन्दैश्चेन्दोर्बन्धुभिरानन्दयतीशम् ।
वैदूर्याभैर्निर्झरतोयैरपि सोऽयं
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ३ ॥

**विन्दद्भिरिति**। यो मन्दिरतां विन्दद्भिर्मणिचित्रगृहतुल्यैः कन्दरवृन्दैरिन्दोर्बन्धुभिरत्युज्वलैरतिस्वादुभिः कन्दैः। वैदूर्याभैः स्वच्छश्यामैर्निर्झरतोयैश्च ईशं सपरिकरं स्वामिनं कृष्णमानन्दयति सत्करोत्यातिथ्येन सोऽयं त्वमित्यन्वयः। एवं वर्णितं श्रीगोपीभिः—'हन्तायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरण(?)स्पर्शप्रमोदः। मानं तनोति सह गोगणयोस्तयोर्यत्पानीयसूयवसकन्दरकन्दमूलैः ॥' इति ॥

शश्वद्विश्वालंकरणालंकृतिमेध्यैः
प्रेम्णा धौतैर्धातुभिरुद्दीपितसानो ।
नित्याक्रन्दत्कन्दर वेणुध्वनिहर्षा-
त्प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ४ ॥

**शश्वदिति।** धातुभिर्मनःशिलादिभिः पीतरक्तनीलवर्णैर्गैरिकैरुद्दीपितानि सानूनि यस्य हे तादृश । कीदृशैः । विश्वालंकरणस्य श्रीगोपालदेवस्य हरेः शश्वव(द)लंकृत्या मेध्यैर्विशुद्धैः । भगवदुपयुक्तानि हि वस्तूनि पवित्राणि भवन्ति । तस्यालंकृतये लभ्यैरिति वा । 'मेध संगमे च' इति धातुपाठः । प्रेम्णा धौतैः प्रक्षालितैः । वेणूनां कीचकानां ये ध्वनयस्तद्रूपाद्धर्षान्नित्यमाक्रन्दन्तः कन्दरा यस्य हे तादृश । सर्वदा हरिप्रेममत्तेत्यर्थः ॥

प्राज्या राजिर्यस्य विराजत्युपलानां
कृष्णेनासौ संततमध्यासितमध्या ।
सोऽयं बन्धुर्बन्धरधर्मा सुरभीणां
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ५ ॥

**प्राज्येति।** यस्य तवोपलानां गण्डशैलानां प्राज्या भूयसी राजिः श्रेणी कृष्णेन संततमध्यासितमध्या विराजति । असौ प्रसिद्धा । सोऽयं त्वमित्यन्वयः । कीदृशस्त्वम् । सुरभीणां बन्धुः पालकत्वात् । अतो बन्धुरः शोभनो धर्मो यस्य सः ॥

निर्धुन्वानः संहृतिहेतुं घनवृन्दं
जित्वा जम्भारातिमसंभावितबाधम् ।
स्वानां वैरं यः किल निर्यापितवान्सः
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ६ ॥

**निर्धुन्वान इति।** योऽसंभावितबाधं जम्भारातिमिन्द्रं जित्वा स्वानां ज्ञातीनां गिरीणां वैरं निर्यापितवान् । ननु कथं गोवर्धनेन जम्भारातेर्जय इत्याशङ्कायां विशिनष्टि— संहृतिहेतुं जगद्विप्लवकमिन्द्रप्रेरितं घनवृन्दं निर्धुन्वानो निरस्यन्निति ॥

बिभ्राणो यः श्रीभुजदण्डोपरि भर्तु-
श्छत्रीभावं नाम यथार्थं स्वमकार्षीत् ।
कृष्णोपज्ञं यस्य मखस्तिष्ठति सोऽयं
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ७ ॥

**बिभ्राण इति।** यो भर्तुः स्वामिनो गोपालस्य श्रीभुजदण्डोपरि छत्रीभावं बिभ्राणो धारयन् स्वं नाम यथार्थमन्वर्थमकार्षीच्चकार । छत्रीभावं छत्रतां श्लेषेण छत्रधारितां गिरिराजतामित्यर्थः । गाः पशून् गां स्वस्तुतिवाचं वर्धयति पूरयतीति यां व्रजं विनाशयामीतीन्द्रमुक्तं व्रजं च वर्धयति छिनत्तीति च व्युत्पत्त्या गोवर्धनसंज्ञां स्वार्थिकां कृतवानित्यर्थः । 'दृग् दृष्टिः' इत्यादि हलायुधकोषात् । 'वर्धकपूर्तिच्छिदोः' इति कविकल्पद्रुमे । यस्य मखो यज्ञः कृष्णोपज्ञं तिष्ठति कृष्णस्योपज्ञा कृष्णोपज्ञं कृष्णेनादावपज्ञायत इत्यर्थः । 'उपज्ञोपक्रमे तदाद्याचिख्यासायाम्' इति सूत्रात् क्लीबत्वम् । उपज्ञान्त उपक्रमान्तश्च तत्पु-

रुषः क्लीबं स्यात्तयो रुपज्ञायमानोपक्रम्यमानयोरादिः प्राथम्यं चेदाख्यातमिष्यत इति सूत्रार्थः ॥

गान्धर्वीयाः केलिकलाबान्धव कुञ्जे
क्षुण्णैस्तस्याः कङ्कणहारैः प्रयताङ्ग ।
रासक्रीडामण्डितयोपत्यकयाढ्य
प्रत्याशां मे त्वं कुरु गोवर्धन पूर्णाम् ॥ ८ ॥

**गान्धर्वीया इति** । हे गान्धर्वीयाः केलिकलाबान्धव । तत्साहायकरेत्यर्थः । कुञ्जे क्षुण्णैर्निपतितैस्तस्याः कङ्कणहारैः प्रयताङ्ग । भूषितदेहेत्यर्थः । रासक्रीडामण्डितया उपत्यकयाढ्य युक्त हे । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः ॥

अष्टकपाठफलं प्रार्थयति—

अद्रिश्रेणीशेखर पद्याष्टकमेत-
त्कृष्णाम्भोदप्रेष्ठ पठेद्यस्तव देही ।
प्रेमानन्दं तुन्दिलयन्क्षिप्रममन्दं
तं हर्षेण स्वीकुरुतां ते हृदयेशः ॥ ९ ॥

इति मत्तमयूराख्यं श्रीगोवर्धनस्तोत्रम् ॥

**अद्रीति** । हे अद्रिश्रेणीशेखर हे कृष्णाम्भोदप्रेष्ठ, यो देही जीवस्तवैतत्पद्याष्टकं पठेत्तं ते हृदयेशः कृष्णः स्वीयतया गृह्णातु हर्षेण प्रीत्या । किं कुर्वन्नित्याह—स्वस्मिन्नमन्दं प्रेमानन्दं क्षिप्रं तुन्दिलयन् पुष्णन्निति त्वत्कृपयेदमस्तु ॥

**मत्तमयूराख्यमिति** । तल्लक्षणं च—'वेदैरन्ध्रैर्म्तौ जगा मत्तमयूरः' इत्येतत् । इति प्रथमं गोवर्धनाष्टकं व्याख्यातम् ॥

---

नीलस्कन्धोज्ज्वलरुचिभरैर्मण्डिते बाहुदण्डे
छत्रच्छायां दधदघरिपोर्लब्धसप्ताहवासः ।
धारापातग्लपितमनसां रक्षिता गोकुलानां
कृष्णप्रेयान्प्रथयतु सदा शर्म गोवर्धनो नः ॥ १ ॥

**नीलेति** । गोवर्धनो गिरिः सदा नोऽस्माकं शर्म सुखं प्रथयतु विस्तारयतु । कीदृशः । अघरिपोः कृष्णस्य बाहुदण्डे छत्रस्येव च्छायां कान्तिं दधत्सन् लब्धसप्ताहवासः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । बाहुदण्डे कीदृशीत्याह—**नीलेति** । पुनः कीदृशः । धारापातेन ग्लपितानि मनांसि येषां तादृशानां गोकुलानां रक्षिता त्राता ॥

भीतो यस्मादपरिगणयन्बान्धवस्नेहबन्धा-
न्सिन्धावद्रिस्त्वरितमविशत्पार्वतीपूर्वजोऽपि ।
यस्तं जम्भद्विषमकुरुत स्तम्भसंभेदशून्यं
स प्रौढात्मा प्रथयतु सदा शर्म गोवर्धनो नः ॥ २ ॥

**भीत इति**। पार्वतीपूर्वजोऽपि मैनाकोऽद्रिर्यस्माद्भीतः सन् बान्धवानां गिरीणां स्नेहबन्धानपरिगणयन्ननवेक्षमाणः सिन्धौ त्वरितमविशद्विलीनोऽभूत् । तं जम्भद्विषमिन्द्रं यो गोवर्धनः स्तम्भसंभेदशून्यं गर्वसंपर्करहितं दीनमकुरुत स प्रौढात्मा प्रगल्भचित्तः प्रथयत्वित्यन्वयः ॥

आविष्कृत्य प्रकटमुकुटाटोपमङ्गं स्थवीयः
शैलोऽस्मीति स्फुटमभिदधत्तुष्टिविस्फारदृष्टिः ।
यस्मै कृष्णः स्वयमरसयद्बल्लवैर्दत्तमन्नं
धन्यः सोऽयं प्रथयतु सदा शर्म गोवर्धनो नः ॥ ३ ॥

**आविरिति**। बल्लवैर्गोपैर्यस्मै गोवर्धनाय दत्तं निवेदितं चतुर्विधं भूर्यन्नं कृष्णोऽरसयदभक्षयत् सोऽयं प्रथयत्वित्यन्वयः । कृष्णः किं कुर्वन्नरसयदित्यत्राह—प्रकटो मुकुटाटोपो यत्र तादृशं स्थवीयोऽतिस्थूलमङ्गं वे(दे)हमाविष्कृत्य शैलोऽहमस्मीति स्फुटमभिदधत्कथयन्निति तस्य गिरावात्मता व्यज्यते । पुनः कीदृशः । तुष्टया विस्फारे विस्तीर्णे दृष्टि(ष्टी) नेत्रे यस्य सः ॥

अद्याप्यूर्जप्रतिपदि महान्भ्राजते यस्य यज्ञः
कृष्णोपज्ञं जगति सुरभीसैरिभीक्रीडयाढ्यः ।
शष्पालम्बोत्तमतटतया यः कुटुम्बं पशूनां
सोऽयं भूयः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ४ ॥

**अद्यापीति**। अद्याप्यधुनाप्यूर्जस्य कार्तिकस्य प्रतिपदि यस्य गोवर्धनस्य कृष्णोपज्ञं यज्ञः पूजाविधिर्महान् भ्राजते दीप्यते । 'बाहुलोर्जौ कार्तिककः' इत्यमरः । सुरभीणां गवां सैरिभीणां महिषीणां च क्रीडयाढ्यो विशिष्टः । 'महिषः सैरिभः' इति हलायुधः । शष्पानां(णां) बहुनिर्झरवारिशैत्योत्थभानां बालतृणानामालम्बा उत्तमास्तटा यस्य तत्तथा यः पशूनां कुटुम्बं भव(वह)ति सोऽयमित्यन्वयः ॥

कीदृशो गोवर्धन इत्याकाङ्क्षायां पुनर्विशिनष्टि—

श्रीगान्धर्वादयितसरसीपद्मसौरभ्यरत्नं
हृत्वा शङ्कोत्करपरवशैरस्वनं संचरद्भिः ।

अम्भःक्षोदप्रहरिककुलेनाकुलेनानुयातै-
र्वातैर्यु(र्जु)ष्टः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ५ ॥

**श्रीगान्धर्वेति** । वातैः पवनैर्यु(र्जु)ष्टः सेवित इति । वातैः कीदृशैः । श्रीगान्धर्वा च तद्दयितश्च कृष्णस्तयोः सरस्यौ कुण्डे तयोर्यानि पद्मानि तेभ्यः सौरभ्यरत्नं हृत्वा चोरयित्वा शङ्कोत्करपरवशैर्भयायत्तैः । अतोऽस्खनं यथा स्यात्तथा संचरद्भिर्गच्छद्भिः अम्भःक्षोदा वारिकणास्त एव प्रहरिकास्तेषां कुलेनानुयातैराक्रान्तैः । तत्कुलेन कीदृशेनेत्याह—**आकुलेनेति** । (?) जाग्रहोऽस्मान् वञ्चयित्वा रत्नान्येते नयन्तीति स्वामिभीतिव्यग्रेणेत्यर्थः । अत्र पद्मसौरभ्येति सुगन्धित्वमस्खनमिति मन्दत्वमम्भःक्षोदेति शीतलत्वं वातानां व्यज्यते । गिरेस्तत्सेवितत्वान्महाराजत्वं चेति ॥

पुनः कीदृशः ।

कंसारातेस्तरिविलसितैरातरानङ्गरङ्गै-
राभीरीणां प्रणयमभितः पात्रमुन्मीलयन्त्याः ।
धौतग्रावावलिरमलिनैर्मानसामर्त्यसिन्धो-
र्वीचिव्रातैः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ६ ॥

**कंसेति** । मानसामर्त्यसिन्धोर्मानसगङ्गाया वीचिव्रातैस्तरङ्गसमूहैर्धौता प्रक्षालिता ग्रावावलिः शिलावीथी यस्य सः । अमर्त्यसिन्धुर्देवनदी गङ्गेत्यर्थः । 'सिन्धुः स्रवन्ती तटिनी तरङ्गिणी नदी धुनी निर्झरिणी च निम्नगा' इति हलायुधः । कीदृशैरित्याह—**अमलिनैरिति** । दुग्धवदुज्ज्वलैरित्यर्थः । मानसामर्त्यसिन्धोः कीदृश्याः । तरिविलसितैर्नौक्रीडाभिराभीरीणां कंसारातेर्हरेः प्रणयं स्नेहमभित उन्मीलयन्त्याः प्रकटयन्त्याः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । कीदृशैः । आतरेण तरपण्येनानङ्गरङ्गो येभ्यस्तैः । 'आतरस्तरपण्यं स्यात्' इत्यमरः । स्मरविनोद एव येषु पारनयने पण्यमित्यर्थः । प्रणयं कीदृशमित्याह—**पात्रमिति** । कृष्णवश्यतायाः पात्रमभि(धि)करणमित्यर्थः । तन्माधुर्यामृतपानभावनं वा ॥

पुनः कीदृशः ।

यस्याध्यक्षः सकलहठिनामाददे चक्रवर्ती
शुल्कं नान्यद्व्रजमृगदृशामर्पणाद्विग्रहस्य ।
घट्टस्योच्चैर्मधुकररुचस्तस्य धामप्रपञ्चैः
श्यामप्रस्थः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ७ ॥

**यस्याध्यक्ष इति** । तस्य घट्टस्य पणकुट्टिमस्य धामप्रपञ्चैः कान्तिविस्तारैः श्यामप्रस्थो नीलसानुः । घट्टस्य कीदृशस्य । उच्चैर्मधुकररुचः । मरकतशिलामयस्येत्यर्थः । कस्य घट्टस्येति पृच्छायां तं विशिनष्टि—सकलहठिनां चक्रवर्ती श्रेष्ठः कृष्णो यस्याध्यक्षो ना-

यकः सन् यज्ञियघृतकुम्भशिरसां तेन पथा व्रजमृगदृशां विग्रहस्यार्पणादन्यच्छुल्कं पणं नाददे । विग्रहार्पणमेव पणं स्वीचक्र इत्यर्थः ॥

पुनः कीदृशः ।

गान्धर्वायाः सुरतकलहोद्दामतावावदूकैः
क्लान्तश्रोत्रोत्पलवलयिभिः क्षिप्तपिञ्छावतंसैः ।
कुञ्जैस्तल्पोपरि परिलुठद्वैजयन्तीपरीतैः
पुण्याङ्गश्रीः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ८ ॥

**गान्धर्वाया इति** । कुञ्जैः पुण्याङ्गश्रीश्चारुदेहशोभः । कीदृशैः । गान्धर्वायाः सुरतकलहे योद्दामता प्रागल्भ्यं तस्या वावदूकैः प्रख्यापकैः । कथं तस्यां वावदूकतेति चेत्तत्राह—**क्लान्तेत्यादि** । प्रकटार्थः ॥

गोवर्धननिवासमस्याष्टकस्य पाठात्फलमाह—

यस्तुष्टात्मा स्फुटमनुपठेच्छ्रद्धया शुद्धयान्त-
र्मेध्यः पद्याष्टकमचटुलः सुष्ठु गोवर्धनस्य ।
सान्द्रं गोवर्धनधरपदद्वन्द्वशोणारविन्दं
विन्दन्प्रेमोत्करमिह करोत्यद्रिराजे स वासम् ॥ ९ ॥

**य इति** । यो जनः श्रद्धया पद्याष्टकमनुपठेत् । अन्तर्मेध्यः पवित्रचित्तः । अचटुलः कृतासनः सन् । स गोवर्धनधरस्य कृष्णस्य पदद्वन्द्वशोणारविन्दं सान्द्रं प्रेमोत्करं विन्दन्नद्रिराजे वासं करोति मदाशिषा तत्र वासं विन्दतु । इति श्रीगिरीन्द्रवासानन्ददं नाम द्वितीयं गोवर्धनाष्टकं व्याख्यातम् ॥

---

श्रीवृन्दावनाष्टकम् ।

नमः श्रीवृन्दावनाय ।

क्षमस्व मन्तून्मम देवि देहि स्वस्मिन्निवासं कृपयार्द्रितासि ।
वृन्दाटवी(वि)प्रीणनकारणं ते स्तोत्रं पवित्रं विशृणोमि भक्त्या ॥

श्रीवृन्दावनं स्तौति—मुकुन्देत्यादिना ।

मुकुन्दमुरलीरवश्रवणफुल्लहृद्वल्लवी-
कदम्बककरम्बितप्रतिकदम्बकुञ्जान्तरा ।
कलिन्दगिरिनन्दिनीकमलकन्दलान्दोलिना
सुगन्धिरनिलेन मे शरणमस्तु वृन्दाटवी ॥ १ ॥

**मुकुन्देति** । वृन्दाटवी मे शरणमस्तु । शीर्यन्ते दुःखान्यस्मिन्निति व्युत्पत्तेर्मूलाविद्यापर्यन्तानां दुःखानां विनाशिनी भूयादित्यर्थः । निवासस्थानमस्त्वित्यपरे । कीदृशी ।

मुकुन्दस्य मुरलीरवश्रवणेन फुल्लानि हृन्दि यासां तादृशीनां बल्लवीनां यानि कदम्बानि वृन्दानि तैः करम्बितानि युक्तानि प्रतिकदम्बकुञ्जान्तराणि निखिलनीपनिकुञ्जमध्यानि यस्याः सा। पुनः कीदृशी। अनिलेन सुगन्धिः सौरभ्यवती। कीदृशेन। कलिन्दगिरिनन्दिन्याः श्रीयमुनाया यानि कमलकन्दलानि पद्मवृन्दानि तान्यान्दोलयतीति तेन। इति मन्दसौगन्ध्यशैत्यशालित्वं व्यञ्जितम्॥

विकुण्ठपुरसंश्रयाद्विपिनतोऽपि निःश्रेयसा-
त्सहस्रगुणितां श्रियं प्रदुहती रसश्रेयसीम्।
चतुर्मुखमुखैरपि स्पृहिततार्णदेहोद्भवा
जगद्गुरुभिरग्रिमैः शरणमस्तु वृन्दाटवी॥ २॥

**विकुण्ठेति**। विकुण्ठपुरसंश्रयात्परमव्योम्नि स्थितान्निःश्रेयसाख्याद्विपिनतः सकाशात् सहस्रगुणितां रसश्रेयसीं श्रियं पूरयन्ती। दास्यसख्यवात्सल्यमधुररतिनिष्पन्नैश्चतुर्भिर्भक्तिरसैः श्रेष्ठां श्रियमानन्दसंपदमित्यर्थः। निःश्रेयसे वैकुण्ठवने तु शान्तिदास्यरतिनिष्पन्नौ द्वौ रसौ। मधुरस्तु दुर्लक्ष्यरति, ततो वित्तोषो महान्, तस्मात्तद्रतिचतुष्टययोग्योद्दीपनतायै श्रीकृष्ण एव स्वसंकल्पशक्त्यानादितस्तादृग्वनतयास्तीति ज्ञायते 'पञ्चयोजनमेवास्ति वनं मे देहरूपकम्' इत्यादिकाद्बृहद्गौतमीये श्रीकृष्णवाक्याच्च। अत एव चतुर्मुखमुखैर्जगद्गुरुभिरपि स्पृहितो वाञ्छितस्तार्णदेहोद्भवस्तृणजन्म यस्यां सा। तत्र चतुर्मुखः—'तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्' इत्यादि। उद्धवश्च—'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्' इत्यादि॥

सर्वर्तुकीपुष्पादिशोभां वर्णयन्विशिनष्टि—

अनारतविकस्वरव्रततिपुञ्जपुष्पावली-
विसारिवरसौरभोद्गमरमाचमत्कारिणी।
अमन्दमकरन्दभृद्विटपिवृन्दवन्दीकृत-
द्विरेफकुलवन्दिता शरणमस्तु वृन्दाटवी॥ ३॥

**अनारतेति**। अनारतमनिशं विकस्वराणां विकसनशीलानां व्रततिपुञ्जानां लतासमूहानां याः पुष्पावल्यस्ताभ्यो विसारीणि प्रसरणशीलानि यानि वराणि निःश्रेयसवनानुपलब्धानि सौरभाणि तेषामुद्गमेन रमायाः श्रीदेव्याश्चमत्कारिणी विस्मयजनिका। 'सततेऽनारताश्रान्तसंततताविरतानिशम्' इत्यमरः। अत एव वैकुण्ठाटवीविलासं विहाय रमा तल्लोभेन व्रजे निवासं चकमे इति व्यज्यते। 'यद्वाञ्छया श्रीललनाचरत्तपः' इत्यादौ। अमन्दानुत्तमान्मकरन्दान्बिभ्रति यानि विटपिवृन्दानि तरुज(जा)लानि तैर्बन्दीकृतानि स्तावकतां नीतानि यानि द्विरेफकुलानि भृङ्गसमूहास्तैर्वन्दिता गुञ्जन्भ्र(द्भ्र)मणव्याजेन स्तुता प्रणता चेत्यर्थः॥

अथ स्वयं भगवता सराधेन हरिणा सनाथतया वैशिष्ट्यं दर्शयति—क्षणद्युतीत्यादिना ।

क्षणद्युतिघनश्रियोर्व्रजनवीनयूनोः पदैः
सुवल्गुभिरलंकृता ललितलक्ष्मलक्ष्मीभरैः ।
तयोर्नखरमण्डलीशिखरकेलिचर्योचितै-
र्वृता किशलयाङ्कुरैः शरणमस्तु वृन्दाटवी ॥ ४ ॥

**क्षणेति** । व्रजनवीनयूनोः श्रीराधागोविन्दयोः पदैश्चरणैरलंकृतेत्यन्वयः । कीदृशयोः । क्षणद्युतिघनयोर्विद्युन्मेघयोरिव श्रीः शोभा ययोः । पदैः कीदृशैः । सुवल्गुभिरतिसुन्दरैः । ललितानि यानि लक्ष्माणि क्रमाच्छत्रादीन्यर्धचन्द्रादीनि चोनविंशतिस्तैर्लक्ष्मीभरः शोभातिशयो येषां तैः । पुनः कीदृशी । किशलयैरङ्कुरैश्च वृता । कीदृशैः । तयोर्व्रजनवीनयूनोर्नखरमण्डलीशिखराणां या केलिचर्यावचयलक्षणा तस्यामुचितैर्योग्यैः ॥

नित्यताभ्यामधिष्ठिततया वैशिष्ट्यं दर्शयति—

व्रजेन्द्रसखनन्दिनीशुभतराधिकारक्रिया-
प्रभावजसुखोत्सवस्फुरितजङ्गमस्थावरा ।
प्रलम्बदमनानुजध्वनितवंशिकाकाकली-
रसज्ञमृगमण्डला शरणमस्तु वृन्दाटवी ॥ ५ ॥

**व्रजेन्द्रेति** । व्रजेन्द्रसखस्य श्रीवृषभानोर्नन्दिनी श्रीराधा तस्याः शुभतरा(र)याऽधिकारक्रियावृन्दया सख्या सहस्रैर्वनदेवीभिर्निषेवितयानुशिष्टिततत्प्रभावजाभ्यां सुखोत्सवाभ्यां स्फुरिताः सोल्लासा जङ्गमाः स्थावराश्च यस्यां सा । प्रलम्बदमनानुजेन कृष्णेन ध्वनिता या वंशिका तस्याः काकलीरसं जानन्ति तादृशानि मृगमण्डलानि यस्यां सा । 'काकली तु कले सूक्ष्मे' इत्यमरः । तथा च नित्यप्रहृष्टस्तवो(तयो)पेतेति ॥

पूर्वोक्तमेव नित्यतदा(नित्यता)धिष्ठितत्वं स्फुटयति—

अमन्दमुदिराम्बुदाभ्यधिकमाधुरीमेदुर-
व्रजेन्द्रसुतवीक्षणोन्नटितनीलकण्ठोत्करा ।
दिनेशसुहृदात्मजाकृतनिजाभिमानोल्लस-
ल्लताखगमृगाङ्गना शरणमस्तु वृन्दाटवी ॥ ६ ॥

**अमन्देति** । अमन्दानामुत्तमानां मुदिराणां 'घनजीमूतमुदिर–' इत्याद्यमरोक्तेर्मेघानामम्बुदादप्यभ्यधिका या माधुरी निबिडातिश्यामच्छविस्तया मेदुरस्य चिक्कणस्य व्रजेन्द्रसुतस्य गोविन्दस्य वीक्षणादुन्नटिता नीलकण्ठोत्करा मयूरवृन्दानि यस्याः सा । दिनेशः सूर्यस्तत्सुहृद्वृषभानुस्तदात्मजया श्रीराधया कृतो यो निजाभिमानो वृन्दाटवीयं ममैवेत्या-

त्मसात्करणं तेनोल्लसन्त्यो लताः खगमृगानामङ्गनाः खग्यो मृग्यश्च यस्यां सा। स्त्रीराज्ये स्त्रीणां प्रहर्षादिति भावः॥

अथ रासक्रीडाधारतया वैशिष्टयमाह—

अगण्यगुणनागरीगणगरिष्ठगान्धर्विका-
मनोजरणचातुरीपिशुनकुञ्जपुञ्जोज्वला।
जगत्रयकलागुरोर्ललितलास्यवल्गत्पद-
प्रयोगविधिसाक्षिणी शरणमस्तु वृन्दाटवी॥ ७॥

**अगण्येति**। अगण्यगुणेभ्यो नागरीगणेभ्यो गरिष्ठाया गान्धर्विकायाः श्रीराधाया या मनोजरणचातुरी स्मराहवनिपुणता तत्पिशुनैस्तत्सूचकैः कुञ्जपुञ्जैरुज्ज्वला विभ्राजमाना। जगत्रयकलागुरोर्निखिलकलातिनिपुणस्य श्रीगोविन्दस्य ललिते मनोहरे लास्ये वल्गतोश्चपलयोः पदयोश्चरणयोर्ये प्रयोगविधयोऽर्पणप्रकारास्तेषां साक्षिणी वक्ष्मी चेत्यर्थः॥

वरिष्ठहरिदासतापदसमृद्धगोवर्धना
मधूद्वहवधूचमत्कृतिनिवासरासस्थला।
अगूढगहनश्रियो मधुरिमव्रजेनोज्वला
व्रजस्य सहजेन मे शरणमस्तु वृन्दाटवी॥ ८॥

**वरिष्ठेति**। वरिष्ठेन सर्वश्रेष्ठेन हरिदासतापदेन भगवत्कैङ्कर्यवस्तुना समृद्धो गोवर्धनो यस्यां सा। तादृशो गिरिर्यस्याः प्रतीक इति भावः। मधूद्वहवधूनां व्रजाङ्गनानां याश्चमत्कृतय आश्चर्यताबुद्धयस्तासां निवासा रासस्थलं यस्यां सा। नित्यं तदनुभवन्ती तासां चमत्कारकरणान्नित्यनूतनविचित्रकान्तिमत्त्वं व्यज्यते। मधूद्वहवध्वो रुक्मिणीभामाद्यास्तासां भर्तुर्मुखादुपश्रुतमहिमभराणां चमत्कार इत्यन्ये। पुनः कीदृशी। व्रजस्य सहजेन मधुरिमव्रजेनोज्ज्वला। कीदृशस्य। अगूढा प्रकटा गहनानां वनानां श्रेयो यस्मिंस्तस्य। परितोऽतिरम्यया वनश्रेण्या वेष्टितेत्यतिगभीरत्वं व्यज्यते॥

अष्टकपाठफलमाह—

इदं निखिलनिष्कुटावलिवरिष्ठवृन्दाटवी-
गुणस्मरणकारि यः पठति सुष्ठु पद्याष्टकम्।
वसन्व्यसनमुक्तधीरनिशमत्र सद्वासनः
स पीतवसने वशी रतिमवाप्य विक्रीडति॥ ९॥

**इदमिति**। इदं पद्याष्टकं यः सुष्ठु पठति स पीतवसने सराधे कृष्णे रतिमवाप्य विक्रीडति। मदाशे(शि)षेति शेषः। कीदृशं तत्। निखिलाभ्यो नन्दनादिनिःश्रेयसान्ताभ्यो निष्कुटावलिभ्यो वरिष्ठाया वृन्दाटव्या गुणस्मरणं कारयतीति तत्। पाठके गुणान्तराणि

विदधानस्तं विशिनष्टि—अनिशं सर्वदात्र वृन्दाटव्यां वसन् व्यसनेन पापाचारेण मुक्ता धीर्यस्य सः। मनसापि पापमकुर्वन् शास्त्रपरिशीलनादिशुभकामनावान्। वशी विजितेन्द्रियः॥ इति श्रीवृन्दाटव्यष्टकं व्याख्यातम्॥

---

श्रीनामाष्टकम्।

श्रीकृष्णनाम्ने नमः।

नामाभासेनापि ते योगिमृग्या मुक्तिः स्यादित्याहुराम्नायवाचः।
त्वद्याख्याने मह्यमीश प्रदद्याः स्वस्मिन्भक्तिं नाधिकं तत्प्रयाचे॥

भगवन्नाम स्तौति—निखिलेत्यादिभिः।

निखिलश्रुतिमौलिरत्नमालाद्युतिनीराजितपादपङ्कजान्त।
अपि मुक्तकुलैरुपास्यमानं परितस्त्वां हरिनाम संश्रयामि॥ १॥

**निखिलेति**। हे हरिनाम, त्वामहं परितः सर्वभावेन संश्रयामि। निखिलाः श्रुतिमौल्य उपनिषदः सा(स्ता) एव रत्नमालास्तासां द्युतिभिर्नीराजितः पादपङ्कजयोरन्तो नखरूपा सीमा यस्येति वाच्ये न सहाभेदादिदं बोध्यम्। 'यत्र मूर्तिधराः कलाः' इति स्मरा(र)णान्मूर्तानां निखिलानां श्रुतीनां वेदानां मौलिषु शिरःसु या रत्नमालास्ताभिरित्यपरे। श्रुतयश्च सर्वे वेदा यत्पदमानतीत्याद्याः। तात्पर्येण पुमर्थभावेन ताभिः प्रतिपाद्येति भावः। त्वां किंभूतमित्याह—**मुक्तकुलैरप्युपास्यमानमिति**। एतत्साम गायन्नास्ते निवृत्ततर्षैरुपगीयमानात्। 'एतन्निर्विद्यमानानामिच्छतामकुतोभयम्। योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम्॥' इत्यादि श्रुतिस्मृतिभ्यः। योगिनां भगवद्योगभाजां मुक्तानामित्यर्थः॥

ननु दुरिताक्रान्ताय ते कथं संश्रयं दास्यामि तत्राह—

जय नामधेय मुनिवृन्दगेय जनरञ्जनाय परमक्षराकृते।
त्वमनादरादपि मनागुदीरितं निखिलोग्रतापपटलीं विलुम्पसि॥ २॥

**जयेति**। हे नामधेय, हे मुनिवृन्दगेय, त्वं जय। दुरितराशिनिर्दाहकतालक्षणं स्वोत्कर्षमाविष्कुर्विति भावः। अनादरात् सांकेत्यपारिहासादिनापि मनागल्पमेवोदीरितमुच्चारितं सत् निखिलानामुग्रतापानां लिङ्गदेहपर्यन्तानां पटलीं विलुम्पसि नाशयसि। 'सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥ परिहासोपहासाद्यैर्विष्णोर्नाम गृणन्ति ये। कृतार्थास्तेऽपि मनुजास्तेभ्योऽपीह नमो नमः॥ प्रमादादपि संस्पृष्टो यथानलकणो दहेत्। तथोष्ठपुटसंस्पृष्टं हरिनाम दहेदघम्॥' इत्यादि स्मृतिभ्यः। तथा च स्वप्रभावं स्मृत्वा मां पुनीहि, त्वद्यशःप्रचारकोऽहमिति भावः। हे जनरञ्जनाय परमक्षराकृते इति दयालुत्वं व्यज्यते। परमक्षरेत्यत्र शकन्ध्वादित्वाट्टेः पररूपत्वम्। 'आस्य जानन्तो नाम चिद्विवक्त न महस्ते विष्णो सुमतिं भजामहे' इति श्रुतेः। 'सकलनिगमवल्लीसत्फलं चित्स्वरूपम्' इति स्मरणाच्च चिदात्मकाक्षराकारं नाम यथा तामितः कृष्णस्य चिद्रूपस्य हंसशूकरादिवपुश्चिद्रूपमेव तद्वत्॥

न च नामाभासः पापान्येव दग्ध्वा निवर्तते, अपि तु स्ववाच्ये भक्तिं न प्रकाशयतीत्याह—

यदाभासोऽप्युद्यन्कवलितभवध्वान्तविभवो
दृशं तत्त्वान्धानामपि दिशति भक्तिप्रणयिनीम् ।
जनस्तस्योदात्तं जगति भगवन्नामतरणे
कृती ते निर्वक्तुं क इह महिमानं प्रभवति ॥ ३ ॥

**यदिति** । हे भगवन्नामतरणे कृष्णनामसूर्य, इह जगति कः कृती पण्डितो जनस्त उदात्तम[त्यु]च्चं महिमानं निर्वक्तुं प्रभवति । न कोऽपीत्यर्थः । कुत इति चेत्तत्राह—यस्य तवाभासोऽस्माकं [स्तु]त्यादिभिरुच्चारणं कलि(कवलि)तो यस्तो भवध्वान्तविभवः संसृतितिमिरसंपद्येन तादृशः सन् तत्त्वान्धानां तत्त्वदृष्टिहीनानामपि भक्तिप्रणयिनीं कृष्णभक्तिविषयां दृशं प्रज्ञां दिशत्यर्पयतीति तवेदृशं(श)महिम्नि विज्ञोऽपि संश्रयी तं विना त्वत्तत्त्वविदुपदेशादतो वि(नि)र्वक्तुं न प्रभवतीति । एतत्पद्यार्थश्च 'ॐ आस्य' इति श्रुतौ विस्फुटः । आ ईषत्सांकेत्यादिभिर्नामनुनतां विष्णुविषयकसुमतिलाभाभिधानात् ॥

अथैकान्ति(न्त)भावेनोपासितं नाम भोगैकविनाश्यमपि प्रारब्धं विनैव भोगाद्विनाशयतीत्याह—

यद्ब्रह्मसाक्षात्कृतिनिष्ठयापि विनाशमायाति विना न भोगैः ।
अपैति नामस्फुरणेन तत्ते प्रारब्धकर्मेति विरौति वेदः ॥ ४ ॥

**यदिति** । यया ब्रह्मणः परमात्मनः साक्षात्कृतिः स्यात्, तयाप्यविच्छिन्नतैलधारावत्प्रवृत्तया निष्ठया ब्रह्मचिन्तया यत्प्रारब्धं कर्म भोगैर्विना न विनाशमायाति हे नाम, तत्ते स्फुरणेन जिह्वादौ भीसने(षणे)नैवापैति दूरीभवति विश्लिष्यतीति वेदो विरौति । गदतीत्यर्थः । ब्रह्मविद्ययाभ्युदितया संचितक्रियमाणयोः पुण्यपापयोर्विनाशाश्लेषौ भवतः । 'उभे इहैवेष एते तरत्यमृतः साध्वसाधनी' इति श्रुतेः । फलदानाय प्रवृत्ते पुण्यपापे प्रारब्धं कर्मोच्यते । तत्तु भोगेनैव क्षीयते, न तु ब्रह्मविद्यया । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतेः । एवमेव निर्णीतं भगवता सूत्रकारेण—'तदधिगम उत्तरपूर्वयोरश्लेषविनाशौ तद्व्यपदेशात् । इतरस्याप्येवमसंश्लेषः । पाते तु अनारब्धकाय एव तु पूर्वे तदवधेः' इति । एषामर्थश्च—'तदधिगमे ब्रह्मानुभवे सत्युत्तरपूर्वयोः क्रियमाणसंचितयोरघयोरश्लेषविनाशौ स्तः । तद्व्यपदेशाच्छ्रुतौ तथोक्तेः' इति । इतरस्य पुण्यस्याप्येवमसंश्लेषो विनाशश्च देहस्य प्रारब्धरचितस्य पाते तु मोक्षः स्यादिति पूर्वेऽनारब्धकार्ये संचिते पापपुण्ये विद्यया विनाश्यतो न त्वारब्धकार्ये च ते तन्नाशस्य भोगावधित्वादिति । तच्च प्रारब्धं कर्म नामोच्चारणादपगच्छतीति स्यादिति नाम । 'स एव सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वे पाप्घ(प्म)भ्यो य एवं वेद' इति श्रुतेः । अशेदिति भगवन्नामोपासनया सर्वपापापगमोक्तेः प्रारब्धस्याप्यपगमः स्पष्टः । इत्थमभिप्रेत्य शाट्यायनिनः पठन्ति—'तस्य

पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्’ इति । कौषीतकिनश्च—‘तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्’ इति । एवमाह भगवान्सूत्रकारः—‘अतोऽन्यापि ह्येकेषामुभयोः’ इति । अस्यार्थः—एकेषां नामैकान्तिनां परमानुरागिणां विनैव भोगात् प्रारब्धयोः सुकृतदुष्कृतयोरश्लेषो भवतीति स्वीकार्यम् । हि यस्मात्तस्य तावदेव चिरमित्यादिकायाः प्रारब्धं भोगनाश्यमिति वदन्त्याः श्रुतेरन्या तस्य पुत्रादायमित्यादिका तदर्थिका श्रुतिरस्ति’ इति ॥

भक्तेभ्यो विचित्रानन्दान्प्रदातुं बहुरूपतयाविर्भावादि(द)तिकरुणमिदं नामेति भावेनाह—

अघदमनयशोदानन्दनौ नन्दसूनो
कमलनयनगोपीचन्द्र वृन्दावनेन्द्राः ।
प्रणतकरुणकृष्णावित्यनेकस्वरूपे
त्वयि मम रतिरुच्चैर्वर्धतां नामधेय ॥ ५ ॥

**अघेति** । हे नामधेय, एवमवितर्क्यमहिम्नि त्वयि मम रतिर्वर्धताम् । त्वयि कीदृशि । हे अघदमन, हे यशोदानन्दन, हे नन्दसूनो, इत्येवमादिविधयानेकस्वरूपेऽष्टोत्तरशततां प्राप्त इत्यर्थः ॥

अतिकरुणत्वं ते स्फुटमस्ति, अतस्त्वामेव संश्रयामीति भाववानाह—

वाच्यं वाचकमित्युदेति भवतो नाम स्वरूपद्वयं
पूर्वस्मात्परमेव हन्त करुणं तत्रापि जानीमहे ।
यस्तस्मिन्विहितापराधनिवहः प्राणी समन्ताद्भवे-
दास्येनेदमुपास्य सोऽपि हि सदानन्दाम्बुधौ मज्जति ॥ ६ ॥

**वाच्यमिति** । हे नाम, तव वाच्यं वाचकमिति स्वरूपद्वयमुदेति चकास्ति । वाच्यं विभु चैतदानन्दात्मो विग्रहः परेशः । वाचकं कृष्णगोविन्देत्यादिको वर्णप्रचयः । तत्र पूर्वस्माद्वाच्यात्ताद्विग्रहात्परमेव तादृग्वर्णप्रचयरूपं वाचकमेव वयं करुणं जानीमहे । कुत इति चेत्तत्राह—यः प्राणी तस्मिन्वाच्यस्वरूपे समन्ताद्विहितापराधनिवहः कृतापचारवृन्दो भवेत्, सोऽपीदं वाचकस्वरूपमास्येनोपास्य मुखेनोच्चार्य विनष्टतन्निवहः सन् सदानन्दाम्बुधौ भगवत्प्रेमसुखे मज्जति कृतार्थो भवतीति । ‘मम नामानि लोकेऽस्मिञ्श्रद्धया यस्तु कीर्तयेत् । तस्यापराधकोटीस्तु क्षमामे(म्ये)व न संशयः ॥’ इति स्मरणात् । नामनामिनोरद्वैतं तु नामचिन्तामणिः । कृष्णचैतन्यरसविग्रहः । ‘पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः’ इति स्मरणात् ॥

ननु नाम्बय(?)राधा द्वात्रिंशन्नाम्ना विनश्येयुर्नामापराधाः साधुनिन्दादयो दशकेन विनश्येयुरिति चेत्तेऽपि नाम्नैवेति भाववानाह—

सूदिताश्रितजनार्तिराशये रम्यचिद्घनसुखस्वरूपिणे ।

नाम गोकुलमहोत्सवाय ते कृष्ण पूर्णवपुषे नमो नमः ॥ ७ ॥

सूदितेति । हे नाम, हे कृष्ण, ते तुभ्यं नमो नमः । ते कीदृशायेत्याह—सूदितो विनाशित आश्रितजनानामार्तिराशिर्नामापराधान्तो येन तस्मै । 'जाते नामापराधे तु प्रमादेन कथंचन । सदा संकीर्तयन्नाम तदेकशरणो भवेत् ॥ नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि यत् ॥' इति स्मरणात् । वृत्तानपराधान्क्षमय । तासां प्रति केभ्यो विनिवृत्तेन सर्वदा प्रयुक्तानि जप्तानीति बोध्यम् । 'अपराधविमुक्तो हि नाम्नि यत्नं समाचरेत्' इति स्मरणात् । पुनस्ते कीदृशाय । रम्यं चिद्घनं यत्सुखं तत्स्वरूपिणे । नामचिन्तामणिः कृष्ण इत्यादेः । पुनस्ते कीदृशाय । गोकुलस्य महानुत्सवो यस्मात्तस्मै । पूर्णवपुषे व्यापकाय ॥

अथ नाम्नः स्वस्मिन्स्फूर्तिं प्रार्थयति—

नारदवीणोज्जीवन सुधोर्मिनिर्यासमाधुरीपूर ।

त्वं कृष्णनाम कामं स्फुर मे रसने रसेन सदा ॥ ८ ॥

नारदेति । नारदस्य वीणामुज्जीवयति चेतयतीति हे तादृश । सुधोर्मिनिर्यास इव माधुरीपूरो यस्य । हे कृष्णनाम, त्वं रसेनानुरागेण मे रसने स्फुर । कामं यथेष्टम् । त्वद्ग्रहणेन मे सामर्थ्यं त्वमेव मज्जिह्वायां विराजस्वेत्यर्थः । मुख्यत्वात्कृष्णेति नाम्नः स्फूर्तिरन्तेऽभ्यर्थिता । 'नाम्नां मुख्यतरं नाम कृष्णाख्यं मे परंतप' इति वचनात् । अष्टकपाठफलमष्टकादेव व्यक्तम्, अतस्तन्नोक्तम् । इति श्रीनामाष्टकं व्याख्यातम् ॥

**श्रीरूपदेवः** करुणैकसिन्धुः स्तवालिमेतां यदि नाकरिष्यत् ।
भक्ता यथावद्व्रजराजसूनोर्नावागमिष्यन्गुणरूपलीलाः ॥

इति स्तवमाला संपूर्णा ।

---

# वर्षसमाप्तीची सूचना.

ईशकृपेनें आम्हीं आरम्भिलेल्या कार्यास आज १७ वर्षें पुरीं झालीं. या सतराव्या वर्षांत संस्कृत लघुकाव्यें—तैलङ्गव्रजनाथविरचित (१) मनोदूत (सटीक), गोस्वामिजनार्दनभट्टप्रणीत (२) वैराग्यशतक, काश्मीरकबिह्लणकविराजविरचित (३) बिह्लणकाव्य; महाकाव्यें—काश्मीरिकमहाकविश्रीक्षेमेन्द्रविरचित (४) रामायणमञ्जरी, श्रीरूपदेवविरचित (५) स्तवमाला (श्रीजीवदेवविरचित भाष्यसमेत); नाटक—श्रीरूपदेवगोस्वामिविरचित (६) विदग्धमाधव (सटीक); चम्पू—श्रीसोमदेवसूरिविरचित (७) यशस्तिलकचम्पूकाव्य (श्रीश्रुतसागरसूरिकृत व्याख्येसमेत) (उत्तरखण्ड ४–८ आश्वास); आख्यायिका—श्रीधनपालविरचित (८) तिलकमञ्जरी; सुभाषितग्रन्थ—श्रीअमितगतिविरचित (९) सुभाषितरत्नसंदोह; प्राचीनलेखमाला—(लेख १७०–१७३); इतके ग्रन्थ पुरे केले. राहिलेले कविकर्णपूरविरचित चैतन्यचन्द्रोदय, श्रीमत्पिङ्गलाचार्यविरचित छन्दःशास्त्र (श्रीमद्भट्टहलायुधप्रणीत मृतसंजीविन्याख्यवृत्तिसमेत), श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित सरस्वतीकण्ठाभरण (श्रीरत्नेश्वरविरचित रत्नदर्पणाख्यव्याख्येसमेत), श्रीहंसविजयगणिसमुच्चित अन्योक्तिमुक्तावली, हे पुढील सालांत खलास होतील. शिवाय सुरस व चमत्कारिक काव्यें, नाटकें वगैरे पुढील सालांत बरींच येतील.

या वर्षांत आम्हांस ज्या ज्या सद्गृहस्थांनीं पुस्तकें वगैरे देण्याचें साह्य केलें, त्या सर्वांचे आम्ही फार आभारी आहों.

सरते शेवटीं ज्या सर्वशक्तिमान् प्रभूच्या कृपेनें आम्हांस आमचा क्रम आजपर्यंत अव्याहत चालवितां आला त्याचे उपकार मानून आणि अशीच लोकोपयोगी सेवा करण्यास आम्हांस उत्तरोत्तर अधिक इच्छा व सामर्थ्य द्यावें असें त्याजवळ मागणें मागून पुढील वर्षाचा मार्ग क्रमण करण्यास लागतों.

# ब्रह्मसूत्रशांकरभाष्यम् ।

## रत्नप्रभा–भामती–आनन्दगिरीय ( न्यायनिर्णय ) व्याख्यात्रयोपेतम् ।

श्रीमद्वेदव्यासमहर्षिभिर्धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु प्रकृष्टतमचरमपुरुषार्थसाधनीभूतब्रह्मविद्याप्रतिपादकश्रुतिशिरसामुपनिषदां याथार्थ्यावगमाय चतुरध्याय्यात्मकं ब्रह्ममीमांसाशास्त्रं प्राणायीति न परोक्षं विदुषाम् । तथा तस्याद्वैतमतानुसारि श्रीमच्छंकरभगवत्प्रणीतं भाष्यमपि नास्त्यविश्रुतं कस्यापि । एवं चात्र ग्रहीतॄणां गौरवबुद्ध्युत्पादनं नामनिर्देशवर्जं न किंचिदपि कथनमपेक्षते । तदिदं ब्रह्मसूत्रशांकरभाष्यमस्माभिः, रत्नप्रभा-भामती-आनन्दगिरीय( न्यायनिर्णय )व्याख्यासहितं तथा मुद्रितं यथाध्येतुर्भाष्याधोभाग एव तावतो भाष्यस्य व्याख्यात्रितयमपि सुलभदर्शनं भवेत् । किंच प्रत्यधिकरणादिमसूत्रस्याधस्तात्तत्तदधिकरणार्थसंग्राहकाः श्रीमद्भारतीतीर्थमुनिप्रणीत-वैयासिकन्यायमाला-श्लोकाः स्पृहणीयतरातिसूक्ष्माक्षरैरुपन्यस्ताः । तथा भाष्यगतानामुपनिषन्मन्त्रादीनां मूलस्थानबोधाय तत्तदुपनिषदादिग्रन्थनामनिर्देशपूर्वकमध्यायखण्डादिबोधकसंख्यापि तत्र तत्रार्धचन्द्राकारचिह्नयोर्मध्ये प्रदर्शिता । अन्ते च सूत्राणां वर्णानुक्रमकोशो निबद्धः । आदौ भाष्यस्थविषयाणामधिकरणविभागेनानुक्रमश्च प्रदर्शितः । मूल्यं रू. ८ मार्गव्ययः ॥=

---

# श्रीमद्भागवतम् ।

## (चूर्णिकाटिप्पणीसहितम् ।)

इदं पुस्तकमपूर्वमेव विद्वद्द्वारा निर्माय मुद्रितमस्ति । अस्मिन्सर्वेषामपि श्लोकानामर्थः स्वल्पैः शब्दैर्विशदीकृतोऽस्ति । तथा च विषमस्थलेषु श्रीधरव्याख्यानुकूलं टिप्पणमपि तत्र तत्र योजितं तेन सप्ताहपारायणकर्तॄणामिदमतीवोपकाराय स्यात् । रफ मू. रू. ५, ग्लेजपत्राणि मू. रू. ६, मार्गव्ययः १ रू.

तुकाराम जावजी.

निर्णयसागरमुद्रणालयाधिपतिः–मुम्बई.

